दयानन्दमहाविद्यालय-संस्कृतग्रन्थमाला सं० १७

अप्रकाशितचरं

पश्चिमोत्तरशाखीयं

# वाल्मीकीय-रामायणम्

तत्र चैतत्

## किष्किन्धा-काण्डम्

एम्० ए०, एम्० ओ० एल्० इत्युपाधिधारिणा

विश्वबन्धुशास्त्रिणा

नानादर्शपुस्तकाधारेण संशोध्य, नैकविधोपयोगि-
सूचीनिवहेन चोपसंयोज्य
सम्पादितम्

लवपुरम्

१९९३ वि०



The D. A-V. College Sanskrit Series No. 17

# THE RAAMAAYANA

OF

# VAALMEEKI

( in the North—Western Recension )

---

## THE KISHKINDHAA-KAANDA

---

*Critically edited for the first time from Original Mss. and supplied with Indexes.*

by

VISHVA-BANDHU SHASTRI, M. A., M. O. L.

---

LAHORE.

1936.



---

# दयानन्दमहाविद्यालय-संस्कृतग्रन्थमाला

दयानन्दब्राह्ममहाविद्यालयाचार्यपदप्रतिष्ठितपूर्वेण दयानन्दमहा-
विद्यालयीयानुसन्धानालये विश्वेश्वरानन्दवैदिकानुसन्धानालये
चाधिष्ठिताध्यक्षपदेन, एम्० ए०, एम्० ओ० एल्०
इत्युपाधिधारिणा

**विश्वबन्धुशास्त्रिणा**

बहुभिर्विद्वद्भिः सङ्गत्य
सम्पादिता

---

तस्यां चायं
**सप्तदशो ग्रन्थः**

लवपुरम्
१९९३



# THE D. A.-V. COLLEGE

## SANSKRIT SERIES.

**Edited**

in conjunction with other scholars

BY

**VISHVA-BANDHU SHASTRI, M. A., M. O. L**

Director, D. A.-V. College Research Deptt. and
Vishveshvaraanand Vedic Research Institute, formerly,
Principal, Dayaanand Braahma Mahaavidyaalaya.

**Volume Seventeen.**

LAHORE.
1936.

---

# Contents (विषयानुक्रमणी)



# Abbreviations ( सङ्केताः )

उ=उत्तरार्धम=( 2nd half of a verse )

तु=तुलना कर्त्तव्या (Compare)

दा=दक्षिणशाखीयं वाल्मीकीय-रामायणम ( Nirnaya Sagar Press Edition, Bombay 1912 )

पू=पूर्वार्धम=( 1st half of a verse )

वं=वंगशाखीयं वाल्मीकीय-रामायणम (Gorresio's Edition, Paris)

N=Nill=( नास्ति )

†=असंगतं पाठान्तरम

‡=अशुद्धं पाठान्तरम

## FOREWORD.

Last year when the Aarana-kaanda was brought out, it was expected that if a representation would be made, the Provincial Government might favourably consider the question of the renewal of the previously sanctioned subvention for this work. My revered teacher, the late Dr. A. C. Woolner, a genuine lover of Oriental learning as he was, strongly recommended and forwarded the said representation when it was made, but it is to be regretted that nothing came out of it. Meanwhile, a plan had been drawn out to complete the work by bringing out one Kaanda every year. The present volume is the result of assiduously following the same. But it is doubtful if it would be practicable to continue on in this way in the absence of proper financial support from outside.

As regards the scheme followed in the preparation of the Kishkindhaa-Kaanda, it will be noticed that besides the increased measure of care that has been devoted to the choice of the right text, critical material has been supplied in a fuller and more analysed form. All of the variants that have been recorded have been mutually distinguished according as they happen to belong to any one of the following classes:—

(*a*) Those which are mere orthographic aberrations have been marked off by prefixing the sign ‡ to them

(*b*) Those which are syntactically wrong have the sign † placed before them. And, finally,

(*c*) Real variants have been given without any special mark. Among the appendices which have been prepared after the pattern of those given in the previous volume, No. 8 will be found to be a useful addition. No. 10 as it now stands, is meant to serve the purpose of a fairly comprehensive index of important words. The considerable

increase in its bulk is due to the inclusion therein of all such nominal as well as radical bases as may in any way help in the better understanding and appreciation of the text from the linguistic as well as sociological points of view.

The ten Mss. which have been used in the preparation of this volume, may be briefly classified as follows :—

(*a*) कै, ल१, ब,म and श. Of these, श is a continuation of the Ms. प्र as used in the Baala-Kaanda. It sometimes differs from the other members of its class and treads a path all its own. Its readings are generally correct.

(*b*) रा, भ and च. In the previous volumes, रा generally agreed with कै, but it does not do so here.

(*c*) अ and ल२. अ now and then starts agreeing with रा, भ and च. ल२ of this volume is the same as ला of the previous one.

Main assistance in the production of this volume has been given by the Shastris of the Department, namely, Pandits Prema Nidhi, Pitambara and Vidya Nidhi. Pandit Bhima Deva Shastri, M A., M.O.L. has been in charge of the general supervision of the work as it has been seen through the press. His assistants of the Vishveshvaraananda Vedic Research Institute, Pandits Raghunath Chandra Shastri, Durga Datta Shastri, Girdhari Lal Shastri, Jagadisha Chandra Vidyaavaachaspati and Balkrishna Vidyaavaachaspati have been rendering help in the matter of copying, proof-reading and arrangement of the appendices. I am grateful to them all for this co-operation.

LAHORE,
*November* 10, *1936.*

**Vishva-Bandhu Shastri.**

१ पू ] तौ तु दृष्ट्वा महात्मानौ भ्रातरौ रामलक्ष्मणौ ।
२ उ ] वरायुधधरौ वीरौ सुग्रीवः प्लवगाधिपः ॥१॥ [१
३ पू ] न चं चक्रे मनः स्थातुं वीक्षमाणैस्तु धन्विनौ ।
N ] कपिः परमभीतस्तु चिन्तां वा मनसा दधे[4] ॥२॥ [३
४ उ ] स चिन्तयित्वा भीतात्मा विमृश्य च पुनः पुनः । [४ पू
५ पू ] त्यक्तुकामो गिरेः शृङ्गं यत्र रामः स्थितोऽभवत् ॥३॥ [N
६ उ ] ततः स सचिवेभ्यस्तु सर्वमेव यथातथम् ।
शशंस परमोद्विग्नो भ्रातरौ रामलक्ष्मणौ ॥४॥ [५
७ ] एतौ वनमिदं दुर्गं वालिप्रणिहितौ नरौ ।
छद्मना चीरवसनौ प्रचरन्ताविहागतौ ॥५॥ [६

---

१. रा—‡ संदृष्ट्वा ।
२. भ—‡ नावचक्रे ।
३. कै ल$_2$ ब म श—† वीक्ष्यमाणस्तु ध० । ल$_1$—† वीरपाणस्तु ध० । रा भ च—† वीक्ष्यमाणः सुध० ।
४. रा भ च—कपेः परमभीतस्य चित्तं व्यसन (रा-संयत) माददे ।
५. ल$_2$—‡ संचिंत० ।
६. कै अ ल$_1$ ल$_2$ म श भ च—विमृष्य ।
७. ल$_1$ ब श—यत्रायं सुस्थितो० । म—† यत्रायं मुक्तितो० ।
८. कै अ ल$_1$ ल$_2$ ब म श—सचिवैरुक्तः ।
९. ल$_1$—† परमोद्विग्नौ ।
१०. ल$_1$ ब म श—राघवौ ।
११. रा च—चीरवस० ।

८ ] ततः सुग्रीवसचिवा दृष्ट्वा तौ वरवर्णिनौ ।
९ पू ] वेगवन्तो गिरीनन्यान् प्रतिजग्मुर्वनौकसः ॥६॥ [७
११उ] एवमेकायनगताः प्लवमाना गिरेर्गिरिम् । [९ पू
१२पू ] बभंजुर्वै नगांस्तत्र पुष्पितान् दुर्गमाश्रयान् ॥७॥ [१०उ
१६उ] उत्प्लुत्य गिरिशृङ्गाणि मलयस्य वनौकसः ।
१७पू ] मार्जारमृगशार्दूलांस्त्रासयन्तो महाबलाः । [११
संगम्य कपिमुख्येन स्थिताः प्राञ्जलयस्तदा ॥८॥ [१२उ
१८] ततस्तेन सुवित्रस्तं वालिकिल्बिषशंकिनम् ।
उवाच हनुमान् प्राज्ञः सुग्रीवं वाक्यकोविदः ॥९॥ [१३
१९] यस्मादुद्विग्नचेतास्त्वं प्रद्रुतो हरिपुङ्गव ।
तं क्रूरदर्शनं घोरं नैवं पश्यामि वालिनम् ॥१०॥ [१६

---

१. रा—† सचिवैर् ।
२. अ ल$_2$—वरधन्विनौ ।
३. रा भ—वीर्यवंतौ ।
४. रा भ—०गिरीन् ।
५. ल$_1$ ब—०वनगांस्त ।
च—† विभत्सुर्वै ।
६. म—‡ सुगमाश्र० ।
७. च—अतः परमधिकः पाठः—
वेगेनाकंपयन् वृक्षान् वानराः शिखराणि च ।
ततः शाखामृगाः सर्वे प्लवमाना गिरेर्गिरीन् ॥
८. कै अ ल$_1$ ल$_2$ ब म रा भ च—
उत्पत्य ।
९. म—† महाबलः ।
१०. रा भ—अतः परमधिकः पाठः—
ततः सुग्रीवसचिवाः पर्वतेऽथ समाश्रिताः ।
११. म—† संगम्य ।
१२. म—† स्थितः ।
१३. अ ल$_2$—०लयस्तथा । ल$_1$ ब श—०लयस्ततः ।
१४. ल$_2$—† ततस्तान् ।
१५. अ ल$_1$ ल$_2$ ब म श भ च—
सवित्रस्तं ।
१६. अ ल$_2$—वालिना कृतकिल्बिषं ।
रा—‡ (प्रान्तेऽपरहस्तेन) वालिना कृतकिल्बिषी ।
१७. कै च—† वाक्यमब्रवीत् ।
अ ल$_2$—वाक्यमुत्तमं । रा भ—
वाक्यमर्थवत् ।
१८. कै ल$_1$ ल$_2$ ब श—† ०पुंगवः ।
१९. ल$_1$ श—तं रक्ष्यद० । म—तमृक्षद० ।
२०. रा भ च—नेह ।

२०] यस्माद्भयं[1] कृतं नित्यं पूर्वं[2] यत्पापकर्मणः ।
स नेह वाली[3] दुष्टात्मा न ते[4] पश्याम्यहं भयम् ॥११॥ [१६

२१] अहो[5] शाखामृगेन्द्रत्वं[6] पश्यामि तव वानर[7] ।
लघुचित्ततयाऽऽत्मानं विनीतो[8]ऽबुद्धिनिश्चयात्[9] ॥१२॥ [१७

२२] बुद्धिविज्ञान[10]सम्पन्नैरिङ्गितैः सर्वमाचर[11] ।
न ह्यबुद्धीङ्गितो राजा सर्वभूतानि शास्ति हि ॥१३॥ [१८

२३] सुग्रीवस्तु शुभं[12] वाक्यं[12] तत्त्वं[13] बुद्ध्वा हनूमतः ।
२४पू] ततो[14]ऽपि स शुभं[14] वाक्यं[13] हनूमन्तमुवाच[15] ह ॥१४॥ [१९
२५पू] दीर्घबाहू[16] विशालाक्षौ[16] शरकार्मुकधारिणौ । [२०पू
२४उ] तौ दृष्ट्वा च महात्मानौ धन्विनौ विमलौ स्थितौ[17] ॥१५॥ [N
२४पू] कस्य[18] दृष्ट्वा भयं न स्यात्[18] त्वेतौ[19] सुरसुतोपमौ[20] । [२०उ
२५उ] वालिप्रणिहितावेतौ[21] शंकेऽहं[22] पुरुषर्षभौ ॥१६॥

---

१. ल$_{2}$—०द्भयकृतं (हरितालेन पश्चादनुस्वारः परिमार्जितः) ।
भ—०यं च ते ।
२. भ—पूर्वजात् पा० ।
३. कै अ ल$_{1}$ ल$_{2}$ ब म श रा च—वालिर्दु० ।
४. भ—ते न ।
५. ल$_{1}$ ब म श रा—अहं ।
६. कै अ ल$_{1}$ ल$_{2}$ ब म श रा—०मृगेन्द्रत्वां ।
७. ल$_{2}$—वानरः ।
८. म—‡ विनीतिबुद्धि० ।
९. अ ल$_{2}$—नास्ति ।
१०. रा—† बुद्धिर्विज्ञान० ।
ल$_{1}$ म—‡ ०संपन्नै रींगितैः ।
११. च—† ०माचरद् ।
१२. ल$_{1}$ ब—शुभे वाक्ये ।
१३. कै अ—नास्ति । (वाक्यमित्यस्य साम्येन भ्रान्तिरेषा प्रतीयते) ।
१४. भ च—ततः शुभतरं ।
१५. अ—०न्तमवा (वो) चत ।
१६. ल$_{1}$—† बाहुर्वि० ।
म—† विशालाक्षो ।
१७. भ—नास्ति ।
१८. भ—‡ कस्या न भयं स्याद् दृष्ट्वा ।
च—तस्य न स्याद् भयं दृष्ट्वा ।
१९. भ—एतौ ।
२०. कै—‡ ०सुतौप० ।
२१. ल$_{1}$—‡ ०लिमणिहितावे० ।
अ ल$_{2}$—०तावेव ।
२२. ल$_{1}$—† शंके तं ।

२६पू] राजानो[1] बहुमित्राश्च[2] विश्वासो[3] नैव[4] च क्षमः । [२१

अरयश्च मनुष्येण विज्ञेयाश्छन्नचारिणः[5] ॥१७॥

N] विश्वस्तानामविश्वस्ताश्छिद्रेषु प्रहरन्ति हि । [२२

२६उ] कृत्येषु वाली[6] मेधावी राजानो[7] बहुदर्शिनः[8] ॥१८॥

भवन्ति परहन्तारो[9] ज्ञेयाः[10] प्राज्ञैः सुसंमतैः[11] [12] । [२३

२७] तौ त्वया प्रहितेनेह[13] ज्ञेयौ[14] गत्वा प्लवङ्गम ॥१९॥

तत्त्वेन[15] च प्रकारेण दृष्ट्याऽथाभाषितेन[16] च । [२४

२८] लक्षयस्वैतयोर्भावं[17] प्रहृष्टमनसौ[18] यदि ॥२०॥

२९पू] विश्वासयं[19] प्रशंसाभिरिङ्गितैः[20] सर्वमाचर[21] ॥२१॥ [२५

---

१. ल₁—† राजानौ ।

२. श—बह्वमि० ।

३. ल₁—† विश्वासौ ।

४. कै—नैव क्षमः । (मध्ये चकारश्च्युतः)। म—नैव राक्षसः । भ—†वै न नःक्ष० ।

५. ल₁—विज्ञेया...चारि०("श्छन्न" इति पतितम्) । विज्ञेयश्छ० ।

६. ल₁ ब—‡ माली । रा—‡ वालिमे । श भ च—वालिमे ।

७. ल₂—† राजानौ ।

८. ल₁—‡ ०दर्शिनाः । म श भ च—०दर्शनाः ।

९. ब—‡ परहर्तारौ ।

१०. ब म—† ज्ञेयः ।

११. कै अ ल₁ ल₂ श रा च— सुसंमितैः ।

१२. ल₁—नास्ति ।

१३. श—०वेन हि ।

१४. अ ल₂—† ज्ञेयो ।

१५. भ च— †सत्त्वेन ।

१६. अ ल₂—दृष्ट्या वा भाषणे० । ब—दृष्ट्वा तौ भाषि० । ('तौ' इति प्रान्तेऽपरहस्तेन)। ल₁—दृष्ट्या वा भाषि० । म—‡ दृष्ट्वा थाभिते० । भ च—दृष्ट्वाथा-भाषिते० ।

१७. अ ल₂—लक्षयस्व त० । रा—‡ ०क्षयस्वेत० । च—‡ लक्षयंश्चेत० ।

१८. अ ल₂ म रा च—०ष्टमनसा । भ—‡ ०ष्टमनस्यो ।

१९. कै—विश्वासाय ।

२०. अ—‡ प्रवासाभिरि० । म—प्रशंसादिरि० । भ—‡ प्रशंस भिरि० च—‡ ०रिगिते ।

२१. ल₂—†०चरः ।

N ] शुद्धभावं विदित्वैव जानासि त्वं प्लवङ्गम[3] । [N
२९ ऊ] ममैवं हि[4] मते स्थित्वा पृच्छ त्वं हरिपुङ्गव ॥२२॥
प्रयोजनं प्रवेशस्य वनस्याथ धनुर्धरौ । [२६
३० ] परमायुधसंपन्नौ किं कार्यमितिलिप्सथः ॥२३॥ [N
शुद्धभावौ यदि त्वेतौ[10] जानासि त्वं प्लवङ्गम ।
३१ ] व्याभाषितेन रूपेण विज्ञेया दुष्टताऽनयोः ॥२४॥ [२७
इत्येवं कपिराजेन संदिष्टो[14] मारुतात्मजः ।
३२] चकार गमने बुद्धिं यत्र तौ[16] रामलक्ष्मणौ ॥२५॥ [२८
तथेति कृत्वा वचनं तु तस्य
कपेः सुभीतस्य दुरासदस्य ।
महानुभावो हनुमान् ययौ तदा
N ] महाबलौ यत्र तु रामलक्ष्मणौ ॥२६॥[19] [२९

इत्यार्षे रामायणे किष्किन्धाकाण्डे हनुमत्प्रेषणं
नाम प्रथमः सर्गः ॥१॥

---

१. ल१—† शुद्धाभावं ।
२. ल२—† प्लवंगमः ।
३. भ—नास्ति ।
४. भ—मम चैव ।
५. म—† त्वां ।
६. ल२—† ०पुंगवः ।
७. म—‡ प्रवेशेऽस्य ।
शा—प्रवेशेऽस्य ।
८. भ—वनस्यास्य ।
ल१—‡वनस्यार्थं ।
९. अ—०ति लिप्सवः ।
ल१ म रा—०मिह लिप्सितः ।
ब—† ०यैमिह लिप्सया ।
शा च—०यैमिह लिप्सतः ।
भ—‡ ०ति लप्स्यतः ।
१०. भ—त्वेवं ।
११. ल२—† ०वंगमः ।
१२. म—†दुःखतानयोः ।
१३. ल—‡ कापिरा० ।
१४. अ—† संदिग्धो ।
१५. अ ल१ ल२—‡ मरुतात्मजः ।
१६. ल१ रा—‡तो ।
१७. ब—स ।
१८. च—च ।
१९. ल१ म भ—नास्ति ।
२०. कै ल१ ब म रा—‡किष्किन्दाका० ।
भ—किष्किन्धापर्वणि ।
२१. शा—† हनूमत्प्रवेशो ।
भ—हनुमत्प्रवेशो ।
च—हनुमत्प्रेषणो ।

वचो विज्ञाय[1] हनुमान्[2] सुग्रीवस्य महात्मनः ।
१] पर्वतान्मलयात् तूर्णं पुप्लुवे[3] यत्र राघवौ ॥१॥ [१
२पू] स तत्र गत्वा त्वरितो हनूमान्[4] मारुतात्मजः[5] ।
३पू] स्वं च[6] रूपं परित्यज्य भिक्षुरूपेण वानरः[7] ॥२॥ [२
२उ] उवाच[8] क्रमशो वाग्भिर्मृद्वीभिः[9] सत्यविक्रमः । [४उ
३उ] आबभाषे[10] च मतिमान् यथास्तोत्रं[11] शशंस ह ॥३॥ [३उ
इन्द्रोपेन्द्रसमानौ[12] हि तापसौ संशितव्रतौ[13] ।
४] देशं कथमिमं प्राप्तौ भवन्तौ देववर्णिनौ[14] ॥४॥ [५
त्रासयन्तौ मृगगणानन्यांश्च वनचारिणः ।
५] पम्पातीररुहान् वृक्षान् वीक्षमाणौ[15] समन्ततः ॥५॥ [६
इमां नदीं शीततोयां[16] शोभयन्तौ तपस्विनौ[17] ।
६] धैर्ययुक्तौ महात्मानौ कौ[18] युवां चीरवाससौ[18] ॥६॥ [७
सिंहप्रतीक्षणौ वीरौ[19] सिंहविक्रान्तगामिनौ । [८उ

---

१. भ—विद्वान् ।
२. म भ—हनूमान् ।
३. अ ब च—‡ पुप्लवे ।
४. ल₂—हनूमान् ।
५. ल₁—‡ मरुतात्मजः ।
६. भ च—तु ।
७. ल₁—† वानराः ।
८. ब—† उवास ।
९. म—‡ ०र्हस्वीभिः ।
१०. च—‡ अवभाषे ।
११. भ च—यथावत् प्रशशंस ।
१२. म—‡ समानो ।
१३. ल₂ म—† संश्रितव्र० ।
१४. अ ल₂—वरवर्णिनौ ।
ल₁ ब म—देवसंमितौ ।
१५. ल—‡ वीक्षमानौ । भ च—† वीक्ष्य० । अ—‡ वीक्ष्यमानौ ।
१६. म—‡ चीततो० ।
१७. कै ल₁ ब म श रा भ च—तरस्विनौ ।
१८. अ ल₂—नास्ति ।
१९. भ—सिंहविप्रेक्षणौ वीरौ ।
अ ल₂—नास्ति ।

७] शक्रचापनिभे चापे[1] प्रगृह्य विपुलैर्भुजैः ॥[2]७॥
श्रीमन्तौ[3] रूपसंपन्नौ कुंजरर्षभगामिनौ ।[2] [९
८] मत्तद्विपसमौ धैर्ये[4] द्युतिमन्तौ मनस्विनौ ॥८॥ [१०
प्रभया पर्वतेन्द्रोऽयं युवाभ्यामवभासितः । [११
९] राज्यार्हौ हि श्रियोपेताविमं देशमुपागतौ ॥९॥
पद्मपत्रेक्षणौ वीरौ जटामण्डलधारिणौ[5] । [१२
१०] अन्योन्यसदृशौ वीर्ये देवलोकादिवागतौ[6] ॥१०॥
यदृच्छया[7] भूमितलं चन्द्रसूर्याविवागतौ । [१३
N ] निश्वसन्तौ वरभुजौ शोभयन्तौ गिरीनिव ॥[8]११॥ [ N
११पू] विशालवक्षसौ वीरौ मानुषौ देवरूपिणौ । [१४पू
शक्रचापनिभे चापे गृह्य देवाविवागतौ ।[8] [ N
N ] सिंहस्कन्धौ महासत्त्वौ[9] समदौ वृषभाविव ॥१२॥ [१४उ
आयताश्च सुवृत्ताश्च[10] बाहवः[11] परिघोपमाः[12] ।
N ] युवयोर्भूषणैर्हीनाः[13] स्वानुरूपशरीरयोः[14] ॥१३॥ [१५
उभावेव हि[15] पश्यामि पार्थिवव्यंजनान्वितौ ।

---

१. ब—+ चापि ।
२. अ ल$_2$—नास्ति । ('गामिनावि'ति-साम्येन भ्रान्तिरेषा प्रतीयते) ।
३. भ—+ श्रीमत्तौ ।
४. कै रा च—+ धैर्ययु० ।
ल$_2$—+ धैर्यद्यु० ।
५. रा—+ जयमण्ड० ।
६. ब रा—०कादिहागतौ ।
७. रा—+ यद्रिच्छया । अ—+ यदृ॰या ।
८. ब म—नास्ति । ( ' विवागतौ ' इत्यवसानसाम्यजनिताद् दृष्टि-भ्रमाद् सार्धश्लोकभागस्त्रुटितः ) ।
९. अ ल$_1$ ल$_2$ ब म श — महामत्तौ । श—हरितालेन सकारो मकारः कृतः ।
१०. रा भ—प्रवृत्ताश्च ।
११. अ ल$_2$ श—+ बहवः ।
१२. ब म—+ ०घोपमः ।
१३. रा भ च—भूषणैर्हीं० ।
१४. भ च—स्वानुरूपाः शरीरयोः ।
१५. ल$_2$— ह ।

N ] मुनिवेष[1]धरौ [2]यद्वन्नरनारायणावृषी ॥१४॥ [ N
किमर्थमिह संप्राप्तौ चीरकृष्णाजिनाम्बरौ ।
N ] तर्कयामि सुहृ[3]ल्लेखौ कार्य[4]वन्ताविहागतौ ॥१५॥ [ N
केनचित् कार्ययोगेन ए[5]कदेहौ द्वि[6]धा कृतौ ।
N ] [7]लक्षणाकारसंपन्नावश्विनाविव रूपिणौ ॥१६॥ [ N
११उ] उ[8]भौ योग्या[9]वहं मन्ये [10]रक्षितुं पृथिवीमिमाम् ।
१२पू] ससागरवनां कृत्स्नां[11] मेरुमन्दरभूषणाम्[12] ॥१७॥ [१६
इमे च धनुषी श्रेष्ठे[13] श्लक्ष्णे[14] चित्रानुलेपने ।
१३] प्र[15]काशेते यथेन्द्रस्य मणिहेमविभूषिते[16] ॥१८॥ [१७
संपूर्णौ[17] निशितैर्बाणैस्तूणौ[18] च शुभदर्शनौ ।
१४] जीवितान्तकरैर्घोरैर्ज्वलद्भिरिव पन्नगैः ॥१९॥ [१८
महाप्रमाणौ विस्तीर्णौ तप्तहाटकभूषणौ ।
१५] खड्गावेतौ प्र[19]काशेते निर्मुक्तौ[20] भुजगाविव[21] ॥२०॥ [१९

---

१. कै अ ल$_1$ ल$_2$ ब म श— ०निवेशध० ।
२. अ—‡ युद्धेव० । ल$_2$—‡ युद्धव० ।
३. ल$_1$—† ०हृल्लेखा ।
४. ब—† ०वन्तमिहा० ।
५. ल$_1$ ब श—ह्येक० । म—‡ ह्यक० ।
६. अ—† द्विजाकृतौ ।
७. ब म श रा—† लक्ष्मणाकारसंपन्नावच्छिन्नाविव । ल$_1$—† ०न्नावच्छिन्नामिव ।
८. ब म—‡ उभ यो० ।
९. रा—‡ व्यवामहं ।
१०. श—† रक्षितं ।
११. ब म—† कृत्स्नं ।
१२. ब म—‡ ०भूषिणां ।
१३. ल$_1$—‡ श्रेष्ठौ । ब म—‡ श्रेष्ठा ।
१४. रा—‡ श्लक्ष्णे ।
१५. ब भ— † प्रकाशते । म—† प्रकाशतं ।
१६. अ—०विभूषणे । ल$_2$—‡ ०विभूषणै ।
१७. ल$_1$—† संपूर्णा ।
१८. ल$_2$—‡ तूनौ ।
१९. म—‡ प्रकाशैतं ।
२०. भ च—‡ निमुक्तौ ।
२१. रा—† भुजगा इव ।

एवं मयाऽभिभाष्यन्तौ[1] कस्मान्मां नाभिभाषथः[2] । [२०
१६] विवक्षन्तम्[3]अनुप्राप्तं कस्मात् तत्त्वं[4] न भाषथः[5] ॥ [6]२१॥ [ N
सुग्रीवो नाम धर्मात्मा कश्चिद्[7] वानरयूथपः[7] ।
१७] वीरो विवासितो भ्रात्रा जगद् भ्रमति[8] वानरः ॥२२॥ [२१
दूतोऽहं प्रेषितस्तेन सुग्रीवेण[9] महात्मना ।
१८] राज्ञा वानरमुख्येन हनूमान्[10] नाम वानरः ॥२३॥ [२२
युवाभ्यां[11] सह धर्मज्ञः[12] सुग्रीवः[13] संगमिष्यति[13] ।
१९] तस्य [14]मां सचिवं विद्धि वानरं मारुतात्मजम्[15] ॥२४॥ [२३
भिक्षुरूपप्रतिच्छन्नं[16] सुग्रीवहितकाम्यया ।
२०] मलयादिह[17] संप्राप्तं कामार्थं[18] कामरूपिणम् ॥२५॥ [२४
एवमुक्त्वा[19] तु हनुमांस्तावुभौ[19] रामलक्ष्मणौ ।
२१] वाक्यज्ञौ[20] वाक्यकुशलस्तत्रोवाच[21] न[21] किञ्चन ॥२६॥ [२५

---

१. कै—‡ ०भिभषंतौ । अ ल$_1$ ल$_2$ ब म श रा—०भिभाषन्तौ ।
२. ब—† भाषथ । रा—‡ भाषित
३. ब म—‡ विवक्षंतामनु० । रा भ च—विवक्षुं समनु० ।
४. ल$_1$ रा—† तत्त्वे ।
५. ब—† भाषथ ।
६. अ ल$_2$—नास्ति । ( ' भाषथ ' इति सादृश्यमूला त्रुटिर्भवेत् ) ।
७. अ ल$_2$—† ०रयूथकः । ल$_1$—† यूथपाः । रा—† कपिर्वांव प्रयूथपः ।
८. ब—०भ्राम० । म—‡ ०गजाम० ।
९. च रा—‡ सुग्रीवेन ।
१०. अ ल$_1$ ल$_2$ च—हनुमान् ।
११. रा—‡ युवांश्च ।
१२. कै—धर्मात्मा ।
१३. अ—‡ सुग्रीवा सं० । ल$_2$—‡ सुग्रीवसं० । रा भ—वः संगमिच्छति
१४. म—† स ।
१५. ल$_2$—† मारुतात्मज ।
१६. रा—भिक्षुरूपं प्रति० ।
१७. ल$_1$ ब म श—मलयादिव ।
१८. रा भ च—कामगं ।
१९. अ ल$_2$—०क्त्वा हनूमांस्तु ता० ।
२०. अ रा भ च—वाक्यज्ञो । म—‡ वाकज्ञो ।
२१. कै—‡ ० स्ततोवाच । रा—† ०शलं ततो नोवाच । भ च—स्ततो नोवाच ।

२२पू] हनूमतो[1] वचः श्रुत्वा रामो लक्ष्मणमब्रवीत् ।
N ] प्रहृष्टवदनः[2] श्रीमान् भ्रातरं प्रियदर्शनम् ॥२७॥ [२६
२२उ] सचिवो[3] वानरेन्द्रस्य सुग्रीवस्य महात्मनः ।
N ] सौहृदं कांक्षमाणस्य[4] मत्समीपमुपागतः ॥२८॥ [२७
तदेनमभिभाषस्व सौमित्रे हरियूथपम् ।
२३] सुग्रीवसचिवं प्राप्तं हनूमन्तं[5] महाबलम् ॥२९॥ [२८पू
कार्येणावामिह[6] येन प्रयातौ
द्रष्टुं राजानं[7] सुव्रतं वानरेन्द्रम्[8] ।
तस्याप्येतल्लक्ष्मणो[9] वेत्ति[10] तत्त्वं
N ] न त्वाश्चर्यं पश्ये[11] कालस्य मार्गम् ॥३०॥ [

इत्यार्षे रामायणे[12] किष्किन्धाकाण्डे[13] हनूमद्वाक्यं[14]
नाम [द्वितीयः] सर्गः ॥ २ ॥

---

१. भ—हनुम० ।
२. कै—प्रहृष्टवचनः ।
३. अ ल१ ल२ ब म श—† सचिवं ।
४. म—† कांक्ष्यमा० ।
५. रा भ—कृत्यवंतं ।
६. म—‡ कार्येणासि ह येन प्रया० ।
ल१ ब श—† ०ह येनानुयातौ ।
रा—‡ कार्येणावा ये चात्र प्र० ।
भ—† कार्येण वां येन चात्र प्र० ।
च—† कार्येण वां येन प्रयाता-
विह वां गच्छामो द्रष्टुं रा० ।
७. रा—† राज्ञां ।
८. रा भ च—वानराणां ।
९. अ ल२—तथाप्येत० ।
रा भ—तस्याप्येवं ।
१०. रा भ च—† वेत्थ ।
११. रा—यस्त्वका० ।
१२. ल२—नास्ति ।
१३. कै ल१ ब म—‡ किष्किन्दा-
का० । भ—नास्ति ।
१४. अ ल१ ल२ रा भ—हनुमद्वा० ।

ततः प्रहृष्टो हनुमान्[1] श्रुतवानिति[2] तद्वचः ।
१] श्रुत्वा व्यथितभावं[3] स सुग्रीवं मनसा स्मरन् ॥१॥ [१
तच्च कार्याशयं[4] तस्य सुग्रीवस्य महात्मनः ।
N] कृत्यवन्तावुभौ[5] प्राप्तौ मत्वा ताविंगितैः[6] कपिः ॥२॥ [२
रामं स तु महाप्राज्ञो धनुष्पाणिमवस्थितम्[7] ।
३] लक्ष्मणेन सह भ्रात्रा हनुमान्[8] वाक्यमब्रवीत् ॥३॥ [३
केन[9] त्वं तु वनं घोरं मृगव्याल[10]निषेवितम् ।
५] आगतः सानुजो दुर्गं[11] पम्पाकाननशोभितम् ॥४॥ [४
तस्य तद्वचनं[12] श्रुत्वा सौमित्री रामचोदितः[13] ।
६] आचचक्षे महात्मानं रामं दशरथात्मजम् ॥५॥ [५
राजा दशरथो नाम मतिमान्[14] धर्मवत्सलः । [६पू
७] तस्यायं पूर्वजः पुत्रो रामो नाम जनैः श्रुतः ॥६॥ [८पू
धर्मशीलो मृदुर्दान्तः[15] सर्वभूतहिते रतः । [N
८] शरण्यः शरणार्थिभ्यः[16] पितुर्निर्देशकारकः[17] ॥७॥ [८उ

---

१. अ ब म श—‡हनुमां श्रु० ।
ल$_1$ रा—हनुमाञ् श्रु० ।
२. भ च—कृत्यवा० ।
३. भ च—व्यथितभावस्य ।
अ—०भावं तु । ल$_2$—०भावं तं ।
४. ब—‡ ०कार्यं शयं ।
ल$_1$ म—‡ ०कार्यशयं ।
५. कै अ ल$_2$—कृतवन्तावु० ।
६. म—† ०विंगिते ।
७. भ च—धनुः पाणि० ।
८. अ ल$_2$ ब म रा भ—हनूमान् ।
९. कै—† येन ।
१०. कै अ ल$_2$ भ च—०व्याड० ।
ब म—०व्याधि० ।
श—०व्याध० ।
११. अ ल$_2$—राम ।
१२. ल$_1$ ब म रा भ च—तद्व्याहृतं ।
१३. अ—रामनोदितः ।
१४. ब—‡ मतिमांध० ।
१५. रा—‡ सुदुर्मतः ।
१६. रा—† शरणार्थिन्या ।
१७. कै—पितुर्निदेश० ।
ल$_1$ ल$_2$ म रा—‡ पितुर्निर्देश० ।

N] तस्माद् दशरथाज्जातो राम एष महायशाः । [N
९ उ] राज्यभ्रष्टो वने वस्तुं मया सार्धमिहागतः ॥८॥
भार्यया[1] च महातेजाः सीतया[2]ऽनुगतः स्वयम् ।
१०] निशाक्षये महातेजाः प्रभयेव दिवाकरः ॥९॥ [१०
अहमस्यावरो भ्राता गुणैर्दास्यमुपागतः[3] । [११पू
११] मानार्हस्य सुखार्हस्य सर्वलोकहितात्मनः[4] ॥१०॥
१२पू] ऐश्वर्येण[5] वियुक्तस्य वनं[6] च परिलम्बतः[7] । [१२
N] शोकसागरमध्यस्थं भ्रातरं मे सुखोचितम्[8] ?॥११॥
N] भ्रातरं[9] चिन्तयानस्य दुःखितो[10] दुःखभागिनम्[11] ?। [N
१३उ] रक्षसा[12]ऽपहृता भार्या रहिते[13] कामरूपिणा[14] ॥१२॥
न च विज्ञायते रक्षः पत्नी येनास्य[15] सा हृता । [१३
१४] दनुर्नाम[16] श्रियः[17] पुत्रः शापाद् राक्षसतां गतः ॥१३॥
सुग्रीवस्तेन चाख्यातः समर्थो वानराधिपः[18] । [१४
१५] स ज्ञास्यति[19] महावीर्यस्तव भार्यापहारिणम्[20] ॥१४॥
एवमुक्त्वा[21] दनुः[22] स्वर्गं[23] गतो वै सहसाऽद्भुतम् । [१५

१. क ल२—† भार्याया ।
२. ल२—† सीताया ।
३. भ—०स्यमिवागतः ।
च—०स्यमिहागतः ।
४. अ ल२—सर्वभूतहि० ।
५. कै रा—† ऐश्वर्येन ।
६. अ—† वचनं । भ च—वने ।
७. ल२रा—† लंभतः ।
८. अ ल२—सुखोदितं ।
९. भ च—मातरं ।
१०. च—दुःखितां ।
११. च—दुःखभागिनीं ।
१२. ल२—† राक्षसा० ।
१३. ल१ब म श—† ०रहिता ।
१४. ल१रा—† ०रूपिणः ।
१५. ब म—येनापि ।
१६. म—† धनुर्नाम । रा—† दनुन्नाम ।
च—† दनुर्न्नाम ।
१७. अ ल२—श्रियाः ।
१८. रा—† वानराधिप ।
१९. ल२—† ज्ञासति ।
२०. ब—† हारिणाम् ।
२१. अ ल२—एवमुक्ते ।
२२. म—† धनुः ।
२३. रा—† सर्वं ।

१६] एतत् ते सर्वमाख्यातं यथातत्त्वेन पृच्छतः ॥१५॥ [१६
N] अहं चैवं च मे[2] भ्राता गुरुः स्वशरणागतैः[3] । [१७
प्राप्य चानुत्तमामृद्धिं[4] दत्त्वा वित्तं च शाश्वतम् ॥१६॥
१७] लोकनाथो मृदुर्दान्तः सुग्रीवं नाथमृच्छति[5] । [१८
N] सर्वलोकशरण्योऽसौ[6] शरणं चाभिकाङ्क्षति ।१७॥[7] [N
शोकाभिभूते रामे तु स्त्रीकृते[8] शरणं गते[9] ।
१८] कर्तुमर्हति सुग्रीवः कारुण्यं सह यूथपैः[10] ॥१८॥ [२६
एवं ब्रुवाणं सौमित्रिं करुणं शस्त्रपाणिकम्[11] ।
१९] हनुमान्[12] प्रत्युवाचेदं लक्ष्मणाभिमुखैः[13] स्थितः ॥१९॥ [२७
त्वद्विधा बुद्धिसम्पन्ना जितात्मानो जितेन्द्रियाः[14] । [२८पू
२०] नराः कृतोपकाराणां विसृजेयुर्महीमिमाम्[15] ॥२०॥
इत्येवमुक्त्वा हनुमांल्लक्ष्मणं मधुराक्षरम् ।

---

१. श—वै वत ।
२. ल$_2$—नास्ति ।
३. कै ल$_2$ब श—०स्वशरणागतौ ।
ल$_1$—स्वौ शरणा० ।
म—सुशरणा० ।
रा च—स्वो शरणा० ।
भ—द्वयं च शरणागतौ ।
४. ल$_1$ब म श—०नुत्तमां वृद्धिं ।
५. कै ल$_1$ब म श रा भ च—नाथमिच्छति ।
६. अ ल$_2$—†०कशरण्यं मां ।
ल$_1$श—†०कशरण्यो मां ।
रा—†०कशरण्ये मां ।
७. भ च—अतः परमधिकः पाठः—
सर्वलोकस्य धर्मात्मा शरण्यः शरणःसदा ।
गुरुर्मे राघवः सोयं सुग्रीवं शरणं गतः ॥
प्रसादेन प्रसीदेयुः प्रजा यस्य महात्मनः ।
स रामो वानरेन्द्रस्य प्रसादमभिकांक्षति ॥
श्रुतः कृतज्ञो मतिमान् गुरुर्मम रघूत्तमः ।
८. भ च—स्त्रीहेतोः ।
९. ब म श—शरणागते ।
१०. ल$_1$रा—† यूथपः ।
११. कै ल$_2$रा च—सास्त्रपाणिनं ।
ल$_1$ब म—सास्त्रपाणिकं ।
अ—चास्त्रपाणिनं ।
भ—साश्रुपातिनं ।
१२. अ ल$_2$—हनुमान् ।
१३. भ च—लक्ष्मणाभिमुखं ।
१४. अ ल$_1$—† जितेन्द्रियः ।
१५. कै अ ल$_2$रा—०महीपतिं ।
च—महीपतिः

२१] अब्रवीत् सौम्य गच्छाम[1] सुग्रीवमिति[2] राघवम्[3] ॥२१॥ [३१
स हि राज्यपरिभ्रष्टः कृतवैरश्च वालिना ।
२२] हृतदारोऽवरत्रस्तो[4] भ्रात्रा निर्यासितो वनम् ॥२२॥ [N
करिष्यति स साहाय्यं रामस्य करुणात्मनः ।
२३] सुग्रीवः सह चास्माभिः[5] चित्वा[6] सर्वां[7] महीमिमाम्[8] ॥२३॥ [N
एवं ब्रुवाणं धर्मात्मा हनूमन्तं[9] स लक्ष्मणः ।
२४] प्रतिपूज्य च तद् वाक्यमिदं प्रोवाच राघवम् ॥२४॥ [३२
कपिः कथयते हृष्टो यथाऽयं मारुतात्मजः[10] ।
२५] कृत्यवानस्ति[11] सुग्रीवः कृतकार्यो[12] भविष्यति[13] ॥२५॥[14] [३३
प्रसन्नमुखवर्णश्च व्यक्तं[15] हृष्टश्च[16] भाषते[17] ।
२६] नानृतं वक्ष्यते वीरो हनूमान्[18] मारुतात्मजः ॥२६॥[14] [३४
N] कपिः कथयते हृष्टो[19] यथाऽयं त्वत्समक्षतः[20] । [N
२७पू] ततः स सुमहाप्राज्ञो[21] हनूमान्[22] हरिपुङ्गवः ।
२९उ] जगामादाय[23] तौ[23] वीरौ सुग्रीवो यत्र वानरः ॥२७॥ [३५

---

१. ल१ब म श—गच्छाम ।
२. कै अ ल२रा—सुग्रीवमिव ।
ल१ब म श—† सुग्रीवमेव ।
३. ल१ब म श—राघव ।
४. ब भ च—वने त्रस्तो ।
कै ल१ल२ म श रा—वनत्रस्तो ।
५. कै अ ल२रा च—†युष्माभिः ।
६. कै अ ल२ब म रा च—†स्थित्वा ।
७. भ च—कृत्स्नां ।
८. अ ल२—०र्वामिमां महीम् ।
भ—महीमपि ।
९. भ—हनुमन्तं ।
१०. म—‡ मरुतात्मजः ।
११. ब—† कृतवानस्ति ।
१२. रा—‡ कृतः का० ।
१३. कै च—† भविष्यसि ।
१४. अ ल२ भ—नास्ति ।
१५. ब म—† व्यक्ता ।
१६. ल१—हृष्टं ।
१७. ल२—† भाष्यते ।
१८. कै च—हनुमान् ।
१९. ल२—भ्रष्टो ।
२०. भ—मारुतात्मजः ।
२१. ब—† सुमहान् राज्ञो ।
रा—सुमहान् प्राज्ञो ।
२२. रा भ च रा—हनुमान् ।
२३. म—जगाम च यतो ।

स तु विपुलयशाः कपिप्रवीरः
पवनसुतः कृतकृत्यवान् प्रहृष्टः[1] ।
मलयगिरिवरं तमृष्यमूकात्[2]
N] पुरुषवरौ प्रतिगृह्य संप्रतस्थे[3] ॥२९॥ [३७

इत्यार्षे रामायणे किष्किन्धाकाण्डे[4] लक्ष्मणवाक्यं
नाम तृतीयः सर्गः ॥ ३ ॥

---

१. ल१—प्रहृष्टं ।
२. ल१—+विसृष्यमू० ।
भ—०ष्यमूकं ।
३. कै—स प्रतस्थे ।
४. ल१ब म रा—+किष्किन्दाकाण्डे ।
भ च—नास्ति ।

ऋष्यमूकाद्ध[1]नूमांस्तु नीत्वा मलयपर्वतम् ।
१] आचष्टे[2] भ्रातरौ वीरौ सुग्रीवाय महात्मने ॥१॥ [१
अयं रामो महाप्राज्ञः संप्राप्तो दृढविक्रमः ।
२] लक्ष्मणेन सह भ्रात्रा[3] शरणं त्वामुपागतः ॥२॥ [२
इक्ष्वाकूणां कुले जातो रामो दशरथात्मजः ।
N] धर्मज्ञश्च कृतज्ञश्च[4] पितुर्निर्देशकारकः [5]॥३॥ [३
तस्यास्य तु महाऽरण्ये निरतस्य महात्मनः ।
६] रक्षसाऽपहृता भार्या स ते शरणमागतः ॥४॥[5] [४
अयं[6] त्वया महाप्राज्ञ[7] सख्यमिच्छति राघवः ।
७] सह सौमित्रिणा भ्रात्रा लक्ष्मणेन महाद्युतिः ॥५॥ [N
तौ त्वं[8] हरिवरश्रेष्ठ[9] राजपुत्रौ महाबलौ ।
८] प्रतिनन्द[10]स्व पश्येमौ सत्कारार्हौ[11] च सत्कुरु ॥६॥ [७
श्रुत्वा ह[12]नुमतो वाक्यं सुग्रीवो हृष्टमानसः ।
९] भयं वालिसमु[13]द्भूतं मुक्तमाल्य[14]मिवात्यजत् ॥७॥ [८
उत्थाय[15] च महातेजा राघवं रघुनन्दनम् ।
१०उ] उवाच वचनं प्रीतः[16] प्रीतिपूर्वं कृताञ्जलिः ॥८॥ [९ उ

---

१. भ च—मूकात्तु ह० ।
२. ब म—उवाच ।
३. म—भ्राता ।
४. ल१ श—कुलज्ञश्च ।
५. ब म—नास्ति ।
६. भ च—सोयं ।
७. ल१—महाप्राज्ञः ।
८. कै ब म च—+त्वां । श—+तं ।
९. ल१—०+वरं । ब म—०+वरे ।
श—०+वरश्रेष्ठं ।
१० अ—प्रतिवंदस्व ।
श प्रतिनंद सुप० ।
११. ल१—+संकरार्हौ । ब—+सोरकाश ० ।
१२. कै अ ल२ रा—हनूम० ।
१३. भ—+चातिसमु० ।
१४. अ ल२ रा—मुक्तमा० ।
ब म भ च—मुक्तं माल्य० ।
१५. भ—उपसृत्य । च—उपस्कृत्य ।
१६. भ—वीरः ।

भवान् क्षमी विनीतश्च[1] विक्रांतः सत्यवान् बली ।
११] आख्याता वायुपुत्रेण तत्त्वतो मे भवद्गुणाः ॥९॥ [१०
तन्ममैवैष सत्कारो लाभश्चानुत्तमो महान् ।
१२] यत्त्वमिच्छसि सख्यं हि वानरेण मया सह ॥१०॥ [११
रोचते यदि वा सख्यं बाहुरेष प्रसारितः ।
१३] पाणिना गृह्यतां पाणिर्मर्यादा बध्यतां ध्रुवम् ॥११॥ [१२
एवं तु वचनं[2] श्रुत्वा[3] सुग्रीवस्य सुभाषितम् ।
१४] संप्रहृष्टमना पाणिं[4] पीडयामास पाणिना ॥१२॥ [१३
ततो रामस्य सुग्रीवः पाणिं जग्राह पाणिना ।[5] [N
१५] दृढं[6] सौहृदमालम्ब्य पीडितं चापि सस्वजे ॥१३॥ [१४
ततो हनूमान् सन्त्यज्य[7] भिक्षुरूपमरिन्दमः ।
१६] स्वेन रूपेण काष्ठार्वं[8] तु जनयामास पावकम् ॥१४॥ [१५
ज्वलयित्वा[9] ततो वह्निं पुष्पैः संपूज्य यत्नतः[10] ।
१७] तत्रोपन्यस्य[11] सम्प्रीतः[12] सख्यदं[13] सत्यसाक्षिकम् ॥१५॥ [१६
ततोऽग्निं दीप्यमानं च[14] चक्रतुस्तौ प्रदक्षिणम् ।
१८] सुग्रीवो राघवश्चैव वयस्यत्वमुपागतौ ॥१६॥ [१७
प्रहृष्टमनसौ प्रीतौ तावुभौ हरिराघवौ ।
१९] अन्योन्यमभिवीक्षन्तौ न तृप्तिमुपजग्मतुः[15] ॥१७॥ [१८

---

१. रा—इतश्चतुरक्षरी त्रुटिता ।
२. भ—नास्ति इतोऽक्षरत्रयी त्रुटिता ।
३. म—कृत्वा ।
४. कै ल१ ब म श रा भ च—हस्तं ।
५. ब—नास्ति ।
६. भ ब—हृद्यं ।
७. ब म—संपूज्यं ।
८. भ—काष्ठं व ।
९. अ ल१ भ च श—ज्वालयित्वा । रा—मूलतो ह्रस्वः पाठः पश्चात् केनापि दीर्घीकृतः ।
१०. भ च—संयतः ।
११. कै रा ब—ततोपन्यस्य ।
१२. भ—स प्रीतः ।
१३. ब—सख्यं च । भ—सख्यार्थं । रा—साख्यदं ।
१४. ब—तु ।
१५. म—तृप्तिमभि० ।

ततः सर्वास्त्रविदुं[1] रामं दशरथात्मजम् ।
२०] सुग्रीवः प्राह तेजस्वी वाक्यमेकमनास्तदा ॥१८॥ [N
सखे राम महाबाहो सोच्छ्वासहृदयो ह्यसि ।
N] यथा यूथपरिभ्रष्टो गजो वनमुपागतः ॥१९॥ [N
अयमाख्याति मे राम सचिवो मन्त्रिसत्तमः[2] ।
स.८,१] हनुमान् यन्निमित्तं[3] त्वं निर्जनं वनमागतः[4] ॥२०॥ [स.६,२
लक्ष्मणेन सह भ्रात्रा वसतश्च वने तव ।
२] राक्षसेन हृता भार्या वैदेही जनकात्मजा ॥२१॥ [३
३ उ] त्वया विहीना चारण्ये लक्ष्मणेन च जानकी ।
३पू] अन्तरप्रेप्सुना दीना रोदमाना सुमध्यमा[5] ॥२२॥ [४
४पू] भार्यावियोगजं दुःखं न चिराद्[6] राम मोक्ष्यसे[7] ।[8]
४-५उ] आनयिष्यामि विक्रम्य तव भार्यामरिन्दम ॥[8]२३॥ [५
इदं तथ्यं मम वचस्तदेव[9] हि रघुप्रिय । [७पू
६] त्यज शोकं महाबाहो संगमेनेह[10] ते शपे ॥२४॥
अनुमानाद् विजानामि मैथिली सा न संशयः । [९
७] ह्रियमाणा मया दृष्टा रक्षसा क्रूरकर्मणा ॥२५॥ [१०पू
क्रोशन्ती राम रामेति लक्ष्मणेति च सुस्वरा[11] ।
८] स्फुरन्ती रावणस्याङ्के पन्नगेन्द्रवधूरिव ॥२६॥ [१०

१. कै ल$_1$ रा भ च—०विदुषं ।
ब म श—०विषदं ।
२. कै ब म—मन्त्रसत्तमः ।
३. कै अ ल$_1$ ल$_2$ ब श—प्रतिमित्रं त्वां ।
म—प्रतिमन्त्र त्वं ।
४. कै अ ल$_1$ ल$_2$ ब म श—
भ च—वनमागतम् ।
५. अ ल$_2$—नास्ति ।
६. म—कश्चिद् ।
७. कै—मोक्षसे ।
८. रा भ—अतः परमधिकः पाठः—
आनयिष्यामि ते भार्यां नष्टां वेदश्रुतीमिव ।
रसातले वा वर्तंती यदि वापि नभस्तले ॥
९. रा वचासाध्व वै ।
१०. कै अ ल$_2$ रा भ च—संगमेन हि ।
११. कै ब म—सस्वरा ।

९] आत्मनाऽऽभरणान्येषा मुञ्चती त्विह लक्षिता । [११
१०उ] आनये तानि राजेन्द्र समनुज्ञातुमर्हसि [1]॥२७॥ [१२
एवं ब्रुवाणं सुग्रीवमुवाच रघुनन्दनः ।
११] आनयस्व सखे शीघ्रं किमर्थं त्वं विलम्बसे ॥२८॥ [१३
एवमुक्तस्तु सुग्रीवः शैलस्य महतीं गुहाम् ।
१२ प्रविवेश त्वरायुक्तो राघवप्रियकाम्यया ॥२९॥ [१४
उत्तरीयं गृहीत्वाऽऽशु शुभान्याभरणानि च ।
१३] इदं पश्येति रामाय दर्शयामास वानरः ॥३०॥ [१५
राघवो गृह्य तद्वासः सीताया भूषणानि च ।
१४] अभवद् बाष्पसंरुद्धो नीहारेणेव चन्द्रमाः ॥३१॥ [१६
सीतास्नेहप्रवृद्धेन स तु बाष्पेण धर्षितः ।
१५] हा प्रियेति रुदन् धैर्यं विसृज्य न्यपतद् भुवि ॥३२॥ [१७
हृदि कृत्वा सुबहुशस्तमलङ्कारमात्मनः ।
१६] विनिःश्वसन् महासर्पो बिलस्थ इव कोपितः ॥३३॥ [१८
अविच्छिन्नाश्रुवेगैस्तु सौमित्रिं वीक्ष्य पार्श्वतः ।
१७] परिदेवयितुं दीनो रामः समुपचक्रमे ॥३४॥ [१९
पश्य लक्ष्मण सन्त्यक्तं वैदेह्या ह्रियमाणया ।
१८] उत्तरीयमिदं भूमौ शरीराद् भूषणानि च ॥[5]३५॥ [२०
शाद्वलिन्यां ध्रुवं भूमौ वैदेह्या ह्रियमाणया ।[6]
१९] उत्सृष्टं भूषणमिदं तथारूपं च दृश्यते ॥३६॥ [२१

---

१. रा भ च—
आत्मना पंचमं दृष्ट्वा मां तु शैलतले स्थितं ।
उत्तरीयं तदा न्यस्तं शुभान्याभरणानि च ॥
यान्यस्माभिर्गृहीतानि निहितानि च राघव ।
आनयिष्यामि तान्यत्र समनुज्ञातुमर्हसि ॥
२. श—ब्रुवन्तं ।
३. अ ल₂—गृहीत्वा तु ।
४. अ ल₂—०स्तुकोपस्तु ।
५. ब म—नास्ति ।
६. कै ल₁—शार्दूलिन्यां ।
७. ल₁ ब म श रा भ च—हि ।

ब्रूहि वानर[१] कं देशं ह्रियन्ती लक्षिता त्वया ।
२०] रक्षसा तेन घोरेण[२] मम प्राणसमा प्रिया[३] ॥३७॥ [२४
क्वासौ वसति पापात्मा महद्व्यसनदो मम ।[३]
२१] यन्निमित्तमहं सर्वान् निहनिष्यामि राक्षसान् ॥३८॥ [२५
हरता मैथिलीं येन मां च रोषयता भृशम् ।
२२] आत्मनो जीवितान्ताय मृत्युद्वारमपावृतम् ॥३९॥ [२६
मम दयिततमा हृता वनान्ताद्
रजनिचरेण विमथ्य येन[४] सा ।
कथय मम रिपुं त्वमद्य शीघ्रं[५]
N] प्लवग नयामि यमस्य सादनम् ॥[६]४०॥ [२७

इत्यार्षे रामायणे किष्किन्धाकाण्डे[७] सुग्रीवसख्यं
नाम चतुर्थः सर्गः ॥ ४ ॥

---

१. अ ल२—सुग्रीव ।
२. रा भ च—रौद्रेण ।
३. कै अ ल२—नास्ति ।
४. रा—मां बलात् ।
५. रा—वै तूर्णं । भ—वै ।
६. रा—
प्लवगर्षभ यमभवनं नयामि तं ।
भ च—
प्लवगर्षभ यमस्य पुरं नयामि तं ॥
७. कै ल२ ब म—किष्किन्दाका० ।
भ च—नास्ति ।

N] एवमुक्तस्तु सुग्रीवो रामेणार्तेन वानरः ।
२उ] अब्रवीत् प्राञ्जलिर्वाक्यं सुसंस्कृतमविक्लवम्[1] ॥१॥ [१
न जाने निलयं तस्य सर्वथा[2] पापरक्षसः ।
३] सामर्थ्यं विक्रमं वाऽपि[3] दौष्कुलेयस्य वा कुलम् ॥२॥ [२
अहं तु प्रतिजानामि त्यज शोकमरिन्दम ।
४] करिष्यामि तथोपायं[4] यथा प्राप्स्यसि[5] जानकीम् ॥३॥ [३
८ पू] रावणं सगणं हत्वा स्वयं बुद्ध्या[6] यथा हरेः । [४पू
विचिन्त्य[7] च स्वयं बुद्ध्या धृतिमान् नावसीदति[8] ॥४॥ [९उ
११] बालिशस्तु नरो यो वै वैक्लव्यमनुवर्तते ।
स मज्जत्यवशः शोके वाताक्रान्तेव नौर्जले ॥५॥ [१०
१२] एषोऽञ्जलिर्मया बद्धः प्रणयाच्च[9] प्रसादये ।
पौरुषं श्रय शोकस्य नान्तरं[10] दातुमर्हसि[11] ॥६॥ [११
१५उ] मधुरं सान्त्वितस्त्वेवं सुग्रीवेण स राघवः ।
मुखमश्रुपरिक्लिन्नं[12] वस्त्रान्तेन[13] प्रममृष्टवान् ॥७॥ [१५

---

१. कै ल₂—समस्कृत० ।
रा—०तमनाकुलं ।
२. श—सर्वतः ।
३. कै ल₁ ल₂ ब म श—चापि ।
४. रा भ च—तथा यत्नं ।
५. म—वध्यः ।
श—प्राप्स्यसि । (अपरहस्तेन)
६. अ ल₁ ल₂ ब म श रा भ च—
यथाहरे ।
ल₂—०थवा हरे। श—मैथिलीं ।
(अपरहस्तेन)
७. रा भ च—विसृश त्वं ।
८. ब—०मानवसीदति ।
९. कै ल₁ ब म श रा भ च—
प्रणयाद् वा ।
१०. ब—नांतरे ।
रा भ—अतः परमधिकः पाठः—
हितं वयस्यभावेन ध्रुवं चोपदिशामि ते ।
वयस्यं मानयन् राम न वै शोचितुमर्हसि ॥
११. कै अ ल₁ ल₂—नास्ति ।
१२. रा भ च—०मश्रुपरि०।
१३. ल₁—वक्रांतेन ।

१६] प्रकृतिस्थस्तु काकुत्स्थः सुग्रीववचनात प्रभुः ।
संपरिष्वज्य सुग्रीवमिदं वचनमब्रवीत् ॥८॥ [१६
१७] कर्तव्यं यद् वयस्येन स्निग्धेनावहितेन च ।
१८पू] अनुरूपं च युक्तं च कृतं सुग्रीव तत् त्वया ॥९॥ [१७
N] एषोऽस्मि प्रकृतिस्थोऽहमनुनीतस्त्वया सखे ।
१८उ] दुर्लभो हीदृशो बन्धुरस्मिन् काले विशेषतः ॥१०॥ [१८
किन्तु यत्नस्त्वया कार्यो मैथिलीपरिमार्गणे ।
१९] राक्षसस्य च रौद्रस्य रावणस्य दुरात्मनः ॥११॥ [१९
२०पू] मेया च तव यत् कार्यं विस्रब्धेन तदुच्यताम् । [२०पू
२२उ] एतत् ते प्रतिजानेऽहं सखे सत्येन ते शपे ॥१२॥ [२२उ
ततः प्रहृष्टः सुग्रीवो वानरैः सचिवैः सह ।
२३] राघवस्य वचः श्रुत्वा प्रतिज्ञां तुं विशेषतः ॥१३॥ [२३
महाऽनुभावस्य वचो निशम्य
हरिर्नराणामृषभस्य तस्य ।
कृतं स मेने कपिवीरमुख्यस्
N] तदा स्वकार्यं हृदयेन विद्वान् ॥१४॥ [२५

इत्यार्षे रामायणे किष्किन्धाकाण्डे रामाश्वासनं
नाम पञ्चमः सर्गः ॥ ५ ॥

---

१. म—यत् ।
२. कै—मया च (अपरहस्तेन प्रान्तरे) यत्करणीयं ।
अ ल₂—त्वया कार्यं स्वकं मम ।
रा भ च—मया च तव यदनुष्ठेयं ।
३. रा—तदुच्यते ।
४. कै अ ल₁ ब म श च—प्रतिज्ञातं ।
५. ब म—†कृतमनीकं ।
६. ल₁ ब म—हृदये नु वि० ।
रा भ—हृदयप्रवृद्धं ।
७. कै ल₁ ब म—किष्किन्द्राकाण्डे ।
ल₂ भ च—नास्ति ।





परितुष्टस्तु सुग्रीवस्तेन वाक्येन वानरः ।
१] लक्ष्मणस्याग्रजं राममिदं वचनमब्रवीत् ॥१॥ [१
सर्वथाऽहमनुग्राह्यो देवतानां न संशयः ।
२] उपपन्नो गुणोपेतः सखा यस्य भवान् मम ॥२॥ [२
शक्यं ननु भवेद् वीर सहायेन त्वया मम ।
३] परराज्यमपि प्राप्तुं स्वराज्यं किं पुनः सखे ॥३॥ [३
सोऽहं सभाग्यो बन्धूनां सुहृदां च ततो भृशम् ।
४] यथाऽग्निसाक्षिकं सख्यं लब्धं मे राघव त्वया ॥४॥ [४
अहमप्यनुरूपस्ते वयस्यो ज्ञास्यसे शनैः ।
५] न तु वक्तुं समर्थोऽहं स्वयमेवात्मनो गुणान् ॥५॥ [५
महात्मनां हि भूयिष्ठं त्वद्विधानां कृतात्मनाम् ।
६] निश्चला भवति प्रीतिर्धैर्यमात्मवतामिव ॥६॥ [६
८उ] निर्दोषश्च क्षमश्चैव वयस्यः परमा गतिः । [८उ
धनत्यागः सुहृत्त्यागो देशत्यागोऽथवा पुनः ।
९] वयस्यार्थे प्रवर्तन्ते स्नेहं दृष्ट्वा तथाविधम् ॥७॥ [९

---

१. ल$_2$—०वस्नेहवा० ।
२. भ—उपपन्नगुणो० ।
३. अ—०न्नो न संपेतः ।
४. भ च—सख्यं ।
कै अ ल$_1$ ल$_2$ ब म श—सर्वं ।
५. रा भ—खलु । च—‡व तु ।
६. भ च—†मया ।
७. कै—परं रा० ।
८. ल$_1$ ब म—†प्राप्तं ।
९. कै ल$_1$ ब श—†स्वराज्ये ।
म—‡सुराज्ये ।
१०. रा—† सुभाग्ये ।
११ ब म—†सुहृदं ।
१२. ब—अथाग्नि० । रा च—यास्याग्नि० ।
१३. च—†राघवस्त्वयं ।
१४. अ ल$_1$ ल$_2$ ब म श—†ज्ञायसे ।
१५. ल अ—†महात्मनां ।
१६. कै अ ल$_2$—† वयस्या ।
१७. कै अ ल$_1$ ल$_2$ ब म श—
वनत्यागः ।

तथा चेत्यब्रवीद् रामः सुग्रीवं प्रतिवादिनम् ।

१०] लक्ष्मणस्याग्रजो[1] लक्ष्म्या निवासस्य[2] च धीमतः ॥८॥ [१०

ततो रामं स्थितं दृष्ट्वा लक्ष्मणं च महाबलम् ।

११] सुग्रीवः सर्वतश्चक्षुर्वने लोलमपातयत् ॥९॥ [११

स ददर्श ततः सालम्[3] अविदूरे हरीश्वरः ।

१२] सुपुष्पितं वने कान्तं भ्रमरैरुपशोभितम् ॥१०॥ [१२

तस्यैकां पर्णबहुलां शाखां छित्त्वा[4] सुपुष्पिताम् ।

१३] सालस्या[5]स्तीर्य सुग्रीवो निषसाद ससराघवः[6] ॥११॥ [१३

तथाऽऽसीनौ[7] तदा दृष्ट्वा[8] हनुमानपि[9] लक्ष्मणम् ।

१४] सालशाखां[10] समानीय [11]विनीतं समवेशयत् ॥१२॥ [१४

ततः प्रहृष्टः सुग्रीवः श्लक्ष्णया[12]ऽथ गिरा तदा ।

१५] उवाच प्रणयाद् रामं बाष्पव्याकुललोचनः[13] ॥१३॥ [१५

अहं विनिष्कृतो राम चराम्येष भयार्दितः ।

१६] ऋष्यमूकाश्रमे त्रस्तो हृतभार्यः सुदुःखितः ॥१४॥ [१७

सु[14]संविग्नो भयार्तश्च[15] वने संभ्रान्त[16]मानसः ।

१७] वालिना निष्कृतो भ्रात्रा कृतवैरश्च राघव ॥१५॥ [१८

---

१. अ ल₂ रा भ—०णस्याग्रतो ।
२. रा भ च—निवासस्येव ।
३. रा भ च—शाल० ।
४. ल₁ ब म—भित्त्वा श—भित्त्वां ।
५. रा भ च—शालस्या० ।
६. कै—† च रा० । (प्रान्तेऽपरहस्तेन चकारोऽत्र निवेशितः) ।
७. ब म—†सदा ।
८. ब म—†दृष्ट्वा ।
९. रा—हनूमानपि ।
१० रा भ च—शाल० ।
  म—‡ शाखं ।
११. कै अ ल₂—‡ विनेतं ।
१२. ल₁—‡ श्लक्ष्णयश्च (श ?) ।
१३. अ ल₂—† ०लोचनं ।
  म—† ०लचेतनः ।
१४. ब—‡ ससंविग्नो ।
  म—‡ समंविग्नो ।
१५. रा—नास्ति ।
१६. भ—संभ्रांतमा०

वालिनो[1] वै भयार्तस्य सर्वभूताभयङ्कर[2] ।
१८] ममापि त्वमनाथस्य प्रसादं कर्तुमर्हसि ॥१६॥ [१९
एवमुक्तस्तु तेजस्वी धर्मज्ञो धर्मवत्सलः ।
१९] अभ्यभाषत काकुत्स्थः सुग्रीवं प्रहसन्निव ॥१७॥ [२०
उपकार[3]फलं मित्रं विदितं ते महाकपे ।
२०] अद्यैव[4] तं हनिष्यामि तव भार्याऽपहारिणम् ॥१८॥ [२१
इमे हि मे महाभाग पत्रिणस्तिग्मतेजसः ।
२१] कार्तिकेयवनो[5]द्भूताः शरा हेम-विभूषिताः ॥१९॥ [२२
कङ्क-पत्र-परिच्छन्ना[6] महेन्द्राशनि-सन्निभाः ।
२२] स्वर्ण[7]पुङ्खाः सुतीक्ष्णाग्राः सरोषा इव पन्नगाः ॥२०॥ [२३
तस्मात् त्वं वालिनं पश्य बाणैराशीविषोपमैः ।
२३] रणे विनिहतं भूमौ विकीर्णमिव पर्वतम् ॥२१॥ [२४
राघवेणैवमुक्तस्तु सुग्रीवो वानरेश्वरः ।
२४] प्रहर्षमतुलं लेभे राघवं चेदमब्रवीत् ॥२२॥ [२५
असंशयं प्रज्वालितैस्तीक्ष्णैर्मर्मातिगैः शरैः ।
स.८,२] त्वं[8] दहेः कुपितो लोकान् युगान्ते रश्मिवानिव[9] ॥२३॥ [स.११,२
वालिनः पौरुषं पश्य पश्य[10] धैर्यं यशस्तथा[11] ।
३] तन्ममैकमनाः[12] श्रुत्वा विधत्स्व यदनन्तरम् ॥२४॥ [३

---

१. भ—वालितो ।
२. कै अ ल$_1$, ल$_2$ च—|०ताभयंकरः ।
३. ल$_2$—उपकारकरं ।
४. म—अद्य वै ।
५. कै अ ल$_1$, ल$_2$ ब म च—०बलोद्भूताः ।
६. अ ल$_1$, ल$_2$ ब श—परिच्छिन्ना ।
७. कै ब म—‡ सुर्ण० ।
८. कै अ च—स्वं दहेत् (?)
९. रा भ—रश्मिमानिव ।
ल$_1$ ब म श—तं दहेत् ।
१०. रा भ—यच्च ।
११. रा भ च—यशश्च यत् ।
१२. कै ब म—०ममैकमनः ।

समुद्रात् पश्चिमात् पूर्वं दक्षिणादपि चोत्तरम् ।
४] क्रामत्यनुदिते सूर्ये वाली व्यपगतक्लमः ॥२५॥ [४
अग्राण्यारुह्य शैलानां शिखराणि महान्त्यपि ।
५] ऊर्ध्वमुत्क्षिप्य तरसा प्रगृह्णातीव च वीर्यवान् ॥२६॥ [५
बहवः सारवन्तश्च वनेषु विविधा द्रुमाः ।
६] वालिना तरसा भग्ना बलं स्वं ज्ञातुमिच्छता ॥२७॥ [६
स.९, ३६पू] महिषो दुन्दुभिर्नाम वीर्यवान् सुमहाबलः । [८पू
N] हिमवन्तं दुराधर्षं युद्धायाभिजगाम ह ॥२९॥ [N
ततो गिरिवरो दध्यौ केनोपायेन दुन्दुभिः ।
५०] न मां हन्याद् बलोत्सिक्तो हन्येतायं च केन वै ॥३०॥ [N
N] स मुहूर्तमिव ध्यात्वा हिमवानथ वालिनम् ।
५१] जगाम मनसा शैलो दुन्दुभिं चेदमब्रवीत् ॥३१॥ [N
दुन्दुभे युद्धदानाय नाहं प्रतिबलस्तव ।
५२] तत्र युद्धे समर्थो यः स सम्यगुपदिश्यते ॥३२॥ [N
किष्किन्धायां कपिश्रेष्ठो वाली नाम हरीश्वरः । [२३
५३] चरन् मधुवने तस्य मधु सर्वं विनाशय ॥३३॥ [N
स युद्धतृष्णातृषितो मदं ते नाशयिष्यति । [N

---

१. कै अ ल१ ल२ ब म श— + पूर्वात् ।
२. कै अ ल१ ल२ ब म श— + चोत्तरात् ।
३. श— + ०त्यनुदिनं ।
४. कै—नास्ति ।
रा भ च—प्रगृह्णाति वी० ।
५. ल१— + उरसा ।
६. कै अ ल२— + ०मिच्छतः ।
७. कै अ ल२ रा भ च—सः ।
८. रा भ च—दत्तं युद्धं तदप्याहुर्यत् स० ।
९. कै ल१ ब म—किष्किन्दायां ।
१०. ल१ ब म—कपिश्रेष्ठो ।
११. ल१ ब म—कपीश्वरः ।
रा भ च—महीश्वरः ।
१२. कै ल१ ल२ ब म श—पिबन् मधु वने ।

५७] न हि [1]शत्रुं समासाद्य जीवन्निह[2] विमोक्ष्यसे ॥३४॥ [N

५८पू] स विनद्य महानादं दुन्दुभिर्विजिगीषया ।

N] यथोद्दिष्टं हिमवता जगाम तच्चकार च[3] ॥३५॥ [N

N] तं जघानो(?नौ)[4]जसा वाली मेदिन्यां विचकर्ष च । [४७उ

८८पू] तस्य कैलाससंकाशमेतदस्थि प्रकाशते[5] ॥३६॥ [६८

उद्धर्तुमेतद् वाली वा शक्तो वाऽहं रघूत्तम[6] ।

सर्वप्राणभृतां लोके तृतीयं नोपलक्षये[7] ॥३७॥ [N

स.८,७] ईदृशो विक्रमो यस्य जवेनानुत्तमा[8] गतिः ।

[9]तं प्रचिन्तय काकुत्स्थ वध्येनै(?तै)केषुणा यथा ॥३८॥ [७०

८] अथ कोपयितुं नालं कालं पश्य क्षयावहम्[10] ।

स हि हिंस्येच्च नः सर्वान् वाली सरभसागतः[11] ॥३९॥ [N

९] तथा ब्रुवन्तं सुग्रीवं प्रहसंल्लक्ष्मणोऽब्रवीत् ।

११पू] कस्मिन् कर्मणि निर्वृत्ते श्रद्दध्या वालिनो वधम्[12] ॥४०॥[13] ७१

तमुवाच स सुग्रीवः सप्त तालानिमान् पुरा ।

एकैकमिषुणा वाली विव्याध न चिरादिव ॥४८॥[13] [७२

---

१. श—† शक्रं समा० ।

रा भ च—जातु स० ।

२. अ ल२—जीवन्निव ।

३. कै अ ल२—ह ।

४. कै अ ल१ ल२ ब म श च—०नोरसा ।

५. म—प्रकाश्यते ।

६. अ ल२—रघूद्वह ।

७. म—† ०लक्षते ।

८. कै ल१ ल२ ब म श—† स्त-वनानु० ।

९. अ ल२—† गत्वा तं प्रति ।

कै ल१ ब म—प्रति......

१०. रा भ च—क्षहामहे ।

११. ब ल१—व्यतिरिक्तपाठः—

† शरसमाहतः ।

ल१—‡ शिरसमाहतः ।

१२. अ—‡ वध्यं । ल२—‡ वधं ।

१३. कै अ ल१ ल२ ब म श च—नास्ति ।

रामो निष्पातयेदेवं[1] बाणेनैकेन लक्ष्मण ।
निःसंशयमहं वीर श्रद्दध्यां वालिनो वधम् ॥४२॥[2] [७३

इत्यार्षे रामायणे किष्किन्धाकाण्डे[3] वालिसंकीर्तनं
नाम षष्ठः सर्गः ॥ ६ ॥

---

१. भ—निष्पाटये देव ।
रा—॰देकं ।

२. कै अ ल१ ल२ ब म श ख—नास्ति ।

३. कै ल१ व म—किष्किन्दा॰ ।
च—नास्ति ।

४. रा भ—नास्ति ।

१३उ] एवमुक्त्वा[1] तु दुःखार्तो भूयो वचनमब्रवीत् । [N
१४उ] राम शोकाभिभूतोऽहं शोकार्तस्य भवान् गतिः ॥१॥
N] आर्तः[2] शोकसमाविष्टस्त्वयाऽहं परिदेवये[3] । [२६
१५] त्वं हि पाणिप्रदानेन वयस्यो मेऽग्निसन्निधौ ॥२॥
कृतः प्राणैर्बहुमतः सत्यमेतद् ब्रवीमि ते । [२७
१६] वयस्य इति कृत्वा तु विस्रब्धं प्रवदाम्यहम् ॥३॥[4]
दुःखमन्तर्गतं यन्मे मनो दहति नित्यशः । [२८
१७] एतावदुक्त्वा वचनं बाष्पव्याकुललोचनः ॥४॥
१८पू] दुःखोपहतया वाचा नोच्चैः शक्नोति भाषितुम् ।[5] [२९
N] सं (?स) निगृह्य ततो बाष्पं विमृज्याश्रूणि वानरः ॥५॥ [३१पू
सुग्रीवो वारितस्तेन राघवेणेदमब्रवीत् ।[5]
N] पुराहं वालिना राम राज्यात्स्वादवरोपितः ॥६॥[6]
परुषाणि च संश्राव्य निर्धूतोस्मि बलीयसा । [३२
भार्या च मे हृता तेन प्राणेभ्योऽपि गरीयसी ।[7]
N] सुहृदश्च[8] मदीया ये संयता बन्धनेषु[9] ते ॥७॥ [३३
२२] यत्नवांश्च सं[10] दुष्टात्मा मे[11] विनाशाय राघवे[12] ।

---

१. कै ल$_1$ ब म श रा भ च—
एवमुक्तस्तु ।

२. ल$_1$ ब म च—अन्तःशोक० ।
रा भ—श्रान्तः शो० ।

३. कै अ ल$_1$ ल$_2$ ब म श—
‡परिदेव्यते ।

४. कै अ ल$_2$—नास्ति ।

५. रा भ—अतः परमधिकः ।
बाष्पवेगं तु सहसा नदीवेगमिवागतं ।
धारयन् स तु धैर्येण सुग्रीवो रामसंनिधौ ॥

६. कै अ ल$_1$ ल$_2$ ब म श च—
नास्ति ।

७ कै अ ल$_1$ ल$_2$ ब म श—नास्ति ।

८. कै—‡ सुहृदाश्च ।

९. कै अ ल$_1$ ल$_2$ ब म श—
संहता वै वनेषु ।

१०. कै ल$_1$ ब श रा भ च—सुदुष्टा० ।

११. कै रा अ ल$_1$ ल$_2$ ब भ श—
विनाशयति ।

१२. कै—†रावणम् ।

२३उ] बहुशस्तत्प्रमुक्ता[1] हि निहता वानरा मया ॥८॥[2] [३४
ततः सन्धारयामीह प्राणान् कृच्छ्रगतोऽपि सन् । [३६उ
२५] एते हि कपयः स्निग्धा मां रक्षन्ति समन्ततः ॥९॥
२६पू] सह गच्छन्ति[3] गन्तव्ये नित्यं तिष्ठन्ति तिष्ठतः । [३७
N] संक्षेपस्त्वेष ते राम किमुक्त्वा विस्तरं बहु ॥१०॥
स मे ज्येष्ठो रिपुर्भ्राता वाली विश्रुतपौरुषः । [३८
N] तद्विनाशेन मे दुःखं प्रमृष्टं[4] स्यादनन्तरम् ॥११॥
२६उ] यस्तु तं समरे हन्यात् स स्यात् प्राणप्रदः सुहृत् । [३९
एष ते राम कार्यार्थः शोकार्तेनाभिवेदितः[5] ॥१२॥
N] सुखितो दुःखितो वाऽपि सख्युर्नित्यं[6] सखा[7] गतिः । [४०
श्रुत्वा तु तद्वचो रामः सुग्रीवं वाक्यमब्रवीत् ॥१३॥
२८] किं निमित्तमिदं वैरं श्रोतुमिच्छामि तत्त्वतः । [४१
तदहं कारणं श्रुत्वा वैरस्य तव वानर[8] ॥१४॥
२९] अनन्तरं विधास्यामि[9] सम्प्रधार्य[10] बलाबलम् ॥१५॥ [४२
३०पू] बलवान् हि ममामर्षः श्रुत्वा त्वामवमानितम् ।
N] वर्धते हृदयोत्कम्पी प्रावृषमेघ[11] इवाम्बरे ॥१६॥ [४३

---

१. कै अ ल$_1$ ल$_2$ ब म श—
बहुशस्तु प्र० ।
२. रा भ—अतः परमधिकः पाठः—
एतयैव च दृष्टस्त्वं शंकये वाद्य राघव ।
नोपशांतिः पुरा प्रीत्या भयमेवोपस्थितं ॥
केवलं तु सहाया मे हनुमत्प्रमुखा ह्यमी ।
३. अ ल$_1$ च श—† गच्छति ।
ल$_2$ ब म —‡ चच्छति ।
४. कै—प्रनष्टं ।
ल$_1$ ल$_2$ ब म श—प्रणष्टं ।

५. रा भ च—०न निवेदितः ।
६. अ ल$_2$—०निर्जस० ।
७. श—† सतां ।
८. ल$_5$ ब म श च—वानरर्षभ ।
९. ब—प्रधास्यामि ।
१०. ल$_1$ ब श—संप्रधाय ।
म संप्रदाय ।
११. अ—प्रावृड्वेग इ० ।
म—‡ प्रावृड्मेघ इ० ।
रा भ च—प्रावृड्वेग इवांभसि ।

३०उ] हृष्टः कथय विस्रब्धं यावदारोप्यते धनुः ।
स्पृष्टांश्च हि मया बाणा निरस्तश्च रिपुस्तव ॥१७॥ [४४

३१] एवमुक्तस्तु सुग्रीवो राघवेण महात्मना ।
प्रहर्षमतुलं लेभे सचिवैः सह वानरः ॥१८॥ [४५

३२] ततः प्रहृष्टवदनः सुग्रीवो लक्ष्मणाग्रजम् ।
३३पू] वैरस्य परमं तत्त्वमाख्यातुमुपचक्रमे ॥१९॥ [४६

श्रूयतां राम यद् वृत्तमादितः प्रभृति त्वया ।
N] यथा वैरं समुत्पन्नं यथा चास्मि तिरस्कृतः ॥२०॥ [स.९,१

३३उ] वाली नाम मम भ्राता ज्येष्ठः शत्रुनिबर्हणः ।
पितुर्बहुमतो नित्यं मम चापि पुरा तथा ॥२१॥ [२

३४] पितर्युपरतेऽस्माकं ज्येष्ठोऽयमिति मन्त्रिभिः ।
कपीनामीश्वरो वाली कृतः परमसम्मतः ॥२२॥ [३

३५] राज्यं प्रशासतस्तस्य पितृपैतामहं महत् ।
अहं सर्वेषु कार्येषु प्राणदः प्रेष्यवत् सदा ॥२३॥ [४

३६] मायावी नाम तेजस्वी पर्वजो दुन्दुभेः सुतः ।
तेन तस्य महद् वैरं स्वीकृतं विश्रुतं तदा ॥२४॥ [५

३७] स तु सुप्ते जने रात्रौ किष्किन्धाद्वारमागतः ।
३८पू] नर्दति स्म सुसंरब्धो वालिनं चाह्वयन् युधि ॥२५॥ [६

श्रुत्वा तु तं मम भ्राता नर्दन्तं भैरवस्वनम् ।

---

१. कै अ ल२ रा भ च—सृष्टाश्च ।
२. ल१—+ त्वयः ।
म श—+ त्वयि ।
३. रा भ—निराकृतः ।
४. म—+ प्रणदः ।
५. कै अ ल२ ब म—+स्वीकृतं ।
६. ल१—नास्ति ।
७. रा—+ सुप्तजने ।
८. ल१ ब म—किष्किन्दा० ।
९. रा भ च—नर्दति ।
१०. ब—०त्वा तं तु । म—०त्वा च तं ।
श—श्रुत्वागतं ।
११. रा भ च—नर्दतं ।
१२. रा भ च—भैरवं स्वनं ।

३९] नादं न ममृषे वाली निष्पपात गुहामुखात् ॥२६॥ [७

N] स तु निष्पतितः क्रोधान्निहन्तुमसुरोत्तमम् ।

N] वार्यमाणस्तदा स्त्रीभिर्मया च प्रणतात्मना ॥२७॥ [८

४०] स तु निर्धूय तान् सर्वान् निर्जगाम महाबलः ।

ततोऽहमपि सौहार्दाद् वालिनं पृष्ठतोऽन्वगाम् ॥२८॥ [९

४१] स तु तं वालिनं दृष्ट्वा मां च दूरादवस्थितम् ।

असुरो जातसन्त्रासः प्रदुद्राव दिशस्तदा ॥२९॥ [१०

४२] तं प्रा( ?प्र )द्रवन्तं सन्त्रासादावां द्रुततरं गतौ ।

प्रकाशं हि गतं मार्गे चन्द्रेणोदयता तदा ॥३०॥ [११

४३] स तृणैरावृतं दुर्गं धरण्यां विवरं महत् ।

प्रविवेशासुरो वेगादावां द्वारे व्यवस्थितौ ॥३१॥ [१२

४०] तं प्रविष्टं बिले दृष्ट्वा रिपुं क्रोधवशं गतः ।

मामुवाच ततो वाली प्रणतं पुरतः स्थितम् ॥३२॥ [१३

४५] इह त्वं मां प्रतीक्षस्व बिलद्वारे समाहितः ।

यावदेव प्रविश्याहं निहन्मि समरे रिपुम् ॥३३॥ [१४

४६] मयाप्येतद् वचः श्रुत्वा याचितो भ्रातृगौरवात् ।

शापयित्वा तु मां प्राणैः प्रविवेश बिलं तदा ॥३४॥ [१५

४७] तस्य प्रविष्टस्य बिलं साग्रः संवत्सरो गतः ।

स्थितस्य च मम द्वारि स कालो व्यत्यवर्तत ॥३५॥ [१६

---

१. ल$_1$ ब म श—असुरर्षभं ।
२. ल$_1$ ब म भ—०स्तथा ।
  रा—०स्ततः ।
३. कै—† ०र्दया ।
४. कै म—‡ ०नुगां ।
५. अ ल$_2$—† प्रकाशरहितं ।
६. कै अ ल$_2$ रा भ च—मार्गं ।
७. कै अ ल$_1$, ल$_2$ ब म श च—नास्ति ।
८. कै अ ल$_1$, ल$_2$ ब म श च—नास्ति ।
९. रा भ—वचनं ।
१०. अ रा—मां ।
११. ल$_1$, ल$_2$ ब म श—‡ शपयित्वा ।
१२. अ ल$_2$—मम च ।
  म—† मया च ।
१३. ल$_1$—‡ व्यति वर्तत ।
  अ—‡ व्यतवर्तत ।

४८] न निष्क्रामति [1]वालीति ततोऽहं [2]भृशदुःखितः ।
कातरो बुद्ध्यभावेन काक(?पाप)शंकीव मे मनः॥३६॥ [१७

४९] अथ दीर्घस्य कालस्य बिलद्वाराद्विनिःसृतम् ।

५०पू] सफेनं रुधिरं दृष्ट्वा ततोऽहं भृशदुःखितः ॥३७॥[3] [१८

५०उ] [4]नदतामसुराणां च ध्वनिर्मे श्रोत्रमागतः ।
विश्वस्तस्य च संग्रामे क्रोशतो निःस्वनो महान् ॥३८॥ [१९

५१] अहं [5]त्वपागतो बुद्ध्वा [6]चिह्नैश्च भ्रातरं [7]हतम् ।

५२उ] दुःखार्तश्[8]चोदकं कृत्वा [9]किष्किन्धामागतस्तदा ॥३९॥ [२०
गूहमानं [10]च [11]मे यत्नात् तं [12]चै भ्रातृविपर्ययम् ।

५३] [13]श्रुतं तैर्मन्त्रिभिः [14]सर्वैस्ततोऽहमभिषेचितः ॥४०॥ [२१
राज्यं [15]प्रशासमाने तु न्यायतो मयि राघव ।

५४] आजगाम रिपुं हत्वा वाली तमसुरोत्तमम् ॥४१॥ [२२
अभिषिक्तं तु मां दृष्ट्वा क्रोधसंरक्तलोचनः ।

५५] मदीयान् मन्त्रिणो बद्ध्वा परुषं [16]वाक्यमब्रवीत् ॥४२॥ [२३
निग्रहेऽपि[17] स[17]मर्थस्य तं पापं प्रति राघव ।

५६] न [18]प्रावर्तत मे [19]बुद्धिर्हन्तुं भ्रातरमग्रजम् ॥४३॥ [२४

---

१. म—वाली । ( प्रथमपादान्ते तिकारो भ्रष्टः )
२. म—+ तृशदुःखि० ।
३. कै अ $ल_1$, $ल_2$ ब म श च—नास्ति ।
४. रा भ च—नर्दताम० ।
५. अ $ल_2$ ब भ च—त्वपग० ।
रा भ—त्ववग० ।
६. रा भ च—+ ०ह्नैः स्वभ्रा० ।
७. श—+ महत् ।
८. $ल_1$—०श्चोदरं ।
९. कै $ल_1$ ब म श—किष्किन्दामा० ।
१०. रा भ च—तु ।
११. रा भ च—मां ।
१२. रा भ च—वै ।
१३. $ल_1$ ब म श—+ द्रुतं ।
१४. $ल_1$—+ सर्वैस्ततो ।
१५. $ल_1$ ब—+ प्रशास्यमाने ।
१६. रा भ च—०क्यमुक्तवान् ।
१७. म—०हे समर्थं तं ।
$ल_1$—+ समर्थो सि ।
१८. अ $ल_2$—+ प्रवर्तेत मे ।
१९. भ—बुद्धिर्हि ह० ।

मानयंस्तु[1] महात्मानं यथावदभ्यवादयम्[2] ।
८७] नोचितांश्चाशिषोऽदान्मे[3] कलुषेण[4]ान्तरात्मना ॥४४॥ [२६उ
N] लक्षयामि सुसंक्रुद्ध[5]मिङ्गितैरतथोचितम् । [N
तं तु[6] क्रोधसमाविष्टं संरब्धं समुपस्थितम्[7] ॥४५॥
स.९,१]अहं प्रसादयांचक्रे भ्रातरं हितकाम्यया । [स.१०,१
दिष्ट्याऽसि कुशली प्राप्तो दिष्ट्या च[8] निहतो रिपुः ॥४६॥
२] अनाथस्य च मे नाथस्त्वमेको बलवत्तरः[9] । [२
इदं बहुशलाकं[10] ते पूर्णचन्द्रसमप्रभम् ॥४७॥
३] छत्रं सवालव्यजनं प्रतीच्छ त्वं मयोद्धृतम्[11] । [३
४पू] त्वमेव राजा[12] नाथश्च[12] स एवास्मि यथा पुरा ॥४८॥
न्यासभूतमिदं राज्यं प्रतिनिर्यातयाम्यहम् ।[13] [४
५] मा च रोषं कृथा वीर मम शत्रुनिषूदन ॥४९॥
एष[14] ते[15] शिरसा राजन् मया बद्धोऽयमञ्जलिः । [५
६] बलादस्मिन्[16] समागम्य मन्त्रिभिः पुरवासिभिः ॥५०॥
७पू] राज्यभारे[17] नियुक्तोऽहं त्वया हीने पुरेऽनघ । [१०

---

१. ल$_1$ ब म श—†०यंस्त्वहमग्रण्यं ।
रा भ च—†०यंस्त्वहमात्मानं ।
२. कै ल$_1$ रा भ च—†०वदभिवादयम् ।
म—०व-स्यवादयत् ।
३. कै ल$_1$ अ ब म ल$_2$ श च—
उचिताश्चाशिषो दत्त्वा ।
४. रा भ—कलुषेन ।
५. श—सुसंरब्धमि० ।
रा भ च—०मिङ्गितैरतथोचितैः ।
६. अ—च ।
७. ल$_1$ ब म श—समवस्थितम् ।
रा भ च—मामुपस्थितम् ।
८. कै —०ष्ट्यापि ।
९. कै अ ल$_2$ रा भ च—नाथवत्तरः ।
१०. म—च ।
११. रा भ च—† मयोदितम् ।
१२. ल$_1$ ब म श—नाथ राजा च ।
१३. अ ल$_2$—नास्ति ।
१४. रा भ च—याचे ।
१५. रा भ च—त्वां ।
१६. कै—प्रान्तेऽपरहस्तेन बिलादिष्वपि दृश्यते ।
१७. कै अ ल$_2$ ल$_1$ ब म च श—
राज्यभारनि० ।

स्निग्धमेव[1] ब्रुवाणं तु स मां[2] निर्भर्त्स्य वानरः।
८] धिक् त्वामिति ममायुक्तं[3] बहुशस्तदुवाच[4] ह ॥५१॥ [११
प्रकृतीस्तु समानीय मन्त्रिणस्त्वेवं[5] सम्मतान्[6]।
९] मामुवाच सुहृन्मध्ये वाक्यमेतत् सुदारुणम् ॥५२॥ [१२
विदितं वो यथा रात्रौ मायावी स महासुरः।
१०] मां समाह्वयते नित्यं युद्धकाङ्क्षी रिपुर्मम ॥५३॥ [१३
तस्य तद्गर्जितं[7] श्रुत्वा निर्गतोऽहं निजालयात्।
११] अनुयातश्च[8] मे भ्राता ह्ययमेव[9] सुदारुणः ॥५४॥ [१४
स तु दृष्ट्वैव मां रात्रावद्वितीयं विनिर्गतम्। [१५पू
१२] त्वरितः प्राद्रवद् भीतः[10] पृष्ठतो नावलोकयन्[11] ॥५५॥ [१६
१३पू] विद्रवन्तं ततो दृष्ट्वा निशायां तत्र दानवम्।
अहं चायं च सुग्रीवः सह यातुं[12] व्यवस्थितौ ॥५६॥ [N
N] रोषगाढेन तु मया पार्श्वस्थो हरिपुङ्गवः। [N
१५उ] अयमुक्तोऽशुचिर्भ्राता पिशुनः क्रोधवर्धनः ॥५७॥ [१७उ
अहत्वा नास्ति मे शक्तिः प्रतिगन्तुमितः पुरीम्।
१६] बिलद्वारे प्रतीक्षस्व यावदागमनं मम[13] ॥५८॥ [१८
१७पू] स्थितोऽयमिति[14] मत्वाऽहं प्रविष्टस्तन्महाबिलम्। [१९पू

---

१. ल१ ब म श—०मेव।
२. कै अ ल२ रा भ च—तु।
३. कै अ ल२—† समायुक्तं।
रा भ च—स मामुक्त्वा।
४. भ—वहु तत्तदुवा०।
५. रा भ च—०श्चैव।
६. म—† संमतं।
७. अ ल१ ल२ ब म—तदूर्जितं।
८. ल१ ब श—† अनुजातश्च।
म—अनु...च।
९. रा भ च—अयमेव।
श—स्वयमेव।
१०. कै अ ल१ ल२ ब म, श—भ्राता।
११. कै अ ल१ ल२ ब म श—मावलोकयन्।
१२. कै अ ल२ श—† यातं।
१३. अ ल२ भ च—‡ ०दागमनान्मम।
१४. अ ल२—‡ ०तोऽहमि०।

N] प्रविष्टो यत्र दुष्टात्मा दुन्दुभेः पूर्वजः सुतः ॥५९॥ [N
१७उ] तं च मे मार्गमाणस्य तत्र संवत्सरो गतः ॥६०॥ [१९उ
स हि दृष्टो मया शत्रुर्[1]निर्वेदभयार्दितः ।
१८] निहतश्च मया युद्धे सानुगः सहबान्धवः ॥६१॥ [२०
आस्यात् तु संप्रवृ[2]त्तेन रुधिरौघेन[3] तद् बिलम् ।
१९] पूर्णमासीद्दुरः[4]क्रामं स्तनतस्तस्य भूतले ॥६२॥ [२१
सूदयित्वा तु तं[5] शत्रुं मायाविनमहं तदा ।
२०] निष्क्रामं[6]स्तत्र पश्यामि बिलस्य पिहितं मुखम् ॥६३॥ [२२
मम विक्रोशतं[7]श्चैव सुग्रीवेति पुनः पुनः ।
२१] मम प्रतिवचो नास्ति तदहं भृशदुःखितः ॥६४॥ [२३
उपलेनास्मि संरुद्धो राज्यमन्विच्छताऽमुना ।
२३] सुग्रीवेण नृशंसेन न स्मृतं भ्रातृसौहृदम् ॥६५॥ [२५
एवमुक्त्वा तु मां तत्र वासस्यैकेन वानरः ।
२४] तदा निर्वासयामास वाली[8] विगतसाध्वसः[9] ॥६६॥ [२६
२५] तेनाहमपविद्ध[10]श्च हृतदारश्च मानद ।
२७पू] तद्भयाच्च महीं कृत्स्नां विचरामि सुदुःखितः[11] ॥६७॥ [२७

---

१. अ ल२—०र्भनिर्वेद० ।
कै—०दद्यार्दितः ।
२. कै अ ल१ ल२ ब म श—संप्रवृद्धेन ।
३. रा भ च—रुधिरौघेण ।
४. कै—†०दुरः कामं । अ—दुरःकार्षं ।
ल२—‡०दुरःकाशं ।
रा भ च—‡पुरःकांतं ।
म श—‡०दुरा कामं ।
५. ल१ ब म श—तमहं ।
६. अ ल—०मं च न ।
कै रा भ च— न तु ।
७. म—‡विक्रंशतः चैव ।
८. भ—†स वाली ।
९. रा—संगतमानसः ।
१०. कै—०हमुपवि०
११. म—च दुःखितः ।

ऋष्यमूकं गिरिवरं भार्याहरण[1]कर्षितः।
N] प्रविष्टोऽस्मि दुराधर्षं वालिनः[2] कारणान्तरे ॥६८॥ [२८
एतत् ते सर्वमाख्यातं वैरादि[3]कारणं महत्।
२९] अना[4]गसा [5]मया प्राप्तं व्यसनं पश्य राघव ॥६९॥ [२९
[6]वालिनो हि भयार्तस्य सर्वलोकाभयङ्क[7]र।
३०] कर्तुमर्हसि मे वीर प्रसादं तस्य निग्रहे ॥७०॥ [३०
एवमुक्तः स तेजस्वी धर्मज्ञो धर्मसंहितम्।
३१] वचनं वक्तुमारेभे सुग्रीवं प्रहसन्निव ॥७१॥ [३१
अमोघाः सूर्यसङ्काशा [8]मम ते निशिताः शराः।
३२] तस्मिन् वालिनि दुर्वृत्ते निपतिष्यन्ति दारुणाः ॥७२॥ [३२
यावत् तं नेह पश्यामि तव भार्यापहारिणम्।
३३] तावज्जीवति पापात्मा [9]शुभचारित्रभूषण ॥७३॥ [३३
३४पू] आत्मा[10]नुमानात् पश्यामि [11]मग्नं त्वां शोकसागरे।
N] त्वामहं तारयिष्यामि यावत् प्राप्स्या[12]मि दुर्हृदम्[13]॥७४॥ [३४
राघवेणैवमुक्तस्तु सुग्रीवो वानरो[14]त्तमः।
N] प्रहर्षमतुलं लेभे प्रहृष्टश्चेदमब्रवीत् ॥७५॥ [३५

---

१. म—०कर्षणक०।
२. ल$_1$ ब म श—वालिना।
३. कै अ ल$_2$ भ—०दिकरणं।
४. रा—अतस्तन्०। भ—ततस्त०।
ल$_1$—अनागसां। ब—अनागसं।
५. ल$_1$ ब म—मम।
६. च—वालितो।
७. अ ल$_1$ ब म श—लोकाभयंकरः।
रा भ च—०लोकभयापह।
८. कै—ममैते (अपरहस्तेन)।
९. अ ल$_2$—०रित्रभूषणः।
रा भ—तव चारित्रदूषणः।
च—† तव चारित्रभूषणः।
१०. अ ल$_2$—आत्मानुभावात्।
११. रा भ च—मग्नस्त्वं।
१२. रा च—प्राप्स्यसि।
१३. कै अ ल$_1$ ल$_2$ ब श रा भ च—पुष्कलं।
१४. अ ल$_2$—वानरर्षभ।

एवमेतन् महाबाहो यथा वदसि राघव ।
N] त्वमलं समरे जेतुं[1] सेन्द्रानपि दिवौकसः ॥७६॥ [N
यथा हि लोकस्य चराचरस्य
दिवाकरो भाति हि रश्मिमाली ।
यथा च[2] सर्वेषु मृगेषु केसरी
N] तथा नृपेषु त्वमुदारविक्रमैः[3] ॥७७॥ [N

इत्यार्षे रामायणे किष्किन्धाकाण्डे[4] सुग्रीववाक्यं नाम
सप्तमः सर्गः ॥ ४ ॥

———

१. रा भ च—त्वं दहेः कुपितो राम।
२. ल$_1$ ब म श—हि ।
३. अ ल$_2$—०दारदर्शनः ।
४. कै ल$_1$ ब म—किष्किन्दाकाण्डे ।
रा भ च—नास्ति ।

## [वं०–९,११,१२] = [ अष्टमः सर्गः ] = [दा०–११]

स तु तद् वचनं श्रुत्वा राघवस्य महात्मनः ।
३५] सुग्रीवः परमप्रीतः काकुत्स्थमिदमब्रवीत् ॥१॥

आसीन् महासुरः कश्चिद् दुन्दुभिर्नाम नामतः ।
३६] बलं नागसहस्रस्य [1]वैरयामास वीर्यवान् ॥२॥ [९

वीर्योत्सेकेन दुष्टात्मा वरदानाच्च निर्भयः ।
३७] स जगाम महाकायः समुद्रं [2]सरितां पतिम् ॥३॥ [१०

सोऽभिपत्योर्मि[3]संबाधं सागरं वरुणालयम् ।
३८] मम युद्धं प्रयच्छेति तमुवाच [4]महार्णवम् ॥४॥ [११

ततः समुद्रो धर्मात्मा समुत्थाय महास्वनः ।
३९] अब्रवीत् तं सुसंक्रुद्धमसुरं कालचोदितम् ॥[5]५॥ [१२

समर्थो नास्मि ते दातुं युद्धं युद्धविशारद ।
४०] श्रूयतामभिधास्यामि यस्ते युद्धं प्रदास्यति ॥६॥ [१३

शैलराजो महाऽर[6]ण्यस्तपस्विशरणं परम् ।
४१] शङ्कर[7]श्वशुरो नाम्ना हिमवानिति विश्रुतः ॥७॥ [१४

[8]गुहाप्रस्रवणोपेतो बहुकन्दरनिर्झरः ।
४२] स समर्थस्तव प्रीतिमतुलां कर्तुमाहवे ॥८॥ [१५

स भीतमिति विज्ञाय समुद्रमसुरोत्तमः ।
४३] हिमवन्त[9]मथागच्छच्छरश्चापादिव च्युतः ॥९॥ [१६

---

१. कै रा भ च—धारयामास वीर्य० ।
म—दधार स महाबलः ।
ल$_1$ ब श—धार... ।(त्रुटितःपाठः)

२. अ ल$_2$—सरितां वरं ।

३. ल$_1$—०संवादं ।

४. ल$_1$ ब म श—महाच्छविं ।

५. कै अ ल$_2$—नास्ति ।

६. रा भ—महारण्यस्त० ।

७. अ—†शंकरश्च पुरो ।
ल$_2$—शंकरस्य ( श्व ? ) शुरो ।

८. ल$_1$ ब—‡गुहप्र० ।
श—‡०प्रक्षणोपेतः ।
ल$_1$—‡०प्रस्रवनोपेतः ।

९. म—†०महाग० ।

ततस्तस्य गिरेस्[1]तत्र गजेन्द्र[2]विपुलाः शिलाः ।
४५] चिक्षेप बहुला भूमौ दुन्दुभिर्विननाद च ॥१०॥ [१७
ततः सोमस्य सदृशः सोमस्येव प्रभाकृतिः ।
४६] हिमवानब्रवीद् वाक्यं स्वं[3] एवं शिखरे स्थितम् ॥११॥ [१८
हन्तुमर्हसि मां न त्वं दुन्दुभे धर्मवत्सलम् ।
४७] दुराधर्षो रणे च त्वं[4] तपस्विशरणो ह्यहम् ॥१२॥ [१९
तस्य तद् वचनं श्रुत्वा गिरिराजस्य धीमतः ।
४८] प्रगर्जन्नप्रशान्तात्मा वाक्यं प्रोवाच दुन्दुभिः ॥१३॥ [२०
यदि युद्धेऽसमर्थस्त्वं मद्भयाद् वा निरुद्यमः ।
४९] तमाचक्ष्व प्रदद्यान्मे योऽद्य युद्धं युयुत्सवे ॥१४॥ [२१
हिमवानब्रवीद् वाक्यं श्रुत्वा वाक्यविशारदः[5] ।
N] अनुक्तपूर्वं धर्मात्मा दुन्दुभिम्[6]असुरोत्तमम् ॥१५॥ [२३
वाली[7] नाम[8] महाप्राज्ञः शक्रपुत्रः प्रतापवान् ।
५३] अध्यास्ते वानरः श्रीमान् किष्किन्धा[9]मतुलप्रभः ॥१६॥ [२३
स दास्यति महावीर्यस्तव युद्धं (ि्द्ध-) विशारदः[10] ।
५४] द्वन्द्व[11]युद्धं महाघोरं नमुचेरिव वासवः ॥१७॥ [२४
तं[12] क्षिप्रम[13]धिगच्छाद्य यदि युद्धे मनस्तव ।
५५] स हि दुर्धर्षणो वाली नित्यं समरे[14]कर्मणि ॥१८॥ [२५

---

१. कै अ ल२ श रा भ च—गिरेस्तात ।
२. रा—राजेन्द्र ।
३. म श—स एव ।
४. च—दुराधार्यो रणौघे त्वं ।
रा—† दूराद्धर्यो रणोद्धर्षे ।
भ—‡दूराद्धणे रणोद्धर्षे ।
५. म—वाक्यविदांवर ।
६. ल१ ब म—†दुर्मतिम० ।
रा भ च—†दूरात्तम० ।
भ—प्रान्तेऽपरहस्तेन—दुंदुभिम० ।
७. म श—‡वालिर्नाम ।
८. कै ल१ ब श—०प्राज्ञ ।
९. ल१ ब म—किष्किन्दा० ।
१०. कै अ च—विशारद ।
११. रा भ—तत्र युद्धं ।
१२. अ ल२—क्षिप्रंतम० ।
१३. रा भ—तव त्वरा ।
१४. म—† ०रकर्मणः ।

स तच्छ्रुत्वा हिमवतः पर्वतेन्द्रस्य भाषितम् ।
५९] आजगाम पुरीं रम्यां किष्किन्धां वालिपालिताम् ॥१९॥ [२६
धारयन् माहिषं रूपं तीक्ष्णशृङ्गो भयावहः ।
६०] प्रावृषेण्यो यथा मेघस्तोयपूर्णो नभस्तले ॥२०॥ [२७
स निष्पीड्य महाद्वारं किष्किन्धाया महाबलः ।
६१] ननाद कंपयन् भूमिं दुन्दुभिर्दुन्दुभिस्वनः ॥२१॥ [२८
समीपस्थान् द्रुमान् भंक्त्वा वसुधां दारयन् खुरैः ।
६२] विषाणैरुल्लिखन् दर्पाद् तद् द्वारं जलदो यथा ॥२२॥ [२९
ततो वेश्मगतो वाली श्रुत्वा शब्दममर्षणः ।
६४] निष्पपात वृतः स्त्रीभिस्ताराभिरिव चन्द्रमाः ॥२३॥ [३१
स्वरं त्यक्त्वाक्षरपदं तमुवाच स दुन्दुभिम् ।
६५] हरीणामीश्वरो वाली सर्वेषां वनचारिणाम् ॥२४॥ [३१
किमर्थं नगरद्वारमिदं[11] रुद्ध्वा[12] विनर्दसि[13] ।
६६] दुन्दुभे विदितो[14] मे त्वं रक्ष[15] प्राणान् महासुर ॥२५॥ [३२

---

१. रा भ—जगाम तां ।
२. कै अ ल₁ ल₂ ब म श—†लक्षां ।
३. कै ल₁ ब म—किष्किन्दां ।
४. च—०श्रृङ्गं भयावहं ।
५. रा भ च—प्रावृषीव ।
६. अ ल₁ ल₂ ब म श—महामेघस्तो० ।
७. कै ल₁ ब म—किष्किन्दाया ।
८. रा भ च—ननर्द ।
९. ल₂—वालीतिपदादुत्तरवर्त्ती उत्तरपद्यस्थवालीतिपदान्तः पाठो नास्ति ।
१०. कै—शब्द० इति प्रोञ्छय युद्ध० इति प्रान्तेऽपरहस्तेन ।
११. अ ल₂—†०मिमं ।
१२. अ ल₂—गत्वा ।
१३. अ ल₂ श—विनश्यसि ।
रा भ च—विनर्दसि ।
१४. म श—† विदितं ।
१५. रा भ—रक्षमाणो हि जीवसि ।
भ—प्रान्तेऽपरहस्तेन-रक्ष प्राणान् महासुर ।

तस्य तद् वचनं श्रुत्वा वानरेन्द्रस्य धीमतः ।

६७] उवाच दुन्दुभिर्वाक्यं क्रोधात् संरक्तलोचनः ॥२६॥ [३३

न त्वं स्त्रीसन्निधौ वीर गर्जितुं[1] वानरार्हसि ।

६८] मम युद्धं प्रयच्छ त्वं ततो ज्ञास्यसि मे बलम् ॥२७॥ [३४

अथवा मर्षयिष्यामि क्रोधमद्य निशामिमाम् ।

६९] गम्यतामद्य[2] तत्[3] स्वैरं कामभोगेषु वानर ॥२८॥ [२८

यो मत्तं वा प्रमत्तं वा सुप्तं वा रहितं नरम् ।

७०] हन्यात स निरयं[4] गच्छेत् त्वद्विधं मदविक्लवम्॥ [5]२९॥ [३९

N] तस्य तद् वचनं श्रुत्वा वानरेन्द्रः प्रतापवान् । [N

संप्रहस्याब्रवीद् वाक्यं[6]मिदं मन्दं महासुरम् ॥३०॥

७१] विसृज्य[7] ताः स्त्रियः सर्वास्ताराप्रभृतयस्तदा । [३९

७२,७३पू]मत्तोऽयमिति विज्ञाय यदि भीतोऽसि संयुगे[8]॥३१॥ [४०पू

दैत्यापसद[9] याहि त्वं यदि जीवितुमिच्छसि । [N

N] मंदो[10] दोरय प्रहारेऽस्मिन् दैत्यप्राणान् हरिष्यति[11]॥३२॥ [४०उ

तमेवमुक्त्वा संक्रुद्धो मालामामुच्य[12] काञ्चनीम् ।

७४] पित्रा दत्तां महेन्द्रेण युद्धाय व्यवतिष्ठत ॥३३॥ [४१

---

१. अ ल$_2$—गदितुं ।

२. कै अ ल$_2$ रा भ च—गृह्यतामद्य ।

३. रा भ च—यत् ।

४. म—नरकं ।

५. रा भ—

हन्यात्प्रसभं हन्याद् त्वद्विधं मंदविक्रमं ।

६. कै ल$_2$—वाक्यमिव ।

ल$_1$ ब—वाक्यमिति मं० ।

७. ल$_1$ ब श—विनिःसृताः ।

म—†विस्कृतास्ताः ।

८. भ—

मत्तोयमिति विज्ञाय मा मां गर्जितुमर्हसि ।

व्यपनेष्ये रणश्रद्धां यदि स्थास्यसि मेग्रतः॥

मत्तेजसा तर्जितस्त्वं यदि भीतोसि संयुगे ।

९. ल$_1$ ब म—†दैत्यापसाद ।

१०. रा—यदायं संप्रहारो मे ।

भ—न चेदयं प्रहारो मे ।

च—मंदोयं संप्रहा० ।

११. म—हनिष्यति ।

१२. रा—मालामुन्मुच्य ।

स गृहीत्वा विषाणाभ्यां दुन्दुभिं गिरिसन्निभम्[1] । [४२ पू

७९] वाली व्यपोथयामास ननाद च महास्वनम्[2] ॥३४॥

८० उ] स्रोतोभ्यश्च[3] समस्तेभ्यो निष्पपातास्य शोणितम् ।

पपात च महाकायः क्षितौ पञ्चत्वमागतः ॥३५॥ [४८

८१] तं तोलयित्वा बाहुभ्यां गतसत्त्वमचेतनम् ।

चिक्षेप बलवान्[4] वाली पादेनैकेन योजनम् ॥३६॥ [५०

८२] तस्य वेगप्रवृद्धस्य वक्त्रात् क्षतजबिन्दवः ।[5]

प्रपेतुर्मारुताक्षिप्ता[6] मतङ्गस्याश्रमे[7] शुभे[8] ॥३७॥ [५१

८३] दृष्ट्वा तानसृजो[9] बिन्दून्[10] मुनिः क्रोधसमन्वितः । [५२

८४पू] उत्ससर्ज तदा शापं क्षेप्तारं प्रतिवालिनम् ॥३८॥ [५५ उ

८५] इह ते न प्रवेष्टव्यं प्रविष्टस्य वधो भवेत् । [५६पू

N] न प्रपेदे मुनिस्तस्य याचतोऽपि कृताञ्जलेः ॥[11] ३९॥ [६४ उ

ततः शापभयाद् भीत ऋष्यमूकं महागिरिम् ।

८६] प्रवेष्टुं नेच्छते वाली[12] [13]प्रेक्षितुं वाऽपि वानरः ॥४०॥ [६६

तस्याप्रवेशं ज्ञात्वाऽहमिमं राम महावलम्[14] ।

८७] विचरामि सहामात्यो विषादं त्यज्य[15] दूरतः ॥४१॥ [६७

---

१. ल$_{1}$ ब म श—नास्ति ।

२. ल म—महासुरं ।
　ब श—महास्वरं ।

३. रा भ च—‡ श्रोतोभ्यश्च ।

४. कै ल$_{2}$—भगवान् ।
　अ—† भगवन् ।

५. कै अ ल$_{2}$—नास्ति ।

६. कै म—०मरुताक्षि० ।
　अ ल$_{2}$—मरुदाक्षि० ।
　रा भ च—मारुतोत्क्षि० ।

७. श—मातंग० ।

८. रा—तदा ।

९. ल$_{1}$—सृजे । ब—सृजा ।

१०. कै—‡ विंधून् । म—‡ विंधू ।

११. कै अ ल$_{1}$ ल$_{2}$ ब म श रा च—
एव मुक्तस्ततो वाली याचते स्म कृतांजलिः ।

१२. अ ल$_{2}$—वापि । श—सोऽपि ।

१३. भ च—† प्रेषितुं ।

१४. भ च—महावनं ।

१५. अ ल$_{2}$ ल$_{1}$ ब म रा भ च—
　त्यज ।

एष ह्यस्थिचयस्तस्य दुन्दुभेः संप्रकाशते ।
८८] वीर्योत्सेकान्निरस्तस्य गिरिकूटोपमं महत् ॥४२॥ [६८
इमे ते[1] विपुलास्तालाः सप्त शाखाविलम्बिताः ।
८९] [2]पत्रिणो यतते वाली नि[3]ष्पत्रयितुमोजसा ॥४३॥ [६९
एतत् [4]तस्योत्तमं वीर्यं मया राम [5]प्रकाशितम् ।
९०] कथं [6]त्वं समरे हन्तुं श[7]क्ष्यसि तं[8] हि [9]वालिनम् ॥४४॥ [७०
यदि भिन्द्या इमांस्तालानिषुणैकेन राघव ।
N] समर्थोऽसि ततो हन्तुं मम भ्रातरमाहवे ॥४५॥ [८६
श्रुत्वैवं ब्रुवतस्तस्य सुग्रीवस्य महात्मनः । [८६पू
९१] राघवो दुन्दुभेः कायं पादांगुष्ठेन ता[10]डयन् ॥४६॥
स लीलया महावीर्यश्चिक्षेप दशयोजनम् । [८८उ
९२] असुरस्य तनुं शुष्कां पादेनैकेन [11]राघवः ॥४७॥
क्षिप्तं दृष्ट्वा तु तं काय सुग्रीवः पुनरेव हि । [८९
९३] लक्ष्मणस्याग्रजं वीरमिदं वचनमब्रवीत् ॥४८॥ [९०
सन्देहो मम सञ्जात[12]स्तन्मे निगदतः शृणु ।
N] सौहृदाद् वक्तुमिच्छामि राघवेदं निबोध च[13] ॥४९॥ [N
N] महाबलस्यासुरस्य दुन्दुभेश्चरणेन [14]हि ।
९४ उ] आर्द्रः समांसः प्रत्यग्रः क्षिप्तः कायः पुरा सखे ॥५०॥ [N

---

१. कै अ ल$_2$—तु ।
२. च—यन्त्रैको य० । भ—यन्त्रैकं य० ।
३. भ—निष्पातयितुमो० ।
४. अ ल$_2$—। तस्योपमं ।
श—। हिमालयं ।
५. म च—प्रकीर्तितं० ।
६. रा भ च—तं ।
७. ल$_1$ ब म श—शक्तोपि ।
८. अ ल$_2$ रा भ च—त्वं ।
९. श—। हिमालयं ।
१०. अ ल$_1$ ल$_2$ म श रा च—
तायुयत् । भ—तोलयन् ।
११. ल$_1$ ब म श रा—वानरः ।
१२. श—। ०तः स मे ।
१३. ल$_1$ । भ—मे ।
१४. ल$_1$ ब म श रा—हि ।

साम्प्रतं लघु निर्मांसः[1] क्षिप्तः कायस्त्वयाऽथ वै । [९.१

९५] नात्र शक्यं बलं ज्ञातुं तव वा तस्य वाऽधिकम् ॥॥५१॥ [९.२ उ

तालानेतांस्तु निर्भिद्य भवेच्छक्ति[2]र्बलाबले [९.४

११] तव वा तस्य वा राजंस्तदनु[3]ष्ठातुमर्हसि ॥५२॥ [N

N] जयाय मम दुर्धर्ष व्याक्षिप्तहृदयस्य च । [N

स.११,१] एवं तु वचनं श्रुत्वा सुग्रीवस्य सुभाषितम् ॥५३॥

N] प्रत्ययार्थं ततस्तस्य रामो जग्राह कार्मुकम् । [स.१२,१

स गृहीत्वा धनुर्घोरं शरमेकं च राघवः ॥५४॥

३] तालानुद्दिश्य चिक्षेप पूरयिष्यन् स्वनैर्दिशः । [२

N] [4]अटन्या पीडितः शेषः सरलोऽपि तदाऽ[5]भवत् ॥ [6]५५॥

स विसृष्टो बलवता बाणः स्वर्णविभूषितः ।

३] भित्त्वा तालान् गिरींश्चैव प्रविवेश रसातलम् ॥५६॥[7] [३

स प्रविश्य मुहूर्तेन हंसो भूत्वा मनोज[8]वः ।

५] आजगाम पुनर्हस्तं रामस्याक्लिष्टकर्मणः ॥५७॥ [४

ततो[9] दृष्ट्वा स निर्भिन्नांस्तालान् वानरपुङ्ग[10]वः ।

६] रामस्य शरमोक्षेण विस्मयं परमं ग[11]तः ॥५८॥ [५

दु[12]ष्करं तत्[13] कृतं कर्म सुग्रीवः प्रसमीक्ष्य तु ।

७] मूर्ध्नि कृ[14]त्वाऽञ्जलिं हृष्टो राघवं प्रशशंस ह ॥५९॥ [N

---

१. ल१ ब म रा—०निर्मांसं ।
२. ल१ ब म श—०च्छान्तिर्ब० ।
३. कै अल२—०स्तदधिष्ठातुम० ।
४. ल१ ब म—अटव्या ।
५. कै अ ल२—तदा भवेत् ।
६. भ—नास्ति ।
७. भ—अतः परमधिकः पाठः—
स तान् सप्त महातालानृष्यमूकं च पर्वतं ।
मेदिनीं च विनिर्भिद्य प्रविवेश रसातलं ॥
८. अ ल२—महाजवः ।
९. भ च—तान् दृष्ट्वा सप्त ।
कै—०ष्ट्वा सुनिर्भि० ।
१०. भ च—+ ०पुङ्गवाः ।
११. भ च—+ गताः ।
१२. कै—दुष्कृतं ।
१३. कै ल१ ब म श रा भ च—तु ।
१४. ल१—कृतांजलिं ।

स मूर्ध्ना न्यपतद् भूमौ प्रलम्बीकृतभूषणः ।
सुग्रीवः प्रणतग्रीवो राघवाय कृताञ्जलिः ॥६०॥ [६
इदं चोवाच तेजस्वी कर्मणा तेन विस्मितः ।
N] रामं सर्वास्त्रविदुषं श्रेष्ठं शूरमवस्थितम् ॥६१॥ [७
राम विक्रमशौण्डीर महेन्द्रवरुणोपम ।
८] अहो ते भुजमुक्तस्य शरस्य सुमहद् बलम् ॥६२॥ [N
येन सप्त महातालाः क्षितिः शैलाश्च दारिताः ।
N] बाणेनैकेन काकुत्स्थ कः स्थाता तेऽग्रतो रणे ॥६३॥ [९
अद्य मे विगतः शोकः प्रीतिरद्य परा मम ।
७पू] सुहृदं त्वां समासाद्य महेन्द्रवरुणोपमम् ॥६४॥ [१० 
तदद्यैव प्रियार्थं मे वैरिणं भ्रातृरूपिणम् ।
८] वालिनं जहि काकुत्स्थ मया बद्धोऽयमञ्जलिः ॥६५॥ [११
सेन्द्रानपि सुरान् संख्ये त्वं बाणैः पुरुषर्षभ ।
N] समर्थः समरे जेतुं किं पुनर्वालिनं रणे ॥६६॥
ततो रामः परिष्वज्य सुग्रीवं प्रियवादिनम् ।
९] प्रत्युवाच महाप्राज्ञो लक्ष्मणानुमतं वचः ॥६७॥ [१२
अहं गच्छामि किष्किन्धां सुग्रीवं त्वं व्रजाग्रतः ।
१०] गत्वाह्वय सुशीघ्रं त्वं वालिनं भ्रातृबाधिनम् ॥६८॥ [१३

१. श—मनस्वी कृ० ।
२. कै अ ल$_1$ ल$_2$ ब म श रा— †०मसोढीरं ।
३. कै अ ल$_1$ ल$_2$ ब म श रा च— ०वरुणोपमं ।
४. ल$_1$ ब—हतास्ताला: ।
५. ल$_1$ ब श म च—शैलश्च ।
६. श—पातितः । ल$_1$ ब—दारितः ।
७. म श रा—परित्यज्य ।
८. ल$_1$ म श रा भ च—०नुमते । ब—०नुमतो ।
९. कै ल$_1$ ब म—किष्किन्दां ।
१०. कै अ ल$_2$—आवाहय सु० । ल$_1$ ब म श रा—आवाहयस्व शी० ।
११. म श—०वादिनं ।

ते सर्वे त्वरितं जग्मुः किष्किंन्धां वालिनः पुरीम् ।
N] अथ रामोऽब्रवीत तं[2] तु सुग्रीवं प्रियदर्शनम् ॥६९॥[4] [N
जीवितेनापि मे कार्यं सुग्रीव प्रियमेव ते ।
N] तुल्यशोकस्य दीनस्य ममापि शरणार्थिनः ॥७०॥ [N
एवमुक्त्वा तु सुग्रीवमुभौ तौ नरवानरौ ।
११] जग्मतुः सहितौ सर्वैं वानरैर्वनगोचरैः ॥७१॥[8] [N
ते सर्वे सहसा गत्वा रामसुग्रीवलक्ष्मणाः ।
१२] वृक्षैरात्मानमावृत्य विविशुर्गहने वने ॥७२॥ [१४
अथाह राघवः श्रीमान् सुग्रीवं शुभया गिरा ।
१३] दर्शनार्थं गुहाद्वारि तिष्ठ त्वमकुतोभयः ॥७३॥ [N
आह्वयंस्त्व यथा वाली निष्पतेत् स गुहामुखात् ।
१४] ततोऽहं निहनिष्यामि शरेण प्लवगेश्वरम् ॥७४॥ [N
एवमुक्ते तु वचने काकुत्स्थेन महात्मना ।
१५] हा हेति स्निग्धगम्भीरो दिवि नादो महानभूत् ॥७५॥ [N
N] तदद्भुततमं दृष्ट्वा सुग्रीवो हेमपिङ्गलः ।
व्यनदत् स महानादं वालिनो ह्वानकारणात् ॥७६॥

---

१. कै ल१ ब म—किष्किन्दां ।
२. भ च—तत्र ।
३. ल१ ब श—प्रियवादिनं ।
४. म—नास्ति ।
५. अ ल२—भवतः ।
६. कै म श रा भ च—मां चापि ।
अ ल१ ल२—मा चापि ।
ब—ममापि ।
७. कै—†सर्वे ।
८. च—७१तम श्लोकत आरभ्य ७४तम श्लोकान्तः पाठो नास्ति ।
९. भ—हरीन्द्रं ।
१०. कै अ ल२—आह्वयेच ।
ल१ ब म श रा—आह्वयंश्च ।
११. कै—† वाली ।
१२. ल१ ब म श—† निष्पतेश्च ।
१३. कै अ ल१ ल२ ब म श रा—'सुग्रीव' इत्यत आरभ्योत्तरपद्यगत-'भ्रातु' रित्यन्तः पाठो नास्ति ।

२३] गाढं सुरुषितो वेगाद्द्विनिर्भिन्दन्निवाम्बरम् ।
श्रुत्वा तु निनदं भ्रातुर्वाली क्रोधादमर्षणः ॥

२४] निष्पपात सुसंरब्धो भास्करोऽभ्रगणादिव[1] ॥७७॥ [१६ उ
तयोः सुतुमुलं युद्धं वालिसुग्रीवयोरभूत् ।

२५] गगने ग्रहयोर्घोरं[2] बुधाङ्गारकयोरिव ॥७८॥ [१७
[3]तैलैरशनिकल्पैश्च वज्रवेगैश्च मुष्टिभिः ।

२६] जघ्नतुः समरेऽन्योन्यं भ्रातरौ क्रोधमूर्च्छितौ ॥७९॥ [१८

२७पू] धनुरादाय काकुत्स्थस्तावुभौ समुदैक्षत ।

२८पू] अन्योन्यसदृशौ वीरौ सक्तौ वीराविवाश्विनौ ॥८०॥ [१९
स नाध्यगच्छत् सुग्रीवं वालिनं चापि राघवः ।

२९] ततो न कृतवान् बुद्धिं मोक्तुमन्तकरं शरम् ॥८१॥ [२०
एतस्मिन्नन्तरे भग्नः सुग्रीवस्तेन वालिना ।

३०] अपश्यन् राघवं नाथमृष्यमूकं ययौ जवात् ॥८२॥ [२१
क्लान्तो रुधिरसिक्ताङ्गः प्रहारैर्जर्जरीकृतः ।

३१] वालिना निहतः क्रोधात् प्रविवेश महद्वनम् ॥८३॥ [२२
प्रविष्टं च वने दृष्ट्वा वालिनः सुभयात् तदा ।

३२] मुक्तस्त्वमिति चोक्त्वा स संनिविष्टो महाद्युतिः ॥८४॥ [२३
राघवोऽपि सह भ्रात्रा सहैव च हनूमता ।

---

१. श—‡ भगणा० ।
२. $ल_1$—† ०वैरि ।
३. $ल_1$ ब—† तालैर० ।
४. कै म श—धनुराधाय ।
५. अ $ल_2$—‡ शक्ता ।
$ल_1$ ब म श रा च—† शक्तौ ।
६. कै अ $ल_1$ $ल_2$ ब म श रा—‡ विमुक्तुं सान्तरं ।
भ च—०कुमन्तकरं ।
७. ब भ—† अपश्यद् ।
८. कै अ $ल_2$ श रा भ च—सभयात् ।
९. अ $ल_2$—मुक्त्वा स वालिनं शीघ्रं ।
१०. भ च—सन्निवृत्तो ।

३३] तदेवं वनमागच्छत् सुग्रीवो यत्र वानरः ॥८५॥ [२४

स निरीक्ष्यागतं रामं सुग्रीवः सहलक्ष्मणम् ।

३४] श्रमाद् भीत उवाचेदं वसुधामवलोकयन् ॥८६॥ [२५

आह्वयस्वेति मामुक्त्वा दर्शयित्वा च विक्रमम् ।

३५] वैरिणा ताडयित्वा मां किमिदानीं करिष्यसि ॥८७॥ [२६

तदैव मम वक्तव्यं त्वया राघव तत्त्वतः ।

३६] वालिनं न हनिष्यामि शक्रेणापि न हन्यते ॥८८॥ [२७

तस्यैवं भाषमाणस्य सुग्रीवस्य महात्मनः ।

३८] करुणं दीनया वाचा रामो वचनमब्रवीत् ॥८९॥ [२८

सुग्रीव श्रूयतां तावत् क्रोधश्चैवापनीयताम् ।

३९] हेतुना येन बाणोऽयं न मया विनियोजितः ॥९०॥ [२९

अलङ्कारेण वेशेन प्रमाणेन गतेन च ।

४०] त्वं च सुग्रीव वाली च सदृशौ स्तः परस्परम् ॥९१॥ [३०

स्वरेण वचसा चैव प्रेक्षितेन च वानर । [३१ पू

४१] विक्रमेण च वाक्येन व्यक्तिर्नैवोपलभ्यते ॥[12]९२॥

ततो हि तव सादृश्यान्मोहितो वानरोत्तम । [३१ उ

---

१. ल१ ब म श—+तदैव ।

२. ब—+वानराधिपः ।

३. ल१—+श्रीमान् । ब—+श्रीमां ।

४. भ च—घातयित्वा ।

५. म श—+ तदेव ।

६. म—+ चक्रेण ।

७. भ च—०श्राप्य० ।

८. ल१—कारणेन नये (? येन) बाणो न मया ।
ब—कारणेन येन बाणे (?णो) न मया
म—कारणेन मया येन बाणो न ।
श—कारणेन येन बाणो न मया ।
भ च—कारणं येन बा० ।

९. ल१ ब म श—+प्रमाणौ ।

१०. भ च—वाक्यैश्च ।

११ कै—+ ०क्तिश्चैवोप० ।
अ ल२—०क्तिश्चैवोपलक्ष्यते ।

१२. अ ल२—९२तम श्लोकपरार्धत आरभ्य ९४तम श्लोकपूर्वार्धान्तः पाठो नास्ति ।

४२] न त्यक्तवान्[1] महावेगं शरं शत्रुनिबर्हणम्[2] ॥९३॥ [३२ पू

इमं[3] मुहूर्तं तु[4] मया पश्य वालिनमाहवे ।

४३] निरस्तमिषुणैकेन[5] चेष्टमानं महीतले ॥९४॥ [३६

अभिज्ञानं कुरुष्व त्वं स्वात्मनो वानरोत्तम ।

४४] यथा त्वामभिजानीयां[6] भूयो युद्धमुपागतम् ॥९५॥ [३७

गजपुष्पमयीं[8] मालामुत्पाट्य शुभलक्षण[7] ।

४५] कण्ठे बधान सौमित्रे सुग्रीवस्य महात्मनः ॥९६॥ [३८

ततो गिरितटे जातामुत्पाट्य सुरराडिव ।

४६] लक्ष्मणो गजपुष्पां तां तस्य कण्ठे ससर्ज[9] ह ॥९७॥ [३९

स तया शुशुभे वीरो[10] मालया[11] कण्ठसक्तया । [४०पू

४७] मालयेव[12] बलाकानां[13] ससन्ध्यस्तोयदो यथा ॥९८॥ [४१पू

स भ्राजमानो वपुषा राम-वाक्यवशं गतः ।

४८] प्रतस्थे सह रामेण किष्किन्धां[14] पुनरेव हि[15] ॥९९॥ [४१उ

इत्यार्षे रामायणे किष्किन्धाकाण्डे[16] वालिसुग्रीवाभिज्ञानं[17] नाम

अष्टमः सर्गः ॥ ८ ॥

---

१. भ—मुक्तवान् ।

२. श—शक्र(त्रु?)निषूदनं ।

३. ल१ ब—†धूमं ।

४. म—हि ।

५. कै श—†०मिषुनैकेन ।

६. ल१ ब म—‡ जानेयं ।

श—‡ जानीयं ।

७. ल१ ब म—† ०लक्ष्मणः ।

८. ल१ ब—† गजपुष्पं ।

भ—०पौष्पीं ।

९. ल१ ब म श रा भ च—ससर्ज ।

अ ल२—बबन्ध ।

१०. ल ब—वीर ।

११. अ ल२—† मायया ।

१२. अ ल२—† माययेव ।

१३. कै अ ल२ रा—†बकानां स० ।

ल१—† वर्धकानां स ।

ब म—† ०येवर्वकानां च० ।

श—† ०या वर्धकानां स० ।

१४. ल१ ब म—किष्किन्दां ।

१५. कै अ ल१ ल२ ब म श रा—हि ।

१६. कै ल१ ब म—किष्किन्दाकां० ।

भ—किष्किन्धापर्वणि ।

१७. अ श—सुग्रीवाभिज्ञानं ।

भ—वालिसुग्रीवयुद्धं ।

ऋ[1]ष्यमूकात् स धर्मात्मा किष्किन्धां[2] लक्ष्मणाग्रजः ।
१] जगाम सहसुग्रीवो वालिपौरुषपालिताम् ॥१॥ [१
समुद्यम्य महाचापं[3] रामः काञ्चनभूषितम्[4] ।
२] शरं चादित्यसङ्काशं महेश्वरशरोपमम् ॥२॥ [२
अ[5]ग्रतस्तु ययौ तस्य राघवस्य महात्मनः ।
३] सुग्रीवो वानरश्रेष्ठो लक्ष्मणश्च महाबलः ॥३॥ [३
पृष्ठतो हनुमान् वीरो नलो नीलश्च वानरः ।
४] तारश्चैव[6] महातेजा हरियूथपयूथपः[7] ॥४॥ [४
पश्यन्तस्ते तरून्[8] रम्यान्[9] पुष्पभारावनामितान् ।
५] प्रसन्नाम्बुवहाश्चैव[10] सरितः सागरोपमाः[11] ॥५॥ [५
कन्दराश्चैव[12] शैलांश्च निर्झरांश्च[13] गुहास्तथा ।
६] शिखराणि च मुख्यानि ददृशुः प्रियदर्शनाः ॥६॥ [६
वैडूर्यसदृशैः सर्वैः[14] प्रफुल्लाशोककुड्मलैः ।
७] रम्यैरन्विष्यंतो[15] यान्ति तडाकान्यवलोकयन्[16] ॥७॥ [७
कादम्बैः[17] सारसैर्हंसैर् वञ्जुलैर्जलकुक्कुटैः ।
८] चक्रवाकैस्तथाऽन्यैश्च[18] शकुनैर्नादिता दिशः ॥८॥ [८

---

१. कै—‡ ऋषिमूका० ।
२. कै $ल_3$ ब म—किष्किन्दां ।
३. भ—महच्चापं ।
४. $ल_1$ ब म श—कांचनभूषणं ।
५. $ल_1$—† ०ग्रतस्तौ ।
६. कै—‘चत्वारश्चैव’ इति अपरहस्तेन शोधितम् ।
७. कै—‘०यूथपाः’ इति अपरहस्तेन शोधितम् ।
८. $ल_1$ ब म श—तत्र ।
९. भ—वन्यान् ।
१०. कै अ $ल_2$—प्रसन्नाम्बुरुहांश्चैव ।
११. भ च—सागरंगमाः ।
१२. अ $ल_2$—कंदराश्च सशै० ।
कै रा भ च—कंदरांश्च सुशै० ।
१३. कै—‡ निझराश्च ।
१४. भ—पद्मैः ।
१५. $ल_1$ म श भ—‡ ०रन्विषतो ।
ब रा च—† ०रन्विष्यतो ।
१६. कै अ $ल_1$ भ च—तडागा० ।
१७. श—कांरडैः ।
१८. $ल_1$ म—‡० वाक्यै ।

९उ] चरंतो[1] वल्गंतोऽपश्यन्[2] स्थलीषु विविधान् मृगान् । [N
प्रभिन्नकरटांश्चापि शुक्लदन्तविभूषणान् ॥९॥ [९उ
१०पू] गिरिप्रख्यांस्तथा[3] वन्यान्[4] द्विरदान् नगघातिनः[5] । [११
वने[6] वनेचरांश्चान्यान् खचरांश्च[7] विहङ्गमान् ॥१०॥ [१२पू
११] किष्किन्धां[8] त्वरितं[9] जग्मुः सुग्रीववशवर्तिनः । [१२उ
तेषां तु गच्छतां तत्र त्वरितं रघुनन्दनः ॥११॥
१२] द्रुमखण्डं घनं[10] दृष्ट्वा रामः सुग्रीवमब्रवीत् । [१३
अयं घन इवाकाशे वृक्षखण्डः[11] प्रकाशते ॥१२॥
१३] मेघ-संघात-सदृशः पर्यन्ते-कदली-वृतः[12] ॥ [१४
तमिमं ज्ञातुमिच्छामि सखे कौतूहलं हि मे ।
१४] महदस्य परिज्ञानं[13] गच्छन्नेव वदस्व मे ॥१३॥ [१५
तस्य तद् वचनं श्रुत्वा राघवस्य महात्मनः ।
१५] गच्छन्नेवाचचक्षेऽस्य सुग्रीवस्तन्महावनम् ॥१४॥ [१६
एष राघव विस्तीर्ण आश्रमः श्रमनाशनः ।
१६] कदली-वन-संच्छन्नः सर्व-मूलफलैर् वृतः[14] ॥१५॥ [१७

---

१. ल₁ ब म श—सर्वतो ।
भ—चरंतो ।
२. भ—वर्गशो ।
३. ल₁ ब म—नास्ति ।
श—॰स्तथारण्यान् ।
४. ल₁ ब म—† द्विरदा ।
५. च—नागघा॰ ।
६. कै अ ल₂—वनेचरवरांश्चान्यान् ।
ल₁ ब म श—वने वनचरांश्चान्यान् ।
७. भ—खेच॰ ।
८. कै ल₁ ब म—‡ किष्किन्दां ।
९. अ ल₂—† त्वरितः। म—† त्वरितो
भ—त्वरिता ।
१०. अ ल₂—वनं ।
११. ल₁ ब म श—वृक्षषंडः ।
१२. अ—† पर्यंककदलीवृतः ।
१३. ल₁ म श—† परिज्ञातुं ।
ब रा—परिज्ञातं ।
१४. कै अ ल₂ रा च—
† सर्वमूलफलोपमः ।
भ—सर्वमूलफलोपगः ।

अत्र सप्तजना[1] नाम मुनयः संशितव्रताः[2] । [१८
१७] तपोबल[3]समायुक्ता नित्यंदा[4] जलशायिनः ॥१६॥ [N
सप्तरात्रकृताहारा वायुभक्षा[5] जितेन्द्रियाः ।
१८] दिवं[6] वर्षशतैर्याता[7] सप्तभिः सकलेवराः ॥१७॥ [१९
तेषाम् एव प्रभावेन[8] द्रुम-प्राकार-संवृतः[9] ।
१९] आश्रमः सुदुराधर्षो देवैरपि सवासवैः ॥१८॥ [२०
पक्षिणो वर्जयन्त्येतं[10] तथाऽन्ये वनचारिणः ।
२०] दैवाद् विशन्ति ये[11] ह्यत्र न निवर्तन्ति ते पुनः ॥१९॥ [२१
विभूषण-रवोऽप्यत्र[12] श्रूयते स-कलाक्षरः ।
२१] तूर्यगीतस्वनश्चात्र गन्धो दिव्यश्च वायुतः[13] ॥२०॥ [२२
त्रेताऽग्नयश्च दृश्यन्ते तेषामेव महात्मनाम् ।
२२] चेष्टन्तीव[14] च वृक्षाग्राः कपोताङ्गारुणध्वजाः[15] ॥२१॥ [२३
कुरु प्रणामं धर्मज्ञ तान् समुद्दिश्य राघव ।
२३] लक्ष्मणेन सह भ्रात्रा प्रयतः स कृताञ्जलिः[16] ।[17] [२५ उ
समुद्दिश्य महातेजास्तानृषीनभ्यवादयत् ॥२२॥ [२२

---

१. ब—† सुसजना राम ।
रा—सप्तजनामाय ।
२. ल१ ब म—संश्रित० ।
३. अ ल२—† ततो बल० ।
४. कै अ ल१ ल२ ब श भ च—
नित्याधो० । म—नित्या ये० ।
† नित्या यो० ।
५. कै रा—† वायुभक्ष्या ।
६. म—† दिव्यं ।
७. अ ल२ म—† वर्षशतं ।
८. ब—प्रभावेण ।
९. ल१ ब श—† संवृताः ।
१०. अ—वर्जयन्त्येव ।
११. कै अ ल१ल२ब म श रा भ—
चेदत्र ।
१२. भ च—ह्यत्र ।
१३. कै अ ल३ रा भ—वा यतः ।
च—वायतं ।
१४. अ ल२—‡ चेष्टंतेव ।
भ—वेष्टयन्तीव ।
च—वेष्टयन्ती च ।
१५. भ—कपोताङ्गारवर्चसः ।
१६. कै अ ल१ल२ब भ रा च—
संहतांजलिः । म—संकृतांजलिः ।
१७. भ च—अतः परमधिकः पाठः—
प्रणमन्ति मुनीन् ये तु सदैवाव्यग्रचेतसः ।
न तेषामशुभं किंचिच्छरीरे राम (भ-सम-)
दृश्यते ।
ततो रामः सह भ्रात्रा प्रयतः संहतांजलिः ॥

२४] अभिवाद्य[1] तु धर्मात्मा रामो वीरश्च लक्ष्मणः ।

२५] सुग्रीवश्च महातेजा जग्मुस्ते हृष्टमानसाः ॥२३॥[2] [२८

ते गत्वा दूरमध्वानं तस्मात् सप्तजनाश्रमात् ।

२७] ददृशुस्तां दुराधर्षां किष्किन्धां[3] वालिपालिताम् ॥२४॥ [२९

बहु-पादप-गुल्माढ्यां[4] वानरैर् बहुभिर् वृताम् ।

N] अकुतश्छिद्रयां रम्यामुच्चतोरणमण्डिताम् ॥२५॥ [N

N] तां[5] सर्वे त्वरितं गत्वा किष्किन्धां[6] वालिनः पुरीम् ।

२८पू] वृक्षैरावृत्य चात्मानं व्यतिष्ठन् गहने वने ॥२६॥ [स०१४,१

विचार्य सर्वतो दृष्टिं कानने काननप्रियः ।

४४] सुग्रीवो विपुल[7]क्रोधः क्रोधमाहारयत् तदा ॥२७॥ [२

ततः स व्यनदद् घोरं वालिनो ह्वानकांक्षया ।

४५] परिगाढं परिवृत्तो[8] नादैर्भिन्न[9]मिवाम्बरम् ॥२८॥ [३

अथ जीमूतसङ्काशं[10] दीप्तसङ्कर्षणोचितम्[11] ।

२९] दृष्ट्वा रामं क्रियादक्षं सुग्रीवो वाक्यमब्रवीत् ॥२९॥ [N

परितो नगरीं रम्यां मृष्ट[12]काञ्चनतोरणाम् ।

---

१. अ $ल_2$—† अभिवाद्यश्च ।
कै अ $ल_2$ ०वाद्य च ।

२. भ च—अतः परम्—इत्यार्षे रामायणे सप्त आश्रमवर्णनं नाम सर्गः ।

३. $ल_1$ ब म—‡ किष्किन्दां ।

४. $ल_1$—† ०गुल्माभ्यां ।

५. $ल_1$ ब म श—तामेव ।

६. $ल_1$ ब म—‡ किष्किन्दां ।

७. भ च—विपुलग्रीवः ।

८. अ $ल_2$ रा भ च—परिवृत्तो ।
$ल_1$—परिवृत्तं ।
ब म श—परिवृतं ।

९. कै—मेघभिन्न० ।
अ $ल_1$ $ल_2$ ब म श रा—मेघैर्भिन्न० । च—†मदैर्भिन्न० ।

१०. भ—०तसंकाशो ।

११. भ—०र्षणोचितः ।

१२. कै रा—सृष्टकांचन० ।

३०] प्राप्ताः स्मो ध्वजयन्त्राढ्यां किष्किन्धामतुलप्रभाम् ॥३०॥[५
प्रतिज्ञा या त्वया वीर कृता वालिवधे पुरा ।
३१] सफलां कुरु तां क्षिप्रं लतां काल इवागतः ॥३१॥ [६
एवमुक्तः स धर्मात्मा सुग्रीवेण तु राघवः ।
३२] प्रत्युवाचाथ सुग्रीवं वचनं शत्रुसूदनः ॥३२॥ [७
कृताभिज्ञान-चिन्हस्त्वमनया गजमालया । [८
N] विपरीत इवाकाशे सूर्यो नक्षत्रमालया ॥३३॥ [९ड
अद्य वालिसमुत्थं ते भयं शोकं च वानर ।
३४] एकेनाहं प्रमार्जिष्ये बाणमोक्षेण संयुगे ॥३४॥ [१०
मम दर्शय सुग्रीव वैरिणं भ्रातृरूपिणम् ।
३५] वालिनं निहतं यावद् वेष्टन्तां वनपांसवः ॥३५॥ [११
यदि दृष्टिपथं यातो जीवन् स [१३]विनिवर्तते ।
३६] ततो दोषेण मां गच्छेत् सद्यो गर्हेच मां भवान् ॥३६॥ [१२
प्रत्यक्षं सप्त ते ताला मया बाणेन दारिताः ।
३७] तेनावेहि च वेगेन वालिनं निहतं मया ॥३७॥ [१३

---

१. कै रा—+ स्मो ध्वजयंत्राभ्यां ।
भ—स्मोऽद्य च यंत्रा० ।
२. ल१ ब म श रा—‡किष्किन्दाम० ।
३. अ—नास्ति ।
४. ल१ ब म श—पुरा ।
५. ल१ ब म श—त्वया ।
६. ब—+ ते ।
७. अ ल२—इवोदितः ।
८. कै अ ल२ भ च—० दूषणः ।
९. कै—तत्राभिज्ञान० ।
अ ल२—ततोभिज्ञान० ।
भ—०स्त्वं मालया ।
१०. कै अ ल२—दृष्ट्वा चेष्टंतां ।
ल१ ब म रा यावच्चेष्टंतां ।
श भ—यावच्चेष्टंतं ।
११. भ—०पांसुषु ।
१२. भ—प्राप्तो ।
१३. कै अ ल१ल२ब म श रा च—न निवर्तते ।
१४. ल१ ब भ—+ गच्छेः ।
१५. कै अ ल१ब श रा —तेनावेहि ।
म—तेन वै हि ।
भ च—तेन वै ह्यद्य ।

अनृतं नोक्तपूर्वं मे महाकृच्छ्रेऽपि [1]वर्ततः ।
३८] धर्मलोभप्रवृत्तेन नगरस्थे कदाचन ॥३८॥ [१.१४

सफलां च करिष्यामि प्रतिज्ञां जहि संभ्रमम् ।
३९] [2]प्रभूतं कलमक्षेत्रं वर्षेणेव शतक्रतुः ॥३९॥ [१.१५

अवेक्षणनिमित्तं [3]त्वं वालिनो हेममालिनः ।
४०] सुग्रीव कुरु तं शब्दं निष्पतेद् येन वानरः ॥४०॥ [१.१६

जितकाशी [4]बलश्लाघी त्वां च धर्षितवान् [5]पुरा ।
४१] [6]निष्पातिष्यत्यमर्षेण [7]वाली समरदुर्जयः ॥४१॥ [१.१७

रिपूणां [8]धर्षणां [9]वीरा मर्षयन्ति न संयुगे ।
४२] जानीमंस्तु [10]स्वकं वीर्यं स्त्रीसमक्षं विशेषतः ॥४२॥ [१.१८

स तु रामवचः श्रुत्वा सुग्रीवो हेमपिङ्गलः ।
४३] [11]ननाद [12]क्रूरनिर्ह्रादो नादैर्[13]भिन्दन्निवाम्बरम् ॥४३॥ [१.१९

तस्य शब्देन वित्रस्ता वानर्यो निहतप्रभाः ।
४६] राज्ञो रोषपरामृष्टाः कुलस्त्रिय इवाकुलाः ॥४४॥ [२०

भ्रमन्ति च मृगाः शीघ्रं भग्ना इव रणे हयाः ।
४७] [14]पतन्ति [14]च खगा भूमौ क्षीणपुण्या इव ग्रहाः ॥४५॥ [२१

---

१. कै अ ल१ ल२ ब श रा भ च—वर्तता ।
२. भ—प्रसूतं ।
३. कै अ ल२ म—† त्वां ।
४. कै अ ल२ रा—† बलः श्लाघी ।
५. ल१ ब म श—नास्ति ।
भ—त्वया वा धर्षितः पुनः ।
६. ब—नास्ति ।
७. श—नास्ति ।
८. ल१ ब—दर्शनं । च—धर्षणं ।
९. भ च—शूरा ।
१०. ल१ ब म श—०स्त्र्यम्बकं ।
११. भ च—ननर्द ।
१२. च क्रूरनिर्ह्रादी ।
१३. अ ल२—०भिन्नमिवाम्बरं ।
१४. अ—पतन्तीव ।

स तत्र जीमूतसमप्रणादं
नादं विमुञ्चंस्त्वरया प्रतीतः ।
सूर्यात्मजः शौर्यविवृद्धतेजाः
सरित्पतिः पर्वणि चञ्चलोर्मिः ॥४६॥ [२२

N]

इत्यार्षे रामायणे किष्किन्धाकाण्डे वालिसमाह्वानं नाम
नवमः सर्गः ॥९॥

---

१. ल$_1$ व श—† चंचलाद्रिः ।
म—‡ चंचलाद्रिः ।
२. कै—नास्ति ।

३. ल$_1$ व म श रा—‡ किष्किन्धाका०
भ च—नास्ति ।
४. अ ल$_2$—वालिसमागमनं ।

अथ तस्य निनादं तु सुग्रीवस्य महात्मनः ।
१] शुश्रावान्तःपुरगतो वाली भ्रातुरमर्षणः ॥१॥ [१
श्रुत्वा तस्य निनादं तं[2] सर्वसत्त्वप्रकम्पनम्[3] ।
२] मदश्चैकपदे[4] नष्टः क्रोधेनाधिष्ठितो[5] ऽभवत् ॥२॥ [२
स हि रोषपरीताङ्गो वाली सन्ध्याऽऽतपप्रभः ।
३] उपरक्त इवादित्यः सद्यो व्याकुलतां गतः ॥३॥ [३
वाली दंष्ट्राकरालस्तु क्रोधदीप्ताग्निसप्रभः ।
४] भाति स्म पतितैः पत्रैः समृणाल इवाम्बुजः ॥४॥ [४
स[6] सदाऽमर्षणः शीघ्रं निष्पपात ततो हरिः ।
५] वेगेन चरणन्यासैः कम्पयन्निव मेदिनीम् ॥५॥ [५
तं तु तारा परिष्वज्य स्नेहादभ्येत्य गौरवात्[7] ।
६] उवाच भृशसंभ्रान्ता क्लीवोदर्कमिदं वचः ॥६॥ [६
७पू] साधु क्रोधमिमं[8] वीर नदीवेगमिवागतम् । [७पू
N] धैर्यमालम्ब्य धृतिमान् नियन्तुं[9] त्वमिहार्हसि ॥७॥ [N
७उ] शयनादुत्थितः क्रोधं[10] त्यज[11] भुक्तामिव स्रजम् । [७उ
सहसा ते विनिर्गन्तुं मम बुद्ध्या न रोचते ॥[12]

---

१. ल$_1$ ब श—स ।
२. कै रा ल$_1$ अ म ल$_2$ श भ च—तत् ।
३. ल$_1$—०सत्त्वनि(?वि)कंपनं ।
४. ल$_1$ ब—सर्वाश्चैकपदे नष्टाः ।
म—सर्वाश्चैव० ।
कै रा अ ल$_2$ श—सर्वश्चैकपदे नष्टः ।
५. भ—क्रोधनांधीकृतो० ।
च—क्रोधेनाधिकृतो० ।
६. ल$_1$ ब म श भ च—सदा दुर्मर्षणः ।
अ ल$_2$—स सदा दुर्मनाः ।
७. अ—†रावबात् ल$_2$—†रागवान् ।
ब—गौरवं ।
८. कै रा ल अ ब म ल$_2$ श—सानुक्रोशमिमं ।
९. अ ल$_2$—निहन्तुं ।
१०. भ—कल्ये । च—कल्यं ।
११. रा—त्यक्तभु० ।
१२. कै अ ल$_2$—नास्ति ।

८] श्रूयतामभिधास्यामि यन्निमित्तं निवार्यसे ॥८॥ [९
पूर्वमापतितः क्रोधात् त्वामाह्वयति संयुगे ।
९] निष्पत्य च निरस्तस्ते हन्यमानो दिशो गतः ॥९॥ [१०
त्वया तस्य निरस्तस्य[1] व्रीडितस्य विशेषतः ।
१०] एहीति पुनराह्वानं शङ्कां जनयतीव मे ॥१०॥ [११
दर्पश्च व्यवसायश्च श्रूयेते[2] त्वस्य[3] तादृशः ।
११] नदतश्चैवं[4] संह्रादो नेदमल्पं हि[5] कारणम् ॥११॥ [१२
१२पू] ससहायमहं मन्ये सुग्रीवं त्वामुपागतम्[6] ॥१२[7]॥ [१३
१३पू] प्रश्रुतो[8] निपुणश्चासौ[9] बुद्धिमांश्चैव वानरः[10] ।
नापरीक्षितवीर्येण सुग्रीवः सख्यमेष्यति ॥१३॥ [१४
१५] पूर्वमेव मया वीर श्रुतं कथयतो वचः ।
N] अङ्गदस्य कुमारस्य तव ते वक्ष्यामि तत्त्वतः ॥१४॥ [१५
तव भ्रातुर्हि विख्यातः सहायो रणकर्कशः ।
१६] रामः परबलामर्दी युगान्ताग्निरिवोत्थितः ॥१५॥ [१६
निवासः स च साधूनां प्रपन्नानां परा गतिः ।
१७] आर्तानां संश्रयश्चैव भाजनं गुणसम्पदाम् ॥१६॥ [१९
ज्ञानविज्ञानसम्पन्नो निदेशे निरतः पितुः ।
१८] धातूनामिव कैलासो गुणानामाकरो महान् ॥१७॥ [२०

---

१. रा—†शिरस्तस्य ।
२. अ ब ल₂ श—श्रूयते तस्य ।
भ—यादृशास्तस्य ।
३. कै—स्वादृशः । भ—श्रूयते ।
४. भ—‡ नदतस्यैव ।
५. भ ब—च ।
६. कै रा अ—त्वामिहागतं ।
ल₂—तामहागतं ।

७. अतः परमधिकः पाठः—
भ—
अवष्टब्धसहायोसौ नान्यथा तस्य गर्जितं ।
च—
अवष्टभ्य सहायोसौ नानाश्रित्य प्रगर्जति ।
८. भ च—प्रकृत्या ।
९. अ ल₂—निपुणश्चैव
१०. श—†यो नरः ।

ततः क्षमो न विरोधः सह तेन महात्मना ।
१९] दुर्जयेनाऽप्रमेयेन रामेण रणकर्कशे ॥१८॥ [२१
शूर वक्ष्यामि ते किञ्चिन् न ते युक्तमसूयितुम् ।
२०] श्रूयतां क्रियतां तच्च तव वक्ष्यामि नाहितम् ॥१९॥ [२२
यौवराज्येन सुग्रीवं तूर्णं तमभिषेचय ।
२१] विग्रहं मा कृथा मौर्ख्याद्भ्रात्रा रामेण वा स्वयम् ॥२०॥ [२३
अहं हि ते क्षमं मन्ये रामेण सह सौहृदम् ।
२२] सुग्रीवेण सह भ्रात्रा वैरमुत्सृज्य दूरतः ॥२१॥
लाडनीयो हि ते भ्राता यवीयानेष वानरः । [२७
२३] अत्रस्थः स वनस्थो वा सर्वथा बन्धुरेव सः ॥२२॥ [N
यदि ते मत्प्रियं कार्यं यदि चावैषि मां हिताम् ।
२४] याचमानां प्रयत्नेन साधु वाक्यं कुरुष्व मे ॥२३॥ [२९
प्रसीद पथ्यं शृणु जल्पितं हि मे
न रोषमेतं तु विधातुमर्हसि ।
क्षमो हि ते कोसलराजसूनुना
N] न विग्रहः शक्रसमो हि राघवः ॥२४॥ [३०

इत्यार्षे रामायणे किष्किन्धाकाण्डे तारावाक्यं नाम
दशमः सर्गः ॥ १० ॥

---

१. अ $ल_2$—+ विरोधे न ।
२. कै रा अ ब म श भ च—०येण ।
३. रा $ल_1$ ब म $ल_2$ श च—+ ०कैशः
भ—रणकर्मसु ।
४. $ल_1$ अ ब म $ल_2$ श च—+ शूरो ।
५. अ—यच्च ।
६. म—शीघ्रं ।
७. कै अ भ च—तमभिषे० ।
८. $ल_1$ ब म श—तव ।
९. म—नास्ति ।
१०. भ च—चैवैषि ।
११. रा ब—हितम् ।
१२. अ $ल_2$—+ ०मेनं ।
१३. $ल_1$—कौसल० ।
श—+ कौशल० ।
१४. कै रा $ल_1$ ब म श—किष्किन्दा०
भ च—नास्ति ।
१५. म—+ रामवाक्यं ।

तस्यैवं[1] सा महाबाहोर् दयिता पुनरब्रवीत् ।
२६] विग्रहस्ते न कार्यस्तु मनसाऽपि कथंचन[2] ॥१[3]॥

सर्वाणि रत्नजातानि यानि सन्ति गृहे तव ।
२७] तान्यादायाङ्गदो यातु राघवाय प्रयच्छतु ॥२॥

सन्धिं गच्छाद्य रामेण युगान्तादित्यवर्चसा[4] ।
२८] गुहामेतां परित्यज्य देशमन्यं व्रजस्व च[5] ॥३॥

रामः सुग्रीवसहितो यतते ते महाभये ।
२९] अनागतविधानं[6] तु[7] तस्यार्थे प्रविधीयताम् ॥४॥

संभ्रमोऽयं समुत्पन्नस्तस्माद् देशमिमं त्यज ।
३०] समर्थस्त्वमिमं जेतुं रामेण रहितं पुरा[8] ॥५॥

३०] अयमर्थः पुनः शक्यो नाधिष्ठातुं[9] पराक्रमैः ।
३१पू] न शक्यं संयुगे[10] स्थातुमबलेन बलीयसा ॥६॥

N] त्वं[11] तु[1] देशं परित्यज्य प्रणिपातेन वा रिपोः ।
न वैरं तव रामेण न ते रामोऽपराध्यति[12] ।
N] रक्षणार्थं शरीरस्य गच्छ त्वं तेन सौहृदम् ॥७॥

---

१. रा—†तस्यैवाहं ।

२. ल२ कदाचन ।

३. भ च—
तस्यैव स महावीर्यः स्निग्धो नित्यमनुव्रतः।
यमशक्रसमः क्रोधे भ्राता ख्यातः स लक्ष्मणः
तावुभौ सहितौ नित्यं धनुष्मन्तौ महाबलौ
नैवासादयितव्यौ ते मनसापि कथञ्चन ॥

४. भ च—०त्यतेजसा ।

५. ल२—‡व्रजस्व वा ।
भ च—व्रजाशु वा ।

६. रा ल१ ब भ—†वनागतो विधानं।
अ ल२ श—† वनागतोवधानं ।

७. कै रा अ ल२ श—च ।

८. कै—वचः । प्रान्ते 'ध्रुवम्' इति शोधितम् ।
अ ल२—ध्रुवं ।
भ च—पुनः ।

९. भ च—‡ शक्यमधिष्ठातुं ।

१०. श—समरे ।

११. भ—तं च ।

१२. कै अ ल२ भ च—‡०पराध्यते।

ततोऽस्या वचनं श्रुत्वा वाली हितमनुत्तमम्[1] ।
३२] तारायाः सौम्य[2]रूपाया न चकार गुणोत्तरम् ॥८॥
N] तथोक्ते वचने तस्याः सोऽनवेक्ष्ये[3]दमुत्तरम् ।
स.१८,६पू] हरीशः सिंहविक्रान्तस्तामुवाच ह्यनिन्दिताम्[4] ॥९॥
गुहाम् इमां परित्यज्य बहु-रत्नौघ-सङ्कुलाम् ।
N] मुहूर्तं नापयास्यामि राज्यं चा[5]पि वनौकसाम् ॥१०॥
६उ] नाहं ते मतिवाग्[6]भिन्नः क्लीवो नो वा भयार्दितः ।
अपराक्रम[7]दृष्टाभ्यां भविष्यामि पराङ्मुखः ॥११॥
७] उत्पाट[8]यतु वा रा[9]मो बाहुभ्यां विं[10]ध्य-पर्वतम् ।
इमां सर्वसमुद्रान्तां संवर्तयतु वा म[11]हीम् ॥१२॥
८] स[12] चन्द्रतारा-ग[12]हनं ज[13]गच्चेदं ससाग[13]रम् ।
दहत्वग्निसम[14]स्पर्शैः सायकैर्वा रुषान्वितः ॥१३॥
९] न व्यथेऽहं तस्मा[15]च्च सुग्रीव[16]प्रतिसंहतात् ।
N] शयिष्ये तद्धतो वाऽहं शाययिष्यामि वा[17]थ तम् ॥१४॥

---

१. भ—०तमनुव्रतं ।
२. च—सोमरू० ।
३. च—सोनुचिंत्ये० ।
म—०स्येदमुत्तमं ।
४. भ—नास्ति ।
५. ल$_{2}$—वापि ।
६. ल$_{2}$—+० भाग्भिन्नः ।
७. अ ल$_{2}$—अपराभ्यामदृ० ।
भ—अपराक्रमदृष्टश्च ।
च—अपराक्रमदृष्टस्य ।
८. अ भ च—उत्पाटयेत्तु ।
कै रा ल$_{1}$ ब ल$_{2}$ श—+उत्पाटये तु ।
९. कै रा ल$_{1}$ ब म ल$_{2}$ श—+रामं ।
१०. कै रा ल$_{1}$ ब म ल$_{2}$ श—विंध० ।
श—०ध्य पर्वतान् ।
११. कै रा ल$_{1}$ अ ब म ल$_{2}$ श—महान्
१२. अ भ च—सचन्द्रतारागगनं ।
१३. अ म ल$_{1}$—जगदेतच्चराचरं ।
१४. म—०ग्निसमुत्पन्नैः ।
१५. भ च—तस्माद्धि ।
१६. म—सुग्रीवं प्रति० ।
१७. अ—+वा कथं । म—+वातथं ।

तथा तु वाली बलवीर्यदर्पाद्
　　बलप्रसेकेन वचो यदुक्तम् ।
तत् तारया नाभिननन्द किञ्चिन्
N]　　मोहार्दितो[1] मृत्युबलाभिभूतः ॥१९॥

इत्यार्षे रामायणे किष्किन्धाकाण्डे[2] तारावाक्यं[3] नाम
एकादशः सर्गः ॥ ११ ॥

---

१. म—+ महार्दितो ।
२. कैराल1बमल2रा—किष्किन्दा। भ च—नास्ति ।
३. म—+ तारावाकी ।

तां त्वेवं ब्रुवतीं तारां तारासदृशदर्शनाम् ।
१] वाली निर्भर्त्सयामास वाक्यं चेदमुवाच ह ॥१॥ [१
गर्जतश्चाभिसंरब्धात्[1] भ्रातुः शत्रोर् विशेषतः ।
२] मर्षयिष्याम्यहं केन जातं[2] क्रोधमिमं प्रिये ॥२॥ [२
अमर्षितानां[3] शूराणां सङ्ग्रामेष्वनिवर्तिनाम् ।
३] धर्षणामर्षणं कान्ते मरणात् तु विशिष्यते ॥३॥ [३
सोढुं न च समर्थोऽहं यो कामस्य संयुगे ।
४] सुग्रीवस्यातिसंरंभाद्धीनवीर्यस्य[4] गर्जितम् ॥४॥ [४
न च कार्यो विषादस्ते राघवं प्रति मत्कृते ।
१०] धर्मज्ञश्च कृतज्ञश्च न स पापं करिष्यति ॥५॥ [५
प्रतियोत्स्ये[5] द्रुतं गत्वा सुग्रीवं जहि संभ्रमम् ।
११] दर्पं चास्यापनेष्यामि[6] न च प्राणैर् वियोजये ॥६॥ [७
निवर्तस्व[7] सह स्त्रीभिः किं मां "भूयोऽनुगच्छसि"[8] ।
१२] सौहृदं दर्शितं तारे मम भर्तृकृतं त्वया ॥७॥ [८
शापिताऽसि[9] निवर्तस्व प्राणैरद्य जनेन[10] च ।
१३] अयं[11] जित्वा निवर्तिष्ये न सहे भ्रातृगर्जितम्[12] ॥८॥ [१०

---

१. कै रा ल₁ ब म—०श्चाभिसंरब्धं।
ल₂ च—† ०श्चाभिसंरब्धो।
श—०श्चापि सं०।
भ—श्चापिसंरब्धं।
२. ब—† जातक्रोध०। म—नास्ति।
३. म—† असर्पितानां।
४. भ—०हीनजीवस्य।
च—† ०हीनग्रीवस्य।
५. कै रा ल₁—०त्स्येद्रुतं।
ल₂ ब म श—०त्स्ये तु तं।
६. अ—०स्यावने०।
७. अ ल₂—† निवर्तय।
८. म श—† मा भूयो न गच्छसि।
९. रा—† शापितापि।
१०. भ—जयेन।
११. श—अहं।
१२. भ च—† भ्रातृगंधिनम्।

तं तु तारा परिष्वज्य[1] वालिनं प्रियदर्शनम् ।
१४] चकार रुदती[2] मन्दं दक्षिणा सा प्रदक्षिणम्[3] ॥९॥ [११
ततः स्वस्त्ययनं कृत्वा मन्त्रवद् विजयैषिणी ।
१५] अन्तःपुरं सह स्त्रीभिः प्रविवेश यथागतम् ॥१०॥ [१२
प्रविष्टायां तु तारायां सह स्त्रीभिः स्वमालयम् ।
१६] स्वपुर्या[4] निर्ययौ वाली महासर्प इव[5] श्वसन् ॥११॥ [१३
स निष्पत्य महावेगाद्[6] वाली परमरोषणः ।
१७] सर्वतश्चारयन् दृष्टिं शत्रुदर्शनकांक्षया ॥[7]१२॥ [१४
१८पू] स ददर्श ततो दूरात् सुग्रीवं हेमपिङ्गलम्[8] ।
N] असंवीतम्[9]अवष्टब्धं दीप्यमानमिवानलम् ॥१३॥ [१५
१९उ] स तं दृष्ट्वा महावीर्यं सुग्रीवं समुपस्थितम् ।
२०पू] गाढं [10]परिदधे वस्त्रैः[11] पश्यन्तं तमभीतवत् ॥१४॥ [१६
N] स वाली बलसंवीतो मुष्टिमुद्यम्य वीर्यवान् ।
१८उ] सुग्रीवाभिमुखं शीघ्रं ययौ योद्धुं[12] कृतक्षणः ॥१५॥ [१७
सुग्रीवोऽपि समुद्दिश्य वालिनं हेममालिनम् ।
N] तिष्ठन् मुष्टिं समुद्यम्य संरब्धस्तरसा[13]ऽपतत् ॥१६॥ [१८

---

१. रा श च—परित्यज्य ।
२. ल१ म—†रुदिते । श—†रुदितं ।
३. म—† प्रदक्षिणां ।
४. श—स पुर्या ।
५ रा—इवाश्व० ।
६. भ च—महावेगो ।
७. म—नास्ति ।
८. अ ल२—हरिपिंगलं ।
९. भ—सुसंवीत० ।
१०. कै रा अ ल२ भ च—परिददे ।
म—†परिदधद् ।
११. अ भ च—चक्षुः ।
म—वक्ष्यः ।
१२. अ ल२—†शीघ्रं ।
१३. ल१ ब—संरभ्य तरसा ।
म श—† संरभ्यस्त० ।
भ—संरब्धतरमा० ।
च—संरब्धतरसा० ।

तं वाली क्रोधरक्ताक्षः[1] सुग्रीवं रणपण्डितम् ।
N] आपतंतं महावेगमिदं वचनमब्रवीत् ॥१७॥ [१९
२१उ] एष[2] मुष्टि मया[3] बद्धो[3] गाढः[4] सुविहिताङ्गुलिः ।
२२पू] महावेगप्रयुक्त[5]स्ते प्राणानादाय यास्यति[6] ॥१८॥ [२०
एवमुक्तः स तेजस्वी क्रुद्धो वालिनमब्रवीत् ।
N] तवैष[7] हि हरन्[8] प्राणान् मुष्टिः पततु मूर्धनि ॥१९॥ [२१
ताडितस्तेन संक्रुद्धः[8] सम[9]भिक्रम्य वेगतः ।
२३] सोऽभवच्छोणितोद्गारी सधातुरिव पर्वतः ॥२०॥ [२२
सुग्रीवेण तु[10] संरंभात् साल[11]मुद्यम्य तेज[12]सा ।
२४] गात्रेष्वभिहतो वाली न्यपतत् स[13] महीतले ॥२१॥ [२३
स तु तेन समाक्षिप्तः साल[14]ताडनविह्वलः ।
२५] उरुभारसमाक्रान्[15]तो नौः[16]सार्थ इव सागरे ॥२२॥ [२४
स मुहूर्तं[17] समाश्वस्य[18] तूर्णमुत्पत्य वेगवान् ।
N] रोषा[19]देव प्रजज्वाल युगान्ताग्निरिव ज्वलन् ॥२३॥ [N
तौ चातिबलविक्रान्तौ सुपर्णसमवेगिनौ ।
२६] प्रयुद्धौ घोररूपौ तु[20] बुधशुक्राविवाम्बरे ॥२४॥ [२५

---

१. अ ल२—क्रोधरक्ताक्षं ।
२. कै—+एषा ।
३. भ—+महा० । म—त्रुटितः पाठः ।
४. श—गाढं ।
५. कै रा ल१ अ ब म ल२ श—०गप्रमुक्त० ।
६. अ ल२—गच्छति ।
७. कै रा ल१ ब म श—तवैषा हि हरेत् ।
८. कै रा ल१ अ ब म ल२ श च—वाक्येन ।
९. अ—समतिक्रम्य ।
१०. भ—च ।
११. भ—तालमुद्यम्य । च—‡०छालमु० ।
१२. भ—चौजसा । च—ओजसा ।
१३. भ—च ।
१४. भ च—शालता० ।
१५. कै रा श—तरुभार० । भ च—गुरुभार० ।
१६. कै—‡नौस्सार्थे ।
१७. म—समंतं ।
१८. श च—+समाश्वास्य ।
१९. म—+एष देव ।
२०. कै रा ल१ अ ब म ल२—तौ ।

वालिना भग्नदर्पे तु सुग्रीवे मन्दचेतसि ।
२७] वालिनं प्रति सामर्थ्यं दर्शयामास राघवः ॥२५॥ [N
ततः सन्धाय रामेण शरमाशीविषोपमम् । [३२पू
२८] वेगेन निहतो वाली निपपात महीतले ॥२६॥ [३५उ
तदस्त्रं तस्य वीरस्य स्वर्गमार्गोपदेशकम् । [स.१७,८
N] रामबाणांश(?स)निर्मुक्तं[1] त्वनयत् परमां गतिम् ॥२७॥ [N
तदा संरुद्धकण्ठस्तु वाली त्वार्तस्वनः[2] पुनैः[3] । [१९पू
३०] उवाच रामं संप्रेक्ष्य पङ्कलग्न इव द्विपः ॥२८॥[4] [१६उ
३१पू] पराङ्मुखवधं[5] कृत्वा को तु प्राप्तस्त्वया गुणः । [१८पू
N] तथा स[6] निहतो वाली रामबाणप्रपीडितः ॥२९॥ [N
N] शोकसन्तप्तहृदयः सुग्रीवं वाक्यमब्रवीत् । [N
३१उ] यदहं युद्धसंसक्तस्त्वत्कृते निधनं गतः ॥३०॥ [१८
शोचामि नाहमात्मानं न तारां नापि बान्धवान् ।
३२] यथा पुत्रं गुणश्रेष्ठमङ्गदं कनकाङ्गदम् ॥ ३१[7]॥ [N
३३पू] स हि मद्दर्शनाभीतो[8] बाल्यात्प्रभृति लालितः[9] ।
३४उ] तडाग इव पीताम्बुरुपशोषं गमिष्यति ॥[10]३२॥ [N

---

१. कै रा ल१ अ ब म ल२ श च—०निर्मुक्तस्त्व० ।
२. भ—वाष्प० ।
३. भ—शनैः ।
४. म—नास्ति ।
५. ब म—प्राङ्मुख० ।
६. म—नच ।
७. भ—अतः परमधिकः पाठः—
स मया लाडितो वीरः सुखवृद्धो ममात्मजः ।
वैरिणो वशमापन्नो वीरः पितृवधातुरः ॥
दीनतां प्राप्स्यति सुतो वाष्पपूर्णाकुलेक्षणः ।
वीरोसौ सुखसंवृद्धो बलवानङ्गदो मम ॥
पुत्रः कथं महादुःखं शत्रुभीतः सहिष्यति ।
इति संचिंत्य संचिंत्य चानर्हत्पतितो भुवि ॥
८. कै ल१ ब म अ ल२ भ च—मद्दर्शनाद्भीतो।ब—संदर्शनाद्० ।
९. भ च—लाडितः ।
१०. कै रा ल१ अ ब म ल२ श—नास्ति ।

एवं विधेनाहवचेष्टितेन
रामेषुणा भिन्नतनुर्नितान्तम् ।[1]
N] विचेतनो वासवसूनुराहवे
पपात चेन्द्रध्वजसन्निभो भुवि ॥[2] ३३॥ [N

इत्यार्षे रामायणे किष्किन्धाकाण्डे[3] वालिवधो नाम
द्वादशः सर्गः ॥ १२ ॥

---

१. भ च—
स तु क्षितौ शोणितविह्वलः स्रवत्
सुपुष्पिताशोक इवानिलोद्धतः ।

२. कै रा ल१ अ ब म ल२ श च—
०भवत् ।

३. कै रा ल१ अ ब म श—
किष्किन्द्या ।

[त्रं-१६]=[ त्रयोदशः सर्गः ]=[ दा-१७ ]

N] महेन्द्रमिवं दुर्द्धर्ष[1] महेन्द्रमिव[2] दुःसहम् ।
९पू] महेन्द्रसुनुं निहतं वालिनं रणदुर्मदम्[3] ॥१॥ [११
N] महेन्द्राऽशनि-तुल्येन शरेणाऽऽनत-पर्वणातं ।
८] रामेण निहतं भूमौ शयानं रुधिरोक्षितम् ॥२॥ [N
ययातिमिव पुण्यान्ते देवलोकात्[4] परिच्युतम् ।
N] आदित्यमिव कालेन[5] युगान्ते विनिपातितम्[6] ॥३॥ [१०
सिंहोरस्कं महाबाहुं दीप्तास्यं हरिलोचनम् ।
१०] लक्ष्मणानुचरो रामो[7] ददर्शोपससर्प[8] च ॥४॥ [१२
स दृष्ट्वा राघवं वाली लक्ष्मणं च महाबलम् ।
११] अब्रवीत् प्रश्रितं वाक्यं करुणं[9] धर्मसंहितम्[10] ॥५॥ [१४
१२पू] कुलीनः सत्त्वसम्पन्नस्तेजस्वी[11] चरितव्रतः । [१७उ
१३पू] सानुक्रोशो महोत्साहः समयज्ञो धृतव्रतः ॥६॥ [११उ
१२उ] रामः करुणवेदी च प्रजानां च हिते रतः [१९पू
१३ उ] इति ते सर्वभूतानि कथयन्ति यशो भुवि ॥७॥ [१९उ
तान् गुणान् संप्रधार्याहमेत्य[12] चाभिजनं[13] तव ।
१४] तारया प्रतिषिद्धः सन् सुग्रीवेण समागतः ॥८॥ [२१

---

१. कै रा ल$_2$ अ ब म श—रामेण निहतं भूमौ ।
ल$_1$—+०ण निहतो भू० ।
२. रा ल$_1$ म—+महींध्रमिव ।
ब— महींध्रमिव ।
३. भ—हेमवा(?मा)लिनं ।
४. अ—+देहलो० ।
५. अ ल$_2$—कल्पान्ते कालेन ।
६. कै रा ल$_1$ ब म श—तु निपा० ।
भ च—भुवि पातितं ।
७. अ—+रामं ।
८. ल$_1$ ब म—+०ससर्ज ।
९. अ ल$_2$—परुषं । च—प्रसृतं ।
१०. भ—परुषं ।
११. रा—+ ०संमंत्रस्ते० ।
१२. कै रा ल$_1$ अ ब म ल$_2$ श—०हमुर्व्यां ।
१३. ल$_1$ ब म—चाभिगुणांस्तव ।
च—चाभिगुणं तव ।
कै रा अ ल$_2$ श—चातिगुणांस्तव ।

N] न मामन्यत्र संरुद्धं[1] प्रसन्नं[2] (?क्तं) वेद्धुमर्हति[3] ।
इति मे बुद्धिरासीत् तु तव धर्मानुदर्शनात्[4] ॥९॥ [२२
१६] न त्वां प्रतिहतात्मानं[5] धर्मबाधमधार्मिकम्[6] ।
१७पू] जाने राम दुरात्मानं तृणैः कूपमिवावृतम् ॥१०॥ [२३
विषये वा पुरे वाऽपि यदा नापकरोम्यहम् ।
१९उ] न च त्वां प्रतियुध्यामि निर्हेतुं[7] हिंसितस्त्वया ॥११[8]॥ [२५
१७उ] सतां वेषधरं[9] पापं प्रच्छन्नमिव पावकम् ।
नाहं त्वां प्रतिजानामि धर्मतत्त्वसमावृतम्[10] ॥१२॥ [२४
फलमूलाशनं दान्तं[11] राजानं काननौकसाम्[12] ।
२८] मामिहाप्रति[13]योद्धारमन्येन च समागतम् ॥१३॥ [२६
हत्वा बाणेन काकुत्स्थ सर्वथा[14]ऽनपराधिनम् ।
२९] किं वक्ष्यसि सतां[15] मध्ये कृत्वा कर्म जुगुप्सितम् ॥१४॥
राजहा[16] ब्रह्महा[17] गोघ्नश्चौरः[18] प्राणिवधे[18] रतः ।
३०] नास्तिकः परिवेत्ता च सर्वे निरयगामिनः ॥१५॥ [३६

---

१. भ च—संरब्धं ।
२. रा ब—प्रसक्तं ।
अ भ च—प्रसभं ।
३. म—¦॰मर्हसि ।
४. अ—॰नुशासनात् ।
५. भ च—विनिहता॰ ।
६. कै अ ल$_2$—¦धर्मं चाधमधा॰ ।
भ—धर्मवादमधा॰ ।
७. भ श—निर्हेतुं । भ च—किमर्थं ।
८. कै—नास्ति ।
९. कै रा ल$_1$ अ ब म ल$_2$ श—वेश॰ । च—¦वेखधरं ।
१०. कै रा ल$_1$ अ ब म ल$_2$ श च—धर्मत्वे तमसा वृतम् ।
११. कै—शान्तं ।
१२. कै भ—काननौकसम् ।
१३. भ च—त्वामिहाप्रति॰ ।
१४. भ—¦स त्वं मामपराधिनं ।
१५. ल$_2$—सभामध्ये ।
१६. ल$_1$ ब म—राज्यहा ।
१७. भ च—ब्रह्मगोघ्नश्च चौरः ।
च—¦ब्रह्मगोघ्नश्च चौर्यात् ।
१८. भ—सखिवधे ।

अधार्यं[1] चर्म सद्भि मे[2] किं मया त्वं करिष्यसि[3] ।
३१] अभक्ष्याणि च मांसानि त्वादृशै धर्मचारिभिः ॥१६[4]॥ [३२
पञ्च[5] पञ्चनखा भक्ष्या ब्रह्मक्षत्रेषु[6] राघव[7] ।
३२] शशकः[8] शल्यको[9] गोधा सेधा[10] कूर्मश्च पञ्चमः ॥१७[11]॥ [३९
चर्म चास्थि च रोमाणि न सेवन्ति मनीषिणः ।
३४] अभक्ष्याणि च मांसानि सोऽहं पञ्चनखो हतः ॥१८॥ [४०
त्वया नाथेन काकुत्स्थ न सनाथा वसुन्धरा ।
३५] प्रमदा शीलसम्पन्ना [12]क्लीबेन पतिना यथा ॥१९॥ [४२
क्रूरः शठो नैकृतिकः[13] क्रुद्धो मिथ्याप्रतिश्रवः[14] ।
३६] कथं दशरथेन त्वं जातस्तेन महात्मना ॥२०॥ [४३
छिन्न-चारित्र-कक्ष्येण[15] सदा दुर्मार्गवर्तिना ।
३७] त्यक्त-धर्माङ्कुशेनाहं हिंसितो रामहस्तिना ॥२१॥ [४४
दृश्यो वै यदि युध्येथा न प्रच्छन्नो नृपात्मज ।
३९] अद्य वैवस्वतं देवं पश्येथा[16] निहतो मया ॥२२[17]॥ [४७

---

१. म—+ वत्स ।
२. भ—+ किमस्थीनि ।
३. ल१ ब च—हरिष्यसि ।
४. म श—नास्ति ।
५. कै म—नहि । ल२—नैव ।
६. कै ब च—०क्षेत्रेषु ।
७. ल१—+ भारतः ।
८. ब—+ शशकः ।
९. कै—शकलो । रा—शलको । म च—शल्लको ।
१०. कै—+ गोधा 'कपिः' इत्यपर-हस्तेन प्रान्ते । च—+ गोधाश्चापि०। रा ल१ अ ब म ल२ श—गोधा तथा ।
११. म—नास्ति ।
१२. ल१ ब श—क्लीवे निपतिता । ल२—क्लीवेन पतिता ।
१३. म—नैष्कृतिकः । ब—+ नैष्कृतिभिः ।
१४. ब—+ ०प्रतिश्रवाः ।
१५. ल१—चारित्र्यकक्ष्येण । भ—+ ०त्रकक्षेण ।
१६. भ—पश्येस्त्वं ।
१७. कै रा ल१ अ ब म ल२ श—नास्ति ।

त्वयाऽदृश्येन तु रणे हिंसितोऽहं दुरात्मना ।
३८] प्रदष्टे[1] उरगेणेव नरः पानवशं[2] गतः ॥२३॥ [४८

सुग्रीवप्रियकामेन वृथाऽहं घातितस्त्वया ।
४०] गत्वा[3] बद्ध्वा प्रदद्यां ते[4] तमहं रावणं रणे ॥२४॥ [५०

न्यस्तां सागरतोये वा पाताले वाऽपि मैथिलीम् ।
४१] आनयेयमहं दर्शे[5] श्वेताम[6]श्वतरीमिव ॥२५॥ [५१

युक्तं यत् प्राप्नुयाद्[7] राज्यं सुग्रीवः स्वर्गते मयि ।
४९] अयुक्तं यदधर्मेण त्वयाऽहं निहतो वृथा[8] ॥२६॥ [५२

इत्येवमुक्त्वा परिशुष्कवक्त्रः
शराभिघात[9]व्यथितान्तरात्मा ।
समीक्ष्य रामं रविसन्निकाशं
५३] तूष्णीं बभूवाथ तदाऽल्पचेताः[10] ॥२७॥ [५४

इत्यार्षे रामायणे किष्किन्धा[11]काण्डे रामविगर्हणं[12] नाम
त्रयोदशः सर्गः ॥ १३ ॥

---

१. कै ल२—†प्रयुक्त उर० ।
शा—†प्रदिष्ट उर० ।
भ—प्रसुप्तः पन्नगेनेव ।
अ च—प्रसुप्त उर०
२. ल१ अ—†पापवशं ।
३. भ—गले । च—गतो ।
४. कै अ—तमहं वै ।
५. कै—†दर्शैः । ल—†पृष्टो ।
ब म—†घृष्टो ।
६. ल१—‡ दर्शौ श्वेतातरीमिव ।
ब—‡ दर्शौ श्वेमश्वरीमिव ।
म—‡ दर्शौ श्वेततरीमिव ।
भ—श्वेतामश्वतरीं यथा ।
च—‡ दर्शौ श्वेतरीमिव ।
७. भ—प्राप्नुते ।
८. रा—यथा ।
९. भ—०वाताद्व्यथि० ।
१०. म—०ल्पचेतः ।
११. कै रा ल१ ब म शा—किष्किंदा० ।
भ च—नास्ति ।
१२. भ च—०विगर्हणो ।

इत्युक्तः[1] प्रश्रितं वाक्यं धर्मार्थसहितं[2] हितम् ।
१] परुषं वालिना रामो निहतेन गतायुषा ॥१॥ [१
तं निष्प्रभमिवादित्यं मुक्ततोयमिवाम्बुदम्[3] ।
२] उक्तवाक्यं हरिश्रेष्ठमुपशान्तमिवानलम् ॥२॥ [२
यथार्थगुणसंपृक्तं[4] शरीर(?रा)हितमुत्तमम् ।
३] अधिक्षिप्तमना[5] रामस्तथ्यं वालिनमब्रवीत् ॥३॥ [३
धर्ममर्थं च कामं च समयं वाऽपि[6] लौकिकम् ।
४] अविज्ञाय[7] कथं बाल्यान्मां विगर्हितुम्[8] अर्हसि ॥४॥ [४
अद्य धर्ममधर्मं च[9] जानासि त्वं कपीश्वर ।
N] क्व ते धर्मस्तदा ह्यासीद् भ्रातृभार्याभिमर्शितः[10] ॥५[11]॥ [N
अपृष्ट्वा[12] बुद्धिसंपन्नान्[13] विद्यातत्त्व[14]विशारदान् ।
५] सोऽयं[15] वानरचापल्यान्न त्वं वक्तुमिहार्हसि ॥६॥ [५
सूक्ष्मोऽपराधो विज्ञेयः सतां धर्ममनुस्मरन् ।
६] हृदिस्थः सर्वभूतानामात्मा वेद शुभाशुभम् ॥७॥ [१५
चपलैश्चपलैः[16] सार्धं वानरैरकृतात्मभिः[17] ।
७] जात्यन्ध इव जात्यन्धैर् मन्त्रयन् वक्ष्यसे नु किम्[18] ॥८॥ [१६

---

१. कै $ल_1$—† इत्युक्त्वा ।
२. म—०र्थसंहितं ।
३. कै—† ०यमिवाम्बुधं: ।
४. भ—धर्मात्म(गु)णसंयुक्तं ।
प्रान्ते भागे संशोध्य 'यथार्थगु०' इति पाठः कृतः । च—धर्मार्थगुणसंयुक्तं ।
५. $ल_1$ ब भ—अधिक्षेप्तुमना ।
६. भ च—चापि ।
७. कै—† अभिज्ञा च ।
म श —अभिज्ञाय ।
८. कै $ल_1$ ब म—† विगर्हयितु० ।
९. अ $ल_2$—वा ।
१०. भ—०र्यावमार्शिनः ।
च—०तृभार्यावमर्शतः ।
११. $ल_1$—नास्ति ।
१२. कै अ $ल_2$—अदृष्ट्वा ।
१३. म—†स्पृश्यसं० । श —†स्पृष्टसं० ।
१४. भ—विद्यातत्त्वे वि० ।
१५. अ—सद्यो ।
१६. श—चापलं चापलैः ।
१७. म—०रैरहतात्माभिः ।
१८. भ—०रन्वितस्त्वं हि वानर ।

अहं तु व्यक्ततामस्य[1] वचनस्य[2] ब्रवीमि ते ।

८] न हि मां केवलं रोषात् त्वं गर्हयितुमर्हसि[3] ॥९॥ [१७

वागुराभिश्च कूटैश्च[4] पाशैश्च विविधैर्नराः । [३९उ

१६] प्रतिच्छन्नाश्च दृश्याश्च गृह्णन्ति बहवो मृगान् ॥१०[5]॥ [४०पू

N] विध्यन्त्यभिमुखांश्चापि[6] न च दोषोऽत्र दृश्यते । [४१उ

१८उ] यान्ति राजर्षयश्चैव मृगयां धर्मकोविदाः ॥११॥ [४२पू

तस्मात् त्वं निहतो वध्यो[7] मया छन्नेन[8] वानर ।

१९] अयुध्यमानो युद्धे वा सौम्य[9] शाखामृगो ह्यसि ॥१२॥ [४२उ

अपरं कारणं पश्य यदर्थं[10] त्वं मया हतः ।

२८] भार्यायां वर्तसे भ्रातुस्त्यक्त्वा धर्मं सनातनम् ॥१३॥ [१८

अस्य त्वं प्रीयमाणस्य[11] सुग्रीवस्य महात्मनः ।

१९] भार्यायां[12] वर्तसे मोहात् स्नुषायां काममोहितः[13] ॥१४॥ [१९

अप्रयमेतत् सह भ्रात्रा व्यसनं घोरमात्मनः[14] ।

N] ग्रहणाय कृतः पाशो यद् वै पापं कृतं त्वया ॥१५॥ [N

अन्यैरपि कृतं पापं प्रमत्तैर्वसुधाऽधिपैः ।

२१] प्रायश्चित्तं न कुर्वन्ति[15] तेन तत् प्राप्यतेऽशुभम्॥[16]१६॥ [३६

तेन तेषां कृतं पापं[16] नैति सौम्येन कर्मणा ।

---

१. रा—‡ स्ववक्तता० ।

२. अ ल$_2$—ब्रवीमि वचनस्य ।

३. रा—विगर्हितु० ।

४. कै श—क्रूरैश्च ।

५. भ—अतः परमधिकं पठ्यते—
प्रधावतो वा वित्रस्तान् विस्रब्धाननधिष्ठितान्
प्रमत्तानप्रमत्तान्वा वने मांसार्थिनो मृगान्॥

६. भ—विचिंत्याभि० ।

७. ब—युद्धे । म—वध्यो ।

८. रा ल$_1$ ब म भ च—बाणेन ।

९. ल$_1$ ब भ—सौम्य ।

१०. श—† यदर्तं ।

११. कै ब म—‡ प्रीयमानस्य ।
भ—प्रीयमाणस्तु ।

१२. भ च—स्मार्यां ।

१३. भ—०रमाहितः ।

१४. म—नास्ति ।

१५. भ—कुर्वन्ति स्तेनैतच्छाम्यते ।

१६. म—नास्ति ।

२२] नाध्यारोहति जातोर्मिः समुद्रः स्वनवानपि ॥१७॥ [N
तस्मात् त्वं निहतः पापः शरेणानतपर्वणा ।
२३] गमिष्यसि सतां लोकान् शस्त्रपूतान् मनोरमान् ॥१८॥ [३६
राजभिः कृतदण्डाश्च कृत्वा पापानि मानवाः ।
२४] विमलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥१९॥ [N
दुर्लभस्य हि धर्मस्य जीवितस्य सुखस्य च ।
२५] राजानो वानरश्रेष्ठ प्रदातारो न संशयः ॥२०॥ [४३
तान् न हिंस्यान्न चाक्रोशेन्नाक्षिपेन्नाप्रियं वदेत् ।
२७] देवा मानुषरूपेण चरन्त्येते महीतले ॥२१॥ [४४
४२पू] त्वं तु धर्ममविज्ञाय केवलं मोहमाश्रितः ।
N] अधिक्षिपसि मां धर्मे पितृपैतामहे स्थितम् ॥२२॥ [४५
एवमुक्तस्तु रामेण वाली प्रव्यथितो भृशम् ।
४६] प्रत्युवाच ततो रामं प्राञ्जलिर्वानरेश्वरः ॥२३॥ [४६
शराभितप्तेन मया नरेश्वरः ।
प्रधर्षितस्त्वं यदजानता विभो ।
N] पितामहेन्द्रोपम संप्रसादितः
क्षमस्व मेऽद्य त्वमतो नृपोत्तम ॥२४॥ [७०

इत्यार्षे रामायणे किष्किन्धाकाण्डे रामवाक्यं नाम
चतुर्दशः सर्गः ॥ १४ ॥

---

१. भ—स्वनवानिव ।
२. कै रा ल१ ब म—+ श्रुत्वा ।
३. भ—हिंसेच्च० ।
४. कै रा ल१ ब म ल२ श च—०क्रोशेच्च क्रोशेच्चा० ।
५. म—+ सुरषरू० ।
६. भ च—नरेश्वर ।
७. रा अ—+ यदि ।
८. म श—पितामहेंद्रोपि च ।
९. कै भ च—नास्ति ।
रा ल१ ब म—किष्किंदा० ।
१०. म—+ रामो वाक्यं ।

## [वं०-१८]= [पञ्चदशः सर्गः] =[दा०-१९, २०,२१]

स वानरमहाराजः शयानः शरविक्षतः ।
१] प्रत्युक्तो[1] हेतुभिर्युक्तैर्नोत्तरं प्रत्यपद्यत[2] ॥१॥ [१
अश्मभिः परिभिन्नाङ्गः प्रहारैर्जर्जरीकृतः ।
२] रामबाणेन चाक्रान्तो जीविताशां[3] मुमोच ह ॥२॥ [२
तं भार्या राममुक्तेन बाणेनैकेन[4] संयुगे ।
३] हतं प्लवगशार्दूलं तारा शुश्राव वालिनम् ॥३॥ [३
सा सपुत्राऽप्रियं श्रुत्वा वधं भर्तुः सुदारुणम् ।
४] निष्पपात[5] गुहाद् तस्माद् संक्रुद्धा[6] गिरिकन्दरे ॥४॥ [४
सा ददर्श ततस्तत्र हरीनापततोऽपरान् ।
५] यूथादिव परिभ्रष्टान् मृगान् निहतयूथपान् ॥५॥ [६
ये त्वङ्गदस्यानुचरा वानरा वै महात्मनः ।
N] ते सकार्मुकमालोक्य रामं[7] भीताः प्रदुद्रुवुः ॥६॥ [५
तानुवाच समासाद्य[8] दुःखितान् दुःखिता वचः ।
६] रामवित्रासितान् सर्वाननुविद्धानिषु(?षु)भिः ॥७॥ [७
राज्ञो वानरसिंहस्य यस्य यूयं[9] परिच्छदाः[10] ।
N] तं विहाय परित्रस्ताः कस्माद् गच्छथ सर्वशः[11] ॥८॥ [८
राज्यहेतोरसौ भ्राता[12] भ्रात्रा[12] रौद्रेण घातितः ।

---

१. अ ल$_2$—इत्युक्तो ।
२. रा म—|प्रतिपद्यत ।
३. भ—जीवितं स ।
४. अ ल$_2$—शरेणैकेन ।
५. भ—| निष्क्रान्त्यन्तःपुरात् ।
६. भ च—|संवृद्धा ।
७. अ ल$_2$—भीताः प्राद्रुद्रुवुर्दिशः ।
भ—समं भीताः प्रदुद्रुवुः ।
८. अ ल$_1$—समापन्ना ।
९. श—| चेयं ।
१०. भ च—परिच्छदः ।
११. भ —वर्गशः ।
१२. ल$_1$ व म —भ्राता भ्राता ।

८] रामेण[1] विदितो दूरान् मार्गणै[2] युधि[2] ताडितः ॥९॥ [९

कपिपत्न्या वचः श्रुत्वा कपयः कामरूपिणः ।

९] प्राप्तकालमविक्लिष्टमूचुर् वचनमङ्गनाम् ॥१०॥ [१०

जीवपुत्रे[3] निवर्तस्व पुत्रं पालय चाङ्गदम् ।

१०] अन्तको रामरूपेण हत्वा[4] नयति वालिनम् ॥११॥ [१३उ

अस्मिन् प्लवगशार्दूले हते सामितिनन्दने[5] ।

१३] रक्ष्यतां नगरी शूरैरङ्गदश्चाभिषिच्यताम् ॥१२॥ [१४

पदस्थो[6] वालिनः पुत्रो भविष्यति सहायवान् ॥१३॥ [N

N] अथ ते[7] रुचितं स्थानं व्याहृतं रुचिराङ्गदाः[8] ।

विशन्तु[9] गिरिदुर्गाणि दूरमन्यानि वानराः ॥१४॥ [१५

१५] सभार्या वीतभार्याश्च सन्त्यत्र वनगोचराः ।

N] लुब्धेभ्योऽतिप्रसन्नेभ्यस्[10] तेभ्यो[11] नस्तुमुलं भयम् ॥१५॥[N

कल्पान्तरगतानां[12] च श्रुत्वा वचनमङ्गना[13] ।

१७] आत्मानं प्रतिसान्त्व्याथ[14] बभाषे चारुहासिनी ॥१६॥ [१७

पुत्रेण मम किं कार्यं किं राज्येन किमात्मना ।

१८] कपिसिंहे महाभागे तस्मिन् गच्छति भर्तरि ॥१७॥ [१८

१९पू] पादमूलं गमिष्यामि तस्यैवाहं महात्मनः[15] ।

---

१. भ च—रामेणाविदितो ।
२. भ—मार्गणेनाशु ।
३. अ ल—वत्त पुत्रि । ब—वरपुत्रि ।
कै रा ल१ अ म ल२ श—जीवपुत्रि ।
४. अ ला२—हत्वा नदति ।
श—हत्वैनमपि ।
५. कै—†समधिनन्दने ;
अ—शक्रस्य नन्दने ।
६. कै रा ल१ ब म श—रामेण ।
अ ल—अंगदो ।
७. म—ते रुदितं । भ—† ते तु चिरं ।
च—†तैरुचितं ।
८. भ—‡०रांगदे ।
९. रा—†विशतां ।
१०. भ—लुब्धेभ्योथ प्र० ।
च—‡०भ्योतिप्रसक्ते० ।
११. भ—०स्वेभ्यो ।
१२. भ—स्वल्पा० ।
१३. रा—‡०मंगला ।
१४. अ भ च—‡आत्मनः प्रतिमं साथ ।
१५. कै—ममात्मनः ।
ल२—नास्ति ।

N] योऽसौ रामप्रयुक्तेन शरेण विनिपातितः ॥१८॥ [१९

१९ उ] एवमुक्त्वा प्रदुद्राव रुदती शोकविह्वला[1] ।

शिरश्चोरश्च[2] बाहू च दुःखेन समै[3](?मा)निघ्नती ॥१९॥ [२०

२०] सा व्रजन्ती ददर्शाथ पतिं निपतितं भुवि ।

भर्तारं वानरेन्द्राणां संयुगेष्वानिवर्तिनाम्[4] ॥२०॥ [२१

२१] क्षेप्तारं गिरिशृङ्गाणां वज्राणामिव[5] वासवम् । [२२ पू

महावात-समुद्भूत[6]-महावेगं[6] महा-स्वनम् ॥२१॥

N] वज्राशनिमुचं[7] घोरं यथैवोपहतं घनम्[8] । [२२ उ

नदन्तं[9] नदतां संख्ये शूरं शूरेण संगतम्[10] ।

२२] शार्दूलेनामिषस्यार्थे हस्तिराजं[11] यथा हतम् ॥२२॥ [२४

[12]पतितं शैलशृङ्गाभं शुष्कं[13] सुविटपं[13] द्रुमम् । [N

२३] नागहेतोः सुपर्णेन चैत्यमुन्माथितं यथा ॥२३॥ [२५ उ

अवष्टभ्यावतिष्ठन्तं[14] ददर्श धनुरुत्तमम् ।

२४] रामं रामानुजं चैव भर्तुश्चैवानुजं तथा ॥२४॥ [२६

सा तान् सर्वान् समासाद्य भर्तारं च हतं रणे ।

२५] समीक्ष्य व्यथिता भूमौ सहपुत्रा पपात ह[15] ॥२५॥ [२७

---

१. कै ल$_1$ल$_2$ब म श रा भ च—शोकलालसा ।

२. भ—शिरश्चोरू च ।

३. कै ल$_2$ब म श रा भ च—समनिघ्नत

४. अ भ च—०ष्वनिवर्तिनं ।

५. कै रा ल$_1$ अ ब म ल$_2$ श च—वज्रेणेव च ।

६. अ म ल$_2$भ च—०मुद्धतं म० । म—‡ ० तसमुत्थात० ।

७. कै रा ल$_1$ ब म ल$_2$—† ०शनिमुचघोरं ।

८. अ—नास्ति ।

९. भ च—‡ नर्दंतं नर्दतां ।

१०. कै रा ल$_1$अ ब म ल$_2$श च—संमतं ।

११. भ च—मृगराजं ।

१२. कै रा—पूजितं । भ—पूरितं । च—यूथिनं ।

१३. कै रा अ—† शुष्कं च वि० । भ च—‡ शुष्कंध्ववि ।

१४. भ—अवष्टभ्य च ति० ।

१५. कै अ भ च—सा ।

२६पू] प्रसुप्तमिव सोपेत्य आर्यपुत्रेति वादिनी ।
N] विललाप पतिं दृष्ट्वा सौदितं मृत्युधार्मनि ॥२६॥ [२८
तां समीक्ष्य तु सौषेणीं क्रन्दन्तीं कुररीं यथा ।
N] पुत्रं चैवाङ्गदं दीनं सर्वे वै दीनतां गताः ॥२७॥ [२९
N] शोचन्ती सा प्रियं पुत्रं पतिं च पतिलालसा । [N
रामचापविसृष्टेन शरेणान्तकरेण तम् ॥२८॥
स.१९,१] दृष्ट्वैव पातितं भूमौ तारा ताराऽधिपप्रभा । [स.२०,१
शरीरेण स्वयं काञ्चिदात्मनः समवेक्षत ॥२९॥ [N
२] विनिष्पिनष्टि चात्मानं प्रगृह्य सुभुजा भुजौ ।
N] हा हताऽस्मि रुदन्ती सा हा हताऽस्मीति चासकृत् ३० [N
३पू] हा हताऽस्मीति विक्रुश्य निपपात महीतले ।
८पू] विक्रोशन्त्यो महानादांस्ताश्च वालिपरिग्रहाः ॥३१॥ [N
N] वानर्य उपधावन्ति कुरर्य इव दुःखिताः ।
तारां च तीव्रशोकार्तां ताश्च दुःखाभिसंहताः॥[13]३२॥ [N
६] आर्तामाश्वासयन्ति स्म वानर्यः शोककर्षिताः ।[15]
सर्वाः कृच्छ्रगता नार्यः सर्वा एव सुपीडिताः ॥३३॥ [N
७] सर्वासां व्यसनं तीव्रमागतं सुदुरत्ययम् ।

१. कै अ—प्रसुप्तमिति ।
२. भ—हार्यपुत्रेति ।
३. भ—संदितं । च—+ स्यंदवे ।
४. कै रा—०दामनि ।
अ भ च—०दामभिः ।
५. कै म—‡सौर्वाणीं ।
रा ल१ ब ल२ श—‡ सोवर्णीं ।
६. कै म—‡कुदंतीं । रा—छंदंतीं ।
भ च रुदंतीं ।
७. ल१ ब म श—०पानिसृष्टेन ।
८. कै—‡ समवेक्षत ।
९. भ—नास्ति ।
१०. भ—सा पपात ।
११. म—महानादं ताश्च ।
१२. कै—+कुररक० । ल२ अ—नास्ति ।
१३. ल२ अ—नास्ति ।
१४. रा—+ आर्तामाश्वासयन्तश्च ।
१५. ल२ अ—नास्ति ।

रामबाहुप्रयुक्तेन महाबाणेन पत्रिणा ॥३४॥ [N

८] हताः स्मैकेषुणा सर्वाः शाखामृगपतौ हते ।

कृताः स्मो विधवाः सर्वाः सर्वाश्च निहताः समम् ॥३५॥ [N

९] सर्वासां नः सुखं जीर्णं हतेऽस्मिन् हरिपुङ्गवे ।

अथ तारा परिष्वज्य पतिं शक्रपराक्रमम् ॥३६॥ [N

१०] उवाच वचनं दीना तारेव गगनाच्च्युता ।

कृताऽहमेवमुन्मूला तव मूलविनाशने ॥३७॥ [N

११] दुःखशोकवती लोके वर्तयिष्याम्यहं कथम् ।

तव स्मरन्त्या हसितं संलापं च शुचिस्मितम् ॥३८॥ [N

१२] क्षस्यते हृदयं नूनं ममेदं शोकपातकः । [N

यानि तानि त्वया सार्धं वनेषु पुष्पगन्धिषु ॥३९॥

१३] विहृतानि पुरा काले तेषामुपरमः कृतः । [७

निरानन्दा निराशाऽहं निमग्ना शोकसागरे ॥४०॥

१४] त्वयि पञ्चत्वमापन्ने महावानरयूथपे ।

दृष्ट्वा त्वां पतितं भूमौ शयानमसुखाय मे । [८

N] कस्याः नु हृदयं नार्या दीर्यतेऽद्य सहस्रधा ॥४१॥ [९

सुग्रीवस्य त्वया भार्या हृता मदविलासिना ।

१६] सार्धं तस्य त्वया व्युष्टिः प्राप्तेयं प्लवगाधिप ॥४२॥ [१०

---

१. अ ब म—क्षताः ।

२. रा—विविधाः ।

३. कै—कृताहमेव दुर्मूला ।
ल१—‡ क्षतामहे वसुर्मूला ।
ब—क्षताहमेवमुन्मूला ।

४. भ—सुविस्मितं ।

५. भ ब—मधुगन्धिषु ।

६. कै रा ल१ अ ब म ल२ श च—दोषत्व० ।

७. कै रा अ—कस्यापि ।
भ—कस्माच्च च कस्याच्च ।

८. ल१ ब म भ च—नाथ ।

९. कै—† सा या । म—† माया ।
ल१ ब म ल२ श—† सायं ।

निःश्रेयसपरा[1] चाहं त्वया वीर विमानिता ।
१७] भाषमाणा शुभं वाक्यं वानरेन्द्रहितैषिणी ॥४३॥ [११
कालो निःसंशयं नूनं जीवितान्तकरस्तव ।
१८] बलाद् येनाभिपन्नो[2]ऽसि सुग्रीवस्या[3]वशो वशम्[4] ॥४४॥ [१३
विधवा शोकसन्तप्ता कृपणं कृपणा सती ।
N] अदृष्टदुःखा दुःखं वै वर्तयिष्याम्यहं कथम् ॥४५॥ [१५
लालितश्चाङ्गदो बालः सुकुमारः सुखैधितः[5] ।
N] लप्स्यते तर्जनं[6][7] कष्टं[8] पितृव्यात्क्रोधमूर्च्छितात्[9] ॥४६॥ [१६
पुत्र पश्याद्य पितरं सुदृष्टं च कुरु प्रियम् ।
N] दुर्लभं दर्शनं चैव तवैतस्य भविष्यति ॥४७॥ [१७
सा समालिङ्ग्य भर्तारं विललाप भृशातुरा ।
N] इषुणा निहतं[10] दृष्ट्वा वालिनं कुञ्जरोपमम् ॥४८॥ [N
N] किमार्यपुत्र शेषे त्वं कृपणो[11] वीर पांसुषु । [N
उन्नाम्य[12] वक्त्रं विमलं मां तथैव ममात्मजम्[13] । [N
N] समाश्वासय चैवैनं सन्दिश्य स्वजनं तथा ॥५०॥
मूर्ध्नि चैनं समाजिघ्र प्रवासं प्रस्थितो ह्यसि । [१८

---

१. कै रा अ श भ च—निश्रेयसं परं ।
२. रा ल१ ब म ल२ श—०पन्नोस्ति ।
३. कै रा ल१ ब म ल२ श च—सुग्रीवश्चावशो ।
४. कै रा ल१ अ ब म ल२ श च—वसन् ।
५. ल१ ब—‡ सुखेदितः । कै रा अ म ल२ च—सुखेधितः । श—सुखोचितः ।
६. कै म श—† तस्य ते । रा ल१ ब ल२ अ—† तस्यार्थे ।
७. ल१ रा—तर्जनं ।
८. श—कष्टं ।
९. कै रा ल१ अ ल२ ब म श—पितृव्यक्रोधमूर्च्छिताम् ।
१०. भ च—०भिहतं ।
११. भ च—कृपणं ।
१२. कै—‡ तन्नाम्य ।
१३. भ च—सांत्वयांगदमात्म० ।

N] रामेण सुमहत् कर्म कृतं त्वामिह निघ्नता ॥५१॥
आनृशंस्यं गतो ह्यस्य सुग्रीवस्य प्रतिश्रवे । [१९
N] सकामो भव सुग्रीव रामं त्वं प्रतिपद्य च ॥५२॥
भुंक्ष्व राज्यमनुद्विग्नः शान्तो भ्राता रिपुस्तव । [२०
N] कस्मादेवं विलपन्तीं प्रेम्णा त्वं नाभिनन्दसे ।
इमाश्च परमत्रस्ता भयाद् रामस्य वानरीः ॥५३॥ [२१
N] तस्या विलपितं श्रुत्वा वानर्यः(?र्याः) सर्वतस्तु ताः ।
परिगृह्याङ्गदं दीनं दुःखेनार्ताः प्रचुक्रुशुः ॥५४॥ [२२
N] तासामार्तस्वरं श्रुत्वा वानरीणां वनान्तरे ।
अन्तःपुरचरो वृद्धः प्राह वाक्यं सहेतुकम् ॥५५॥ [N
N] गुणदोषाश्रयं ज्ञात्वा स्वकर्मफलमात्मनः ।
प्राप्नोति फलमव्यग्रः प्रेत्य सर्वं शुभाशुभम्॥५६॥ [स.२१,२
N] न शोच्यः शोचते शोच्यं कं वा शोच्योऽनुशोचति ।
कश्च कस्येह शोच्योऽस्ति देहेऽस्मिन् बुद्बुदोपमे ॥५७॥ [३
N] अङ्गदश्च कुमारोऽयं संरक्ष्यो जीववत् त्वया ।
आयत्यां च समर्थानि विधेयानीह सर्वथा ॥५८॥ [४
N] जातस्यानित्यतामेत्य भूतानां च गतागतम् ।

---

१. कै—गतोसि त्वं ।
अ ल$_2$—गतस्त्वं हि ।
२. कै रा भ च—†०स्त्वया ।
३. भ च—‡विलपतीः ।
४. ल$_1$—नाभिपद्यसे ।
म—‡नाभ्यपद्यसे ।
५. कै—†सकेतुकं । ( सकौतुकमित्य-परहस्तेन शोधितः) ।
६. भ—†शोच्याः ।
७. कै ल$_1$ अ ब म ल$_2$ श—शोच्यते ।
८. कै रा ल$_1$ अ म ल$_2$ श—०च्यो न० ।
९. ल$_1$ ब—‡बुद्बुधोपमे ।
१०. भ च—जीवपुत्रया ।
११. रा ल$_1$ ब—†०तामेति ।
कै अ म ल$_2$ श च—०तामेतां ।

मानुषेणेह[1] कर्तव्यं पण्डितेनैहलौकिकम्[2] ॥५९॥ [५

N] न हि दैवमनुत्क्रम्य[3] मानुषेणेह[4] सिध्यति ॥६०॥ [N

एवं तु तारा करुणं विलप्य
भर्तुः समीपे सह वानरीभिः ।
व्यवस्यंती[5] प्रायमचिन्त्यरूपा
N] तत्रोपविष्टा भुवि यत्र वाली ॥६१॥ [N

इत्यार्षे रामायणे किष्किन्धाकाण्डे[6] ताराविलापो नाम
पञ्चदशः सर्गः ॥१५॥

---

१. भ—‡मनुष्येनैव ।

२. कै रा ल$_1$ अ ब म ल$_2$ ब श—०तेनेह लौकिकं ।

३. ल$_1$ ब—दैवमनाक्रम्य ।

४. भ—०षेण च ।

५. कै अ ल$_1$ ल$_2$ ब म श रा च—व्यवस्यभिप्राय० । तु० ११,२

६. कै रा ल$_1$ ब म श—किष्किन्दा० । भ च—नास्ति ।

सा विनिःश्वस्य करुणं रुदती शोककर्षिता ।
N] पतन्ती पादयो[1]र्भर्तुस्तारा करुणमब्रवीत् ॥१॥ [N
वानरेन्द्रवियुक्ताया दुर्लभं मम जीवितम् ।
N] एषाऽहं प्रायमासि[2]ष्ये निरपेक्षा स्वजीविते ॥२॥ [N
अनेन वानरेन्द्रेण वालिना युद्धशालिना ।
N] न[3] क्षमाऽहं वि[4]नाभूता मुहूर्तमपि जीवितुम् ॥३॥ [N
खादन्तु मम मांसानि गृध्रगोमायुवायसाः ।
२०] ये चान्ये पिशिताहारास्तेषां च[5] विसृजाम्यहम् ॥४॥ [N
अनुक्रोशवियुक्तां हि[6] कामं वक्ष्यन्ति मां जनाः ।
२१] त्यजन्तीं[7] दयितं पुत्रमङ्गदं कनकाङ्गदम् ॥५॥ [N
न तु तस्मिन् पदे पुत्रो लोके यत्र स्त्रियः पतिः ।
२२] न चैतदवगच्छन्ति प्रायशः प्राकृताः स्त्रियः ॥६॥ [N
न ह्याज्ञापयितुं शक्यः पुत्रो वै[8] पतिवत् स्त्रियाः[9] ।
२३] प्रियो वाऽप्यप्रियो वाऽपि यथा भर्ता सदैव हि ॥७॥ [N
हितार्थं विप्रियं ह्युक्तो जनन्या[10] कुप्यते सुतः ।[11]
२४] क्रुद्धया[12] विप्रियं[13] ह्युक्तो[14] भर्ता तु परितुष्यति ॥८॥ [N

---

१. ल१ अ ल२ ब म शा—पादयोस्तत्र।
२. भ च—† प्रायमाशिष्ये ।
३. म—† नोत्सहेयं ।
४. कै ल१ ब अ म ल२ शा—
विना भूमौ ।
५ अ ल२—तु ।
६. भ च—०वियुक्तेति ।
७. ल२ ब म भ च—त्यजंती ।
८. कै—ह्यव... । रा—ह्यवनुतः ।
भ च—ह्यवधृतः ।
९. कै— स्त्रियाः । रा—† स्त्रियः ।
१०. ल१—नास्ति ।
११. ल२—अतः परमधिकः पाठः—
क्रुद्धया विप्रियं ह्युक्तो जनन्या कुप्यते सुतः ।
१२. ब—† क्रुद्धाया । ल१—नास्ति ।
१३. कै रा ल२ अ ब—तु प्रियं ।
भ—तु स्त्रिया । च—† तु प्रिया।
ल१—नास्ति ।
१४. ल१—नास्ति ।

२८पू.] न निवर्तितुमिच्छन्ति मातरः सततं सुतम् । [N
पुत्रहस्तात् तु का नारी सत्त्व[1]युक्ता मनस्विनी ।
२६] भोक्तु[2]मुत्सहते पिण्डं[3] वैधव्याक्षररूषिता[4] ॥९॥ [N
एतान् दोषान् विमृश्याहं[5] विमुच्य सुतसंश्रयम् ।
२७] श्रेयः प्राणपरित्यागं भर्तृहीनाऽद्य रोचये ॥१०॥ [N
एषा मे रुचिता बुद्धिर्यत् त्यक्त्वा जीवितं प्रियम् ।
२८] भर्तारमनुगच्छेयं प्रयातं मार्गमक्षयम् ॥११॥ [N
सा त्वेवं ब्रुवती तारा बाष्पगद्गदभाषिणी ।
२९] शरीराद् भूषणान्येव समन्ताद[6]व(?वा)तारयत् ॥१२॥ [N
सा तु भूषणहीनाङ्गी चन्द्रहीनेव शर्वरी ।
३०] शुशुभे बाष्परुद्धाक्षी सोपरागेव रोहिणी ॥१३॥ [N
आर्यपुत्रेति[7] शोकार्ता बाष्पगद्गदया[8] गिरा ।
३१] निपपाताथ[9] सा भूमौ खादिवोल्का सनिस्वना ॥१४॥ [N
सा विवर्णमुखी दीना वडवेव[10] महीतले ।
३२] पांसुरूषितसर्वाङ्गी[11] रुदती[12] परिचेष्टते[13] ॥१५॥ [N
चारयन्ती ततश्चक्षुः सर्वतस्तमपश्यती ।
३३] सुग्रीवं भ्रातरं भर्तुस्[14]तत्रासीनमवस्थितम् ॥१६॥ [N
सा तमुद्दिश्य चुक्रोश समुत्थायापसृत्य[15] च ।

---

१ श—सुत० ।
२. श—का तमुत्सहते ।
३. रा ल१—†पीतुं । श म—पातुं । कै अ ब ल२ च —पीडां ।
४. म—†०भूषिता । भ—०दूषिता ।
५. कै रा अ म ल२ श च—विमृष्याहं ।
६. कै रा—समेतादव० ।
७. भ—हार्यपुत्रेति ।
८. भ च—†हृदयावुद्गिरद्गिरः ।
९. भ—निपपाताववशा ।
१०. रा—† वाडवेव ।
११. ल१ अ ल२ ब म च—† पांशुभूषित० ।
१२. ल१ म—रुदंती ।
१३. कै—† ०वेष्टती । रा ल१ ब ल२—०वेष्टिते । अ म श—०वेष्टते ।
१४. कै ल१ ब ल२ म श—भ्रातुस्त० ।
१५. भ—० स्थायोपसृत्य ।

३४] उवाच वाक्यं वाक्यज्ञा तदा सा परुषाक्षरम् ॥१७॥ [N
साधु मामपि सुग्रीव परित्याजय जीवितम् ।
३५] लोके हि पतिहीनायाः कृपणं जीवितं स्त्रियाः[1] ॥१८॥ [N
हतैवाहं[2] प्रिया कामं वालिनं ममभिन्नता ।
३६] विना शस्त्रं हि[3] नारीणां लोके पतिवधे वधः ॥१९॥ [N
३७पू] एवमुक्तः स सुग्रीवो वचनं तारया तदा ।
N] किञ्चिदागतवैक्लव्यो ह्रिया च समभिप्लुतः ॥२०॥ [N
३७उ] वसुधासक्तनयनो नोत्तरं प्रत्यपद्यत ॥२१[6]॥ [N
तां तथा परितप्यन्तीं तारां शोकसमाकुलाम् ।
स.२०,१] वानर्यो विविधैर्वाक्यैर्हेतुभिश्च न्यदर्शयन् ॥२२॥ [N
तासां वचनमाज्ञाय सर्वासां संमतं हितम् ।
२] भूयः शोकसमाक्रान्ता विलापमुपचक्रमे ॥२३॥ [N
दुःखेन महता युक्ता भयेन च शुभानना ।
N] भर्तारमुपगृह्णन्ती तारा शोकाकुलाकुला ॥२४॥ [N
अङ्गद-प्रतिरूपाणां पुत्राणां शतमेकतः ।
३] एकश्चैव भवेद् भर्ता न तु भर्तृसमः सुतः ॥२५॥ [N
५उ] प्राणान् न धारयिष्यामि त्यजाम्यद्य कलेवरम् ।
६पू] ममाप्यवश्यं मरणं पश्चादपि भविष्यति ।
N] अनेन विधिना भर्तुः श्लाघनीयतरं[15] ततः ॥२६॥ [N

१. कै ल$_1$ म—+स्त्रियः ।
२. कै—हतेवाहं ।
३. कै अ ल$_2$—हि शस्त्रं ।
४. रा—+ जरया ।
५. रा अ—‡ प्रतिपद्यत ।
६. ल$_2$—नास्ति ।
७. ल$_2$—तथा परितपंतीं तां ।
८. भ—० भ्यद० ।
९. श—+ समता ।
१०. भ च—विलप्तु० ।
११. भ च—भर्तृजेन ।
१२. रा ल$_1$ अ ब म ल$_2$ श भ च सुहृत् ।
१३. भ—त्यक्ष्याम्यद्य ।
१४. कै रा ल$_1$ अ ल$_2$ ब म श—+ममाप्येकस्य । च—ममाप्येकस्या ।
१५. भ—+ ०नीयतरम् ।

राजर्षिकुलजातस्य वने वन्येन जीवतः ।
७] अनुरूपं न[1] रामस्य निर्वैरं वालिनो वधः[2] ॥२७॥ [N
प्रहरन्ति महात्मानो न नारीषु न[3] वानरे ।
८] वालिनो मन्दभाग्यत्वादेतद् रामस्य विस्मृतम् ॥२८॥ [N
नात्यर्थं परितप्येऽहं यद्यव्याजहतो भवेत् ।
९] इमं व्याजहतं दृष्ट्वा मनो मे परितप्यते ॥२९॥ [N
१०पू] अस्थाने वालिनं हत्वा युध्यमानं परेण च ।
न संतप्यति काकुत्स्थः कृत्वा कर्म जुगुप्सितम्[4] ॥३०॥ [N
N] कपीनां प्रवरः कस्मान् न वाली विनियोजितः [N
१०उ] पलाशसेविना भग्नं त्वया चूतवनं महत् ।
N] फलकाले निराशः स्यात् तथा राम कृतं त्वया[5] ॥३१॥ [N
यदि वानरसख्यं च मन्यसे कार्यमात्मनः ।
११] शीघ्रं[6] तन्न कृतं कस्माद्[7] वालिना[8] बाहुशालिना ॥३२॥ [N
N] मृतस्यापि हि मे भर्तुः स्पर्श एव विशिष्यते ॥३३॥ [N
मितं ददाति हि पिता मितं भ्राता मितं सुतः ।
N] अमितस्य हि[9] दातारं भर्तारं का न पूजयेत् ॥३४॥ [N
N] पार्थिवेन[10] प्रियेणाहं मुहूर्तेन विनाकृता ॥३५॥ [N
कपीनां प्रवरः कस्मात् स वाली न नियोजितः ।"[11]

---

१. अ ल२—† च ।
२. कै रा अ ल२ भ च—वधम् । म—† वधाः ।
३. ल२—च वा रणे ।
४. कै रा ल१ अ ब म ल२ श—नास्ति ।
५. ल१ ब—त्वया कृतं ।
६. कै भ च—वालिना न ।
७. अ—† तस्माद् ।
८. कै भ च—बलिना ।
९. ल१ ब—च ।
१०. कै रा ब ल२ श—पार्थिवेम-प्रिये० । म—पार्थिवेंद्रप्रि ० ।
११. कै रा ल१ अ ब म ल२ श च—नास्ति । (पूर्वस्मिन् ३१ पद्ये पठितत्वेऽपि समग्रुभयत्र प्रकरणाकांक्षापूरकत्वात् पुनः पाठोऽनुमतो द्रष्टव्यः)



सेन्द्रैरपि सुरैः सीता यदि ते[1] सहितै हृता ।
१२] गतः सहायतां वाली न चिरेण जयेद्[2] तु ताम् ॥३६॥ [N
बाहुभ्यां येन सुग्रीवः ससुहृन्नैकशो जितः ।
१३] सोऽद्य रामशराक्रान्तस्त्याजितो जीवितं हरिः॥३७॥ [N
त्वां[3] राम[3] शप्तुं[4] शक्तोऽस्मि[4] पतिव्रतगुणाश्रयात्[5] ।
१४] धर्षितायां तु वैदेह्यां न तावच्छापमर्हसि ॥३८॥ [N
अचिरेणैव कालेन त्वया वीर्यबलाद्धृता ।
१५] सा सीता मम शापेन न चिरं त्वयि वत्स्यति ॥३९॥ [N
आत्मनः शौचमादाय तत्त्वतः सगुणा सती ।
१६] याच्यमाना त्वया सीता पुनर्यास्यति मेदिनीम्॥४०॥ [N
विलप्यैवं तदा तारा पुना रामाश्रयं[6] वचः ।
१७] समीपस्थं प्रियं[7] पुत्रमिदं[8] वचनमब्रवीत् ॥४१॥ [N
मित्राद् वैरं हि रक्षेत दुःखं मित्रं हि रक्षितुम् ।
१८] मित्रादुत्पतितं वैरं मूलमेव निकृन्तति ॥४२॥ [N
अस्तु(श्रु) धाराहतास्यौष्ठी तारा सा तु तपस्विनी ।
१९] क्रोशन्ती न्यपतद् भूमौ पतिशोकपरिप्लुता[9] ॥४३॥ [N
ततो[10] मोहहतस्याङ्के शीर्षमारोप्य वालिनः[11] ।

---

१. भ—तैः ।
२. भ च—नयेत् ।
३. $ल_1$ अ ब म $ल_2$ श—राम ते।
४. कै रा $ल_1$ अ ब म $ल_2$ श—शापशक्तास्मि ।
५. अ भ च—पतिव्रतगुणा ।
६. रा—वामाश्रयं ।
७. रा—हितं । $ल_1$ अ ब $ल_2$ म श—नास्ति ।
८. $ल_1$ अ ब $ल_2$ म श—०मिदं ततो ।
९. रा श—पराप्लुता ।
१०. रा $ल_1$ म—तमोमोह० । ब—ततो मोहगतस्या० ।
११. अ $ल_2$—नास्ति ।

२०] मुमोच बहु बाष्पं सा शोकपावकदुःखिता[1] ॥४४॥ [N

तस्या दुःखितशब्देन[2] वाली मोहगतोऽपि सन् ।

२१] शनैरुन्मीलयामास नयने हरिसत्तमः ॥४५॥ [N

N] अपश्यद् रुदतीं रामामङ्गदं दीनचेतसम्[3] ॥४६॥ [N

स भूमौ सन्यस्तसर्वाङ्गस्तप्तकाञ्चनभूषणः ।

स.१६ २] पपात देवराजस्य पुत्रो मुक्तासुसंश्वरः[4] ॥४७॥ [स१७,२

तस्मिन्निपतिते[5] भूमौ ऋक्षवानर-राजनि[6] ।

३] भ्रष्टचन्द्रमिव व्योम न प्राकाशत[7] मेदिनी ॥४८॥ [३

भूमौ निपतितस्यापि तस्य देहो महात्मनः ।

४] जहौ लक्ष्मीं न च प्राणान् न तेजो न पराक्रमम् ॥४९॥ [४

तस्य दत्तवरा[8] माला काञ्चनी दन्तभूषणा[9] ।

५] दधार हरिमुख्यस्य प्राणांस्तेजःसमाहिता ॥५०॥ [५

स[10] तया मालया वीरो हैम्या वानरयूथपः ।

६] सन्ध्याऽनुरक्तपर्यन्तः[11] पयोधर इवाबभौ ॥५१॥ [६

तस्य माला च देहश्च मर्मघाती शरस्तथा[12] ।

७] त्रिधेव पतिता लक्ष्म्याः[13] पतितस्याप्यशोभयन्[14] ॥५२॥ [७

तदस्त्रं तस्य वीरस्य स्वर्गमार्गप्रदर्शकम्[15] ।

---

१. अ ल$_2$—नास्ति ।

२. भ च—रुदितश० ।

३. भ—दीनमासनं (नसं) ।

४. कै—† पुत्रो मुक्तासु० ।

अ भ च—यन्त्रमुक्त इव ध्वजः ।

५. कै रा ल$_1$ ब म ल$_2$ श—

‡ तस्मिन्नुत्पतिते ।

६. कै रा ल$_2$ श—भूमावृक्ष० ।

७. कै म भ च—‡ प्रकाशत ।

८. ब ल$_1$ श—दत्तचरी ।

९. भ—रत्नभूषणा ।

कै अ ल$_1$—त्यक्तः पाठः ।

१०. कै अ ल$_1$—त्यक्तः पाठः ।

११. ल$_1$ अ म ल$_2$ श—०क्तपर्यतपयो० ।

कै—०'नुराग'० इत्यपरहस्तेन प्रान्ते ।

१२. ल$_2$ अ भ च—शरस्ततः ।

१३. भ च—लक्ष्मीः ।

१४. भ च—०शोभयत् ।

१५. कै रा ब—०प्रदेशकं ।

अ ल$_2$—०प्रवर्तकं ।

N] रामबाणविनिक्षिप्तमनयत् परमां गतिम् ॥ ५३॥ [८
ततः पुनर्महातेजा वाली दुःखसमन्वितः ।
N] प्राणान्तकरणीं घोरां वेदनां सन्नियम्य च ॥५४॥ [N
N] उवाच रामं सोद्विग्नः समीपस्थमरिन्दमम् । [N
त्वं जनाधिपतेः पुत्रः प्रशान्तः प्रियदर्शनः । [१७पु
१९] लिङ्गमप्यस्ति ते राम सदृशं ब्रह्मचारिणाम् ॥५५॥ [N
कः क्षत्रियकुले जातः श्रुतवाञ्छिन्नसंशयः ।
२१] धर्मलिङ्गप्रतिच्छन्नः क्रूरं धर्मं समाचरेत् ॥५६॥ [२७
N] राम राजकुले जातो धर्मज्ञ इति विश्रुतः ।[3] [२८
N] मुनिलिङ्गधरः कस्मादधर्मं सेवसे सदा ॥५७॥ [N
शमो दानं दया धर्मः सत्यं शीलं पराक्रमः ।
२२] पार्थिवानां गुणा राम दण्डश्चाप्यपकारिषु ॥५८॥ [२९
२३पू] वयं वनचरा राम मृगा मूलफलाशिनः ।
नैषा प्रकृतिरस्मासु या मनुष्येषु दृश्यते ॥५९॥ [३०
N] न तेऽस्त्युपचितो धर्मो नार्थबुद्धिरवस्थिता ।
इन्द्रियैः कृष्यसे हि त्वं सूत्रबद्ध इव द्विजः ॥६०॥ [N
N] बाणेनैकेन काकुत्स्थ कृतं कर्म जुगुप्सितम् ॥६१॥ [N
भूमि हिरण्यं कुप्यं[12] च[12] पशवो विग्रहास्पदम् ।

---

१. रा भ च—प्रतीतः प्रिय० ।
श—राम सुप्रिय० ।
२. रा भ च—धर्मचारिणां ।
३. अ $ल_2$—नास्ति ।
४. रा—कर्म सेवते ।
भ च—कर्म सेवसे ।
५. कै—सत्त्वं ।
६. रा—शीलं पराक्रमं ।
म—शीलप० ।
७. कै—'नित्य' नित्यपरहस्तेन ।
८. भ च—तेस्त्यपचितो ।
९. कै रा $ल_1$ ब म $ल_2$ श भ च—
०स्थितः ।
१०. कै $ल_1$ अ ब म $ल_2$ भ च—
द्विपः ।
११. रा भ च—विगर्हितं ।
१२. म—रूप्यं च । च—कुप्यञ्च ।

२४] तत्र कस्ते मदीयेऽस्मिन् धने लोभः फलेषु वा ॥६२॥ [३१

इक्ष्वाकूणामियं भूमिः सशैलवनकानना ।

स.१७,९] मृग-पक्षि-मनुष्याणां निग्रहानुग्रहावपि[2] ॥६३॥ [स१८,६

तान् हि पालयते धर्मान् भरतः सत्यवाक्[3] शुचिः ।

१०] धर्मकामार्थकालज्ञो निग्रहानुग्रहे रतः ॥ ६४ ॥ [७

नयश्च[4] विनयश्चोभौ यस्मिन् सत्यं च सुस्थितम् ।

११] विक्रमश्च नयोपेतो देशः कालश्च राजते[5] ॥६५॥ [८

यस्य धर्मकृतादेशाद्[6] वयमन्येऽपि[7] पार्थिवाः ।

१२] चरन्ति वसुधां सर्वां धर्मवर्त्मानुवर्तिनः[8] ॥६६॥ [९

तस्मिन् नृपतिशार्दूले भरते धर्मवत्सले ।

१३] पालयत्यखिलां[9] भूमिं कथं बुध्येत विग्रहम् ॥६७॥ [१०

न वयं पथि विभ्रष्टाः स्वधर्मस्यानतिक्रमात्[10] ।

N] भरतं च पुरस्कृत्य चिन्तयन्तो यथाविधि ॥६८॥ [११

इत्येवमुक्त्वा विरतं वालिनं धर्मवादिनम् ।

N] उवाच वचनं रामो विहसन्निति हेतुमत् ॥६९[11]॥ [N

१८पू] स त्वं विकृष्टराज्यश्च धर्मेण च विगर्हितः[12] । [१२ पू

२८उ] भ्रातुर्वर्तसि दारेषु [13]जीवतो वानरेश्वर । [१८ उ

---

१. श—पदे कस्मिन् ।

२. कै रा—।निग्रहावुग्रहा० ।
   ल$_1$ अ ब म ल$_2$ श—निग्रहावग्र० ।

३. कै—सत्यवान् ।

४. कै ल$_1$ अ ब म ल$_2$ श भ च—
   जयश्च विजयश्चोभौ ।

५. कै ल$_1$ ब म ल$_2$ श भ च—
   राजभिः । अ—राजति ।

६. भ —धर्मकृतो देशान् ।

७. भ च—०न्ये च ।

८. ल$_1$—।०नुवर्तिनां ।

९. कै ल$_1$ अ ब म ल$_2$—पालयन्न० ।

१०. रा भ च—०स्याव्यतिक्रमात् ।

११. रा भ च—नास्ति ।

१२. रा भ च—
   कामं तत्र प्रधानश्च प्रस्थितश्चेतरे पथि ।
   इति वालिवचः श्रुत्वा राघवः पुनरब्रवीत् ॥
   कारणं त्वं परं पश्य यदर्थमभिघातितः ।

१३. रा ल$_1$ म—।जीवितो ।

१९ पू] तस्मात् त्वं निहतः पाप शरेणानतपर्वणा ॥७०॥ [N
ज्येष्ठो भ्राता पिता चैव यश्च विद्यां प्रयच्छति ।
३०] त्रयस्ते पितरो ज्ञेया धर्मं चेदनुबुध्यसे[1] ॥ ७१ ॥ [१३
यवीयान् सोदरः पुत्रः शिष्यश्च[2] गुणवानपि ।
३१] एते पुत्रसमा ज्ञेया धर्मेषु हरिपुङ्गव ॥७२॥ [१४
तद् व्यतीतस्य ते धर्माद् व्यतिक्रान्तस्य लौकिकात्[3] ।
३२] भ्रातुर्भार्याविमर्शेऽस्मिन्[4] वेदोऽयं[5] विनिपातितः॥७३॥ [N
एवं धर्म-विरुद्धस्य[6] लोक-वृत्ताव्यपेक्षिणः ।
३३] सदृशं मरणं मन्ये तवेदं[7] हरियूथप ॥७४॥ [२१
३४उ] स्वैरवृत्तश्चरेत् कामं[8] तस्य दण्डो वधः स्मृतः ॥७५॥ [२३ पू
भरतश्च महीपालो वयं वाऽऽदेशवर्तिनः[9] ।
३५] त्वां च धर्ममतिक्रान्तं[10] कथं शक्यमुपेक्षितुम्[11] ॥७६॥ [२४
गुरुवृत्तमतिक्रान्तांः[12] प्रजा धर्मेण पालयन्[13] ।
३६] भरतः कामवृत्तानां निग्रहे देशवर्तिनाम्[14] ॥७७॥ [२५
वयं वा[15] भरतादेशे[16] विधिं पश्य विधानवत्[17] ।

---

१. रा—† वेद न बुध्यसे ।
कै ल१ अ ब म ल२ शा—०नुबोध्यसे ।
२. ल२—† शिष्टश्च ।
३. भ—लैकिकं । च—लैकिकान् ।
४. कै च—०‡विमर्षे ।
भ—†०भिमर्षात्वं ।
५. रा भ—श्रृणु तेन निपातितः ।
६. अ ल१—†०विवृद्धस्य ।
७. रा भ च—तवाद्य ।
८. शा—कर्म ।
९. ल१ म—वा देववार्त्तिनः ।
च—वा देववर्तिनः ।
१०. रा भ—त्वं च धर्ममतिक्रान्तः ।
११. रा भ—शक्य उपेक्षितुं ।
म शा—†शक्यमपे० ।
१२. कै—†०क्रांतान् । म—†०तिक्रांतः ।
१३. रा—नास्ति ।
भ—प्रान्ते सन्निवेशितम् ।
१४. रा भ च—पर्यवस्थितः ।
१५. रा भ च—च ।
१६. रा भ च—भरतादेशे ।
१७. रा भ च—विधानवित् ।

३७] त्वद्विधान् भिन्नमर्यादान् नियन्तुं कृतनिश्चयाः ॥७८॥ [२६
सुग्रीवेण च मे सख्यं लक्ष्मणेन यथा तथा ।
३८] दारराज्यनिमित्तं च निग्रहस्ते कृतो मया ॥७९॥ [२७
३९पू] प्रतिज्ञा च मया दत्ता तदा वानरसन्निधौ ।
४० उ] प्रतिज्ञा च कथं शक्या मद्विधेन ह्य(?ह्यु)पेक्षितुम् ॥८०॥ [२८
४१पू] तदेभिः कारणैः सर्वैर्महद्भि र्हेतुसंज्ञितैः ।
N] शासनं भरतेनोक्तं तद् भवाननुमान्यताम् ॥८१॥ [२९
४३पू] सर्वथा धर्म एवेति कर्तव्यस्तव निग्रहः । [३०
N] कार्या च भरतास्याज्ञा धर्ममेवानुवर्तिना ॥८२॥ [N
४४पू] तदलं परिखेदेन धर्मतः परिकल्पितः ।
N] वधस्ते हरिशार्दूल न वयं स्वे वशे स्थिताः ॥८३॥ [३७
तस्य तद् वचनं श्रुत्वा धर्महेत्वर्थसंहितम् ।
४६] समाहितमना वाली न किञ्चिद् व्याजहार ह ॥८४॥ [N
N] नश्यमान–मनो–बुद्धि-भ्रष्ट–सर्वेन्द्रियाक्रियः । [N
वीक्षमाणः स मन्दासुः सर्वतो मन्दमुच्छ्वसन् ॥८५॥
स.२१,१] सुग्रीव-संहितं तत्र ददर्शात्मजमात्मनः । [स.२२,१
संप्राप्तविजयं वाली सुग्रीवं प्लवगेश्वरम् ॥८६॥

---

१. कै रा ल१ अ ब म ल२ शा— त्वद्विधा भिन्नमर्यादा नियतं ।
च–त्वद्विधा छिन्नमर्यादा नियतं।
२. कै म—०कृतनिश्चयः ।
३. कै ल१ अ ब ल२ श म— वा कृतं शक्या ।
४. भ—भवतो ह्युक्तं। च–भरतो ह्युक्तं।
५. ल१ ब— ०नुवर्तिनः ।
भ—नुवर्तता ।
६. भ—भ्रश्यमान० ।
च—त्रश्यमान० ।
७. कै ल१ भ च—वीक्ष्यमाणः ।
८. ल१ ब म— समं धातुः ।
ल२—स मंदांतः ।
शा—समं भ्रातुः ।
च—स मंदायुः ।
९. रा भ—वाली सुग्रीवसहितं ।
च—दूराद् सुग्रीवसहितं ।

२] आभाष्य व्यक्तया वाचा सस्नेहमिदमब्रवीत् । [२
सुग्रीव दोषेण¹ न मां गन्तुमर्हसि किल्बिषम् ॥८७॥
३] कृष्यमाणं भविष्येण बुद्धिमोहेन² वै बलात् । [३
युगपद् विहितं नूनं न³ मन्ये सुखमावयोः ॥८८॥
४] सोदर्यं⁴ भ्रातृयुक्तं हि तदिदं गतमन्यथा । [४
इदं त्वं प्रतिपद्यस्व⁵ राज्यमेषां⁶ वनौकसाम् ॥८९॥
५] मां चाप्यद्यैव⁷ गच्छन्तं पश्य वैवस्वतं क्षयम्⁸ । [५
जीवितं च हि⁹ राज्यं च श्रियं च विपुलामिमाम् ॥९०॥
७] प्रजहाम्येव¹⁰ वै तूर्णं महच्चासादितं¹¹ यशः । [६
८पू] अस्यां त्वहमवस्थायां वीर वक्ष्यामि यद् वचः ॥९१॥ [७पू
N] तच्छ्रुत्वा त्वं महाबाहो हृदि कर्तुमिहार्हसि ।
शरो हि मे शरीरस्थो रामविक्रमपातितः¹² ॥९२॥ [N
६] सर्वेन्द्रियविमोक्षाय प्राणानादाय यास्यति । [N
८उ] यद्यप्यसुकरं कर्म कर्तुमेव तदर्हसि ॥९३॥ [७उ
९पू] सुखार्हं च सुसंवृद्धं बालमेनमबालिशम्¹³ । [८पू

---

१. अ—†दोषो न तु ।
२. रा श—विद्धि मोहेन ।
च—बुद्धिमोहेन ।
३. रा—न मन्येकृतमा० ।
कै ल₁ अ ब म ल₂ श—समये सु०
४. रा—सौहार्दे ।
५. अ ल₂—प्रतिबुद्धयस्व ।
६. श—राज्यमेकं ।
७. रा—वाप्यथैव । श—चैवाद्य ।
८. ल₁ अ ब ल₂ भ च—वैवस्वत-क्षयम् ।
९. ल₁ अ ब ल₂—हिरण्यं ।
१०. कै च—†प्रजहास्येव ।
रा भ—प्रजहाम्येष ।
११. रा भ च—०बाप्याहृतं ।
ल₁ अ ब म ल₂—०बापादितं ।
१२. अ ल₂ – ०ममास्थितः ।
१३. ल₁ म श—‡०नं सुबालिनं ।
कै रा ब ल₂—०नं सुबालिशं ।
च—‡० नत्सुबालिशं ।

N] विद्धि राजन् महाप्राज्ञ[1] सततं लालितं[2] मया ॥९३॥ [N

N] अदृष्टपूर्वे सुग्रीव दुःखे संविग्नचेतसम् ।

९उ] वाष्पपूर्णमुखं पश्य भूमौ पतितमङ्गदम् ॥९४॥ [N

मम प्राणात् प्रियतरं पुत्रं परमदुःखितम् । [N

१०] मया हीनं महीनाथ सर्वथा[3] परिपालय ॥९५॥

त्वमस्य धाता नेता च[4] परित्राता च सर्वशः ।

११] भयेष्वभयदाता च यथाऽहं[5] प्लवगेश्वर[6] ॥९६॥ [९

१२पू] एष तारात्मजः श्रीमान् मम तुल्यपराक्रमः । [१०पू

N] यौवराज्येऽभिषेक्तव्यो मयि प्रेतगतिं[7] गते ॥९७॥ [N

N] सीतायाश्चाधिगमने धर्षणे[8] रावणस्य च । [N

१२उ] रक्षसां च वधे तेषामग्रतस्ते भविष्यति ॥९८॥ [१०उ

अनुरूपाणि कर्माणि विक्रमी बलवान्[9] रणे ।

१३] करिष्यत्येष तारेयस्तेजस्वी तरुणोऽङ्गदः ॥९९॥ [११

सुषेणदुहिता चेयमर्थे[10] सूक्ष्मविनिश्चये ।

१४] औत्पातिके च विविधे सर्वत्रोत्तमनिष्ठिता ॥१००॥ [१२

यदेषा साध्विति ब्रूयात् तत्[11] कार्यमविशङ्कया ।

१५] न हि तारामतिः[12] किञ्चिदन्यथा परिवर्तते ॥१०१॥ [१३

राघवस्य च ते कार्यं कर्तव्यं प्राक् प्रचोदनात् ।

---

१. रा—महाप्राज्ञं ।
२. कै रा अ ल₂ भ च—लाडितं ।
३. रा ल₁ ब म भ च—सर्वतः ।
४. कै ल₁ अ ब म ल₂ श—पालने तावत् ।
५. ब—यथा त्वं ।
६. रा ल₁ भ च—प्लवगेश्वरः ।
७. ल₁ अ ब श—प्रेतवशं ।
८. कै रा ल₁ ब म भ च—दर्शने ।
९. रा—शूरो विक्रमवान् ।
 श—विक्रमे ब० ।
 भ—। विक्रमं ब० ।
१०. अ भ च—चेयमर्थसूक्ष्म० ।
११. रा—कार्यमुक्तं न संशयः ।
१२. भ—तारामतं ।

१६] स्यादधर्मो ह्यकरणात् त्वां च हिंस्याद्धि मामिव॥१०२॥ [१४
इमां च मालां गृह्णीष्व दत्तां सुग्रीव काञ्चनीम् ।
१७] उदारा श्रीः स्थिता ह्यस्यां त्वामेष्यति मृते मयि॥१०३॥ [१५
इत्येवमुक्त्वा सुग्रीवं रामं प्राञ्जलिरब्रवीत् ।
१८] प्रणम्य शिरसा वाली पुत्रं प्रति महायशाः ॥१०४॥ [N
आदितः कृशवृत्तिर्यः कृपणो न स राघव ।
१९] महात्मा व्यसनं प्राप्तो दीनः कृपण उच्यते ॥१०५॥ [N
कुले त्वकृपणे राम संभूतः सर्वकामदे ।
२०] अङ्गदः कृपणो रामं भविष्यति मृते मयि ॥१०६॥ [N
एतावदेव शोचामि यत् प्रियं प्रियदर्शनम् ।
२१] न द्रक्ष्याम्यङ्गदं पुत्रं पापकर्मा दिवं यथा ॥१०७॥ [N
दर्शने चाङ्गदस्याहं पुत्रस्य नृवरात्मज ।
२२] अवितृप्तो मरिष्यामि त्वया राम रणे हतः ॥१०८॥ [N
त्वं गतिः सर्वभूतानां शरणं च परन्तप ।
२३] प्रतिगृह्णीष्व मे पुत्रमङ्गदं कनकाङ्गदम् ॥१०९॥ [N
छिन्नमर्मा परामार्तिं प्राप्तोऽस्मि शरपीडितः ।
२४] जीवितं त्यक्तुमिच्छामि प्राणाः सन्त्वरयन्ति माम् ॥११०॥[N
इयमैन्द्री शुभा माला काञ्चनी शतपुष्करा ।
२५] दत्ता महेन्द्रेण मम प्रीतेन पुरुषर्षभ ॥१११॥ [N

---

१. भ—स्यादधर्म्यं ।
२. रा भ—ह्यकरणे ।
३. रा—न ।
४. रा भ—पूर्ता ।
५. अ म श—नास्ति ।
६. भ—नाम । च—सद्यः ।
७. ल१ अ ब म ल२—प्रियदर्शन । श—प्रियदर्शने ।
८. कै ल१ अ ब म ल२ श—चैक्ष्याम्यङ्गदं
९. कै रा ल१ अ ब म ल२ श—भविष्यामि ।

दिव्यामिमां शुभां मालां लक्ष्म्यां च प्रतिपादिताम् ।
२६] स्वयं च[1] त्वं[3] महाबाहो सुग्रीवाय प्रयच्छ च[4] ॥११२॥ [N
तमब्रवीत ततो रामो दुःखितो[5] वालिनं वचः ।
२७] गच्छ लोकान् महेन्द्रस्य शस्त्रपूतानन्नुत्तमान् ॥११३॥ [N
स वालिनमथोक्त्वैवं[6] रामः सुग्रीवसन्निधौ ।
२८] न्ययोजयत सुग्रीवं मालाग्रहणकर्मणि ॥११४॥ [N
२९पू] इत्येवमुक्तो रामेण वाली[7] हरिगणेश्वरः ।
भेजे प्रहर्षं शोकं च त्व(?त)त्प्रसादविनाशयोः ॥११५॥ [N
३०] वालिनो च[9] प्रतिज्ञातंस्तदाज्ञां[10] बहुमानतः । [N
३१ उ] जग्राह चाभ्यनुज्ञातो मालां दत्तां हरीश्वरः[11] ॥११६॥ [१७ उ
तां मालां काञ्चनीं दत्त्वा[12] वाली प्रेक्ष्याङ्गदं सुतम् ।
३२] संसाध्य प्रेत्यभावाय[13] स्नेहादङ्गदमब्रवीत् ॥११७॥ [१८
देशकालौ भजस्व त्वं क्षममाणः प्रियाप्रिये ।
३३] समदुःखसुखश्चैवं[14] सुग्रीववशगो भव ॥११८॥ [१९
यथा हि त्वं महाबाहो लालितः सततं मया ।
३४] न तथा वर्तमानं त्वां सुग्रीवः साधु मंस्यते[15] ॥११९॥ [२०

---

१. रा अ भ च—लक्ष्मणः ।
२. कै रा म भ च—प्रतिपद्यतां ।
३. रा—वालं । भ च—वा त्वं ।
४. रा—तु । भ च—वा ।
५. रा भ च—दुःखार्तं ।
६. ल₁ अ ब म ल₂ श—०मथो-क्त्वा वै ।
७. श—हरिर् ।
८. कै ल₁ अ ब म ल₂ श—त्वत्प्रसादविनाशने । भ च—† तत्प्रसादविनाशजे ।
९. रा भ च—वालिनं ।
१०. रा भ च—प्रतिजानंश्च तामाज्ञां ।
११. ल₂—महीश्वरः ।
१२. श—† दृष्ट्वा ।
१३. कै ल₁ अ ब म ल₂ श—प्रेतमात्मानं ।
१४. रा भ च—०खसुखः काले ।
१५. कै ल₁ अ ब म ल₂ श च—† गम्यते ।

माऽस्य द्विषद्भिरेको भूरिष्टानन्यांश्च संश्रये(?येः) ।
३५] भर्तुरर्थकरश्चैव चित्तज्ञो भव पुत्रक ॥१२०॥ [२१
न चातिप्रणयः कार्यः कर्तव्यः प्रणयश्च ते ।
३६] एकान्ते हि समो दोषस्तस्मादुभयवान् भव ॥१२१॥ [२२
इत्युक्त्वा परिवृत्ताक्षः शरसंपीडितो भृशम् ।
३७] विवृतैर्दशनैस्तीक्ष्णै र्बभूवोत्क्रान्त-जीवितः ॥१२२॥ [२३
हते प्रवीरे प्लवगाधिपे तदा
महात्मनैस्तत्र न शर्म लेभिरे ।
वनेचराः सिंहयुते महावने
N] हतर्षभा गाव इवाकुलाकुलाः ॥१२३॥ [३०
ततस्तु तारा व्यसनार्णवप्लुता
मृतस्य भर्तुर्वदनं निरीक्षती ।
विवेश भूमौ परिरभ्य वालिनं
३८] महाद्रुमं छिन्नमिवाश्रिता लता ॥१२४॥ [३१

इत्यार्षे रामायणे किष्किन्धाकाण्डे वालिसंक्रमणं नाम
षोडशः सर्गः ॥ १६ ॥

---

१. रा भ—+ संश्रयः ।
२. रा भ च—तु वीरे ।
३. रा—+ महात्मना तत्र ।
४. अ—+ च ।
५. कै रा ल$_1$ अ ब म ल$_2$ श—०र्व्यसनं । च—०वेचनं ।
६. कै रा—भिन्नमिवा० ।
७. अ ल$_2$—नास्ति ।
८. कै रा भ च—नास्ति ।
ल$_1$ ब म श—किष्किन्दा० ।
९. रा श—नास्ति ।
ल$_1$—वालिक्रामणं ।

ततः समुपजिघ्रन्ती कपिराजस्य तन्मुखम् ।
१] पतिलोका[1]च्च्युता तारा पतितं[2] पतिमब्रवीत् ॥१॥ [१
शेषे त्वं विषमे कृच्छ्रे अकृत्वा[3] वचनं[4] मम ।
२] आवृणोषि मर्मे प्राणान्[5]द्वितीयो रणे[6] हतः ॥२॥ [२
मत्तः प्रियतरा नूनं वानरेन्द्र मही तव ।
३] शेषे ह्येनां परिष्वज्य मां च न प्रतिभाषसे ॥३॥ [३
श्रीमन् मे नाथ विक्रान्त वीर साहसिकप्रिय[7] । [४उ
४] ऋक्षवानरमुख्या[8]स्त्वां बहवः पर्युपासते ॥४॥ [५पू
रणामर्षण[9] विक्रान्त शूरव्रतवतां[10] वर ।
५] किमङ्गदपुरोगां मां नाद्य वीराभिनन्दसि ॥५॥ [N
नन्दयन् सुहृदः सर्वान् सामदानपरिग्रहैः ।
६] यः पुरा बुध्यसे[11] राजन् सोऽद्य नैव विबुध्यसे[12] ॥६॥ [N
N] पुत्रोऽयमङ्गदो बालो भृत्यामात्या[13]स्तथैव च ।
तेषां विलपतां कृच्छ्रं बन्धूनां सुहृदामपि ॥७॥ [N
७] ममायं विलपन्त्याश्च शयानः किं न बुध्यसे ।
८पू] पश्येममङ्गदं वीरमधोमुखमवस्थितम् ॥८॥ [N

---

१. रा—पतिशोकच्च्युता ।
ल२—कपिलोका० ।
२. भ—पतिं पतितम० ।
३. कै रा ल१ अ ब भ ल२ श च—सुकृत्वा विषमं ।
४. कै—समं ।
५. श—॰ प्राणान् हि द्वितीयो ।
६. रा भ—हरे ।
७. भ—श्रीमन्तं नाथ विक्रान्तं वीरं साहसिकं प्रियं ।
८. ल१ ब—ऋक्षा वानर० ।
भ—दक्षा वानर० ।
९. कै ल१ अ ब भ ल२ श च—रणम० ।
१०. अ ल२—। ०व्रतवरां ।
११. रा—युध्यसे । अ—बोध्यसे ।
१२. कै ल१ अ ब ल२ श भ च—विबोधसे । रा—विबोध्यसे ।
१३. श—भृत्या माता तथैव ।

इदं तच्छरशयनं शेषे यत्र हतो रणे ।
९] समीपे स्वल्पभाग्यायाः कथितं यत् त्वया मम ॥९॥ [N
उत्तिष्ठ हरिशार्दूल त्यज त्वं शयनं क्षितौ ।
१०] वीर नैवंविधा भूमौ स्वपन्ति कृतलक्षणाः ॥१०॥ [N
अतीव खलु ते कान्ता वसुधा वसुधाऽधिप ।
११] गतासुरपि यां गात्रैर्मां विहाय निषेवसे ॥११॥ [N
विशुद्धसत्त्वाभिजन प्रियकाम मम प्रिय ।
१२] मामनाथां विहायैकां कथं संप्रति गच्छसि ॥१२॥ [७
शूराय न प्रदातव्या कन्या किल विपश्चिता ।
१३] शूरभार्यां हि मां पश्य सद्यो वैधव्यमागताम् ॥१३॥ [८
अवभग्नश्च मे मानो भग्ना मे शाश्वती गतिः ।
१४] अगाधे च निमग्नाऽहं विपुले शोकसागरे ॥१४॥ [९
अश्मसारमहं मन्ये इदं मे हृदयं दृढम् ।
१५] भर्तारं निहतं दृष्ट्वा शतधा यन्न दीर्यते ॥१५॥ [१०
सुहृच्चैव च भर्ता च प्रकृत्या सुहृदि प्रियः ।
१६] आहवे च पराक्रान्तः शूरत्वं च त्वमागतः ॥१६॥ [११

---

१. कै रा भ च—युधि ।
२. श—तुल्यभा० ।
३. रा भ—त्यजस्व ।
४. भ च—+कृतलक्षणाः ।
५. कै ल१ ब म—+खलते ।
६. रा भ च—+यो ।
७. रा—अद्य भग्नश्च ।
८. कै—निमग्ना च ।
रा भ च—निमग्नास्मि ।
९. कै ल१ अ ब म ल२ श भ च—०सारमयं ।
१०. कै ल१ ल२ श—+सुहृदप्रिय ।
म—हृदयप्रियः ।
ब—स्वहृदप्रियः ।
अ भ च—सुहृदः प्रियः ।
११. श—+ अहं चैव

पतिहीना तु या नारी कामं भवतु पुत्रिणी ।
१७] धनधान्यौघपूर्णोऽपि विधवेत्युच्यते नरैः ॥१७॥ [१२
स्वगात्रप्रभवे वीर शेषे रुधिरकर्दमे ।
१८] कृतरागपरिस्तोमे यथा वै शयने तथा ॥१८॥ [१३
शरेणोरसि लग्नेन जीवितप्राणहारिणा ।
१९] परिष्वक्तुं न शक्नोमि भुजाभ्यां त्वां हरीश्वर ॥१९॥ [१४
२०पू] कृतकार्योऽद्य सुग्रीवो वैरेऽस्मिन् प्रतिभाति मे ।
N] यस्य रामविमुक्तेन हतमेकेषुणा भयम् ॥२०॥ [१५
N] एवं च विलपन्त्या वै तारायाश्च समीपतः । [N
उद्ववर्ह ततो नीलः शरं तस्य शरीरतः ॥२१॥
२१] श्वसन्तं गिरिदुर्गस्थं क्रुद्धमाशीविषं यथा । [१७
२२पू] तस्य निष्क्रम्यमाणस्य सायकस्याभवद् वपुः ॥२२॥
N] मरीचेरिव दीप्तस्य व्रजत्यस्तं दिवाकरे । [१८
२२ उ] वर्षामेघनिरूढायाः स्फूर्जन्त्या इव विद्युतः ॥२३॥ N
पेतू रुधिरधाराश्च देहात् तस्य गतायुषः ।
२३] सगैरिकाँ जला(?ल)धाराः प्रावृषीव धराधराः ॥२४॥ [१९

---

१. रा भ—च ।
२. कै—धनधान्याधिपू० ।
रा—अनाथान्यैश्च पू० ।
श भ—धनधान्यैश्च पू० ।
३. कै—परियुक्तं । रा च—†परित्यक्तुं
४. श—‡ शक्नोसि ।
५. रा भ च—त्वां भुजाभ्यां ।
श—त्वं भुजाभ्यां ।
६. रा—† प्रतिपातिने ।
ल१—प्रतिभातु मे ।
७. रा—यत्त्वं ।
८. रा—हत एके० ।
९. रा—मम ।
१०. भ—नास्ति ।
११. भ च—तु ।
१२. कै अ—निष्क्राममा० ।
भ च—निष्कृष्यमाण० ।
म ल, श—निष्कममा० ।
१३. ल१ अ ब म ल२ श—‡ मारीचे० ।
१४. अ—०त्यस्ते ।
१५. भ—नास्ति ।
१६. कै—वर्षन्त्या ।
१७. रा—०कोज्वला धाराः ।

अवकीर्णं प्रमार्जन्ती भर्तारं रणरेणुभिः ।
२४] अस्रै[1] र्नयनजैः शूरं सिञ्चन्ती[2] प्रमुखे पतिम् ॥२५॥ [२०
चेष्टमानं तु तं दृष्ट्वा धरण्यां पतितं पतिम् ।
२५] उवाच तारा पिङ्गाक्षं पुत्रमङ्गदमङ्गना ॥२६॥ [२१
अवस्थां पश्चिमां पुत्र पितुः पश्य सुदारुणाम् ।
२६] संप्रसक्त[3]श्च राजाऽसौ गतोऽस्तं पापकर्मकृत् ॥२७॥ [२२
२७ उ] अभिवादय राजानं पितरं पुत्र मानदम् । [२३उ
एवमुक्तः समुत्थाय जग्राह चरणौ पितुः ॥२८॥
२८] भुजा[4]भ्यां[5] चारुवृत्ताभ्यामङ्गदोऽहमिति ब्रुवन् । [२४
अभिवादयमानं तमङ्गदं न यथा पुरा ॥२९॥ [२५पू
२९] दृष्ट्वा तारा तदोवाच भर्तारमसितेक्षणा । [N
दीर्घायु भव पुत्रेति किमेवं नाभिभाषसे ॥३०॥ [२५ उ
३०] आर्यपुत्र स[6]पुत्रा त्वा[7]मुपासे गतचेतनम् ।
ईश्वरेण हतं यज्ञे गौः सवत्सेव गोपतिम् ॥३१॥ [२६
३१] इष्ट्वा[8] संग्रामयज्ञेन रामबाणमहाम्भसा ।
३२पू] अस्मिन्नवभृथे स्नातः पत्न्या किं त्वं मया विना ॥३२॥ [२७
३३पू] या दत्ता देवराजेन माला देवासुराहवे ।
३२ उ] शातकौं[9]भमयीं मालां न तां पश्यामि मूर्धनि ॥३३॥ [२८

---

१. कै—सिंचती । रा—|श्र (स) वंती ।
२. कै ल$_1$ अ ब म ल$_2$ श—|वेष्ट०
३. रा—संप्रपन्नश्च वैरश्च ।
भ—संप्रसक्तस्य वैरस्य ।
च—संप्रसक्तश्च वैरश्च ।
४. कै ल$_1$ अ ब म ल$_2$ श— जानुभ्यां ।
५. रा—चानुवृ० ।
६. कै रा ल$_1$ अ ब म ल$_2$ श— |सपुत्रस्त्वामुपास्ते ।
७. अ—|गतं ।
८. कै ल$_1$ म—| दृष्ट्वा ।
९. रा भ च—शातकौमीं श्रियां ।

३३ उ] राजश्रीर्न जहाति त्वां गतासुमपि मानद।
गच्छत्यस्तं दिनकरे शैल[1]राजं प्रभा यथा ॥३४॥ [२९
३४] किष्किन्धा[2] च पुरी पूर्वं स्वर्गमार्गः[3] प्रकाशते।
N] व्रजतस्ते परं मार्गं शूरमार्गप्रदर्शिनः[4] ॥३५॥ [N
सन्त्यजेयं खलु प्राणांस्त्वद्दर्शना[5]भिकांक्षिणी।
N] त्वया सह परे लोके यदि मे स्यात् समागमः॥३६॥ [N
न त्वस्ति हेतुः[6] कल्पो वा[7] यन्मृतस्य समागमः।
N] स्वकर्मफलभोक्ता हि देहमुत्सृज्य गच्छति ॥३७॥ [N
न मे वचस्तथ्यमिदं कृतं त्वया
न चा[8]पि शक्ताऽस्मि निवारणे तव।
हता सपुत्राऽस्मि हतेन संयुगे
३९] सह त्वया श्रीश्च पलायते मम ॥३८॥ [३०
परं हि लोकं तव दीर्घबाहो
विहाय यास्याम्यचिरेण[9] दुःखम्।
न युक्तमेवं तव वीर गन्तुं
३५] विहाय पुत्रं सुहृदं प्रियां च ॥३९[10]॥ [N

---

१. कै रा ल$_1$ अ ब म ल$_2$ श च—शैलराजप्रभा।
२. ल$_1$ व म ल$_2$ श—किष्किन्दा च। रा भ च—किष्किन्धेव।
३. कै ल$_1$ अ ब म ल$_2$ श च—स्वर्गमार्गं।
४. भ—०दर्शिकः।
५. रा—०णांस्त्वात्ममानाभि०। भ—०णांस्त्वत्समागमकांक्षिणी। च—०णांस्त्वन्मानाभि०।
६. ल$_1$—हेतुविधि (र्)। भ—‡ हेतुकोल्पो वा। अ ल$_2$—हेतुः कालो वा।
७. अ ल$_2$—† चास्मि।
८. कै अ ल$_2$ भ च—गत।
९. ल$_1$—यास्यामि चिरेण। अ—यास्यामि चिराय। भ च—यास्याम्यचिराय।
१०. रा—नास्ति।

किमप्रियं ते प्रियं[1] येन्न भाषसे
कृतं मया वासवपुत्र यो हि माम् ।
भर्तुर्हितामद्य[2] यमक्षयं[3] प्रियां[4]
३६] कथं[5] परित्यज्य गमिष्यसे विभो ॥४०॥ [N
यदप्रियं किञ्चिदसंप्रधार्य
कृतं मया वै तव दीर्घबाहो ।
क्षमस्व तन्मे हरिसिंहनाथ[6]
३८] व्रजस्व तान् पुण्यकृतांश्च लोकान् ॥४१॥ [N

इत्यार्षे[7] रामायणे किष्किन्धाकाण्डे ताराविलापो नाम
सप्तदशः सर्गः ॥ १७ ॥

---

१. कै रा ल१ अ ब म ल२ श च–प्रियपुत्र ।
२. भ—भर्तुर्हितां सोऽद्य विहाय मां ।
३. अ—कथं । भ—तथा ।
४. अ भ—प्रियां ।
५. भ—कथं ।
६. भ—हरियूथनाथ ।
७. कै भ च—नास्ति ।
ल१ ब म ल२ श–किष्किन्धा० ।

गतासुं वालिनं दृष्ट्वा लक्ष्मणः परवीरहा ।
१२] अब्रवीत् प्रश्रितं वाक्यं सुग्रीवं मन्दचेतसम् ॥१॥ [१२
क्रियतामेव सुग्रीव प्रेतकार्यमनन्तरम् ।
१३] ताराऽङ्गदाभ्यां सहितो वालिनो दहनं कुरु ॥२॥ [१४पू
समादार्यं च काष्ठानि शुष्काणि सुबहूनि च ।
१४] चन्दनानि च दिव्यानि वालिसंकल्पनं प्रति ॥३॥ [१४पू
समाश्वासय तारां त्वमङ्गदं च शुभेक्षणम् ।
१५] मा भू र्बालिशबुद्धिस्त्वं त्वदधीनमिदं पुरम् ॥४॥ [१५
आचक्ष्वेह च सन्माल्यं वस्त्राणि विविधानि च ।
१६] घृतं तैलं च गन्धांश्च यच्चान्यत् समनन्तरम् ॥५॥ [१६
त्वं तार शिबिकां शीघ्रमादायागच्छहि वानर ।
१७] शुभां गुणवतीं युक्तां तस्मिन् काले विशेषतः ॥६॥ [१७
सज्जीभवन्तु प्लवगाः शिबिकावाहनोचिताः ।
१८] समर्था बलिनश्चैव निर्हरिष्यन्ति वालिनम् ॥७॥ [१८
एवमुक्त्वा तु सुग्रीवं सुमित्राऽऽनन्दवर्धनः ।

---

१. अ—गतास्वं ।
२. रा भ—क्रियतामस्य ।
३. रा— सहितं ।
४. रा भ च—समाज्ञापय ।
५. कै रा ल१ ब म ल२ श भ च—च बहूनि ।
६. कै भ च—०संकलनं ।
रा—०लिसंस्करणं ।
७. श—‡ समाश्वसय ।
८. कै ल१ अ ब म ल२ श—०र्बालिकथाबुद्धिस् ।
९. रा † आहुश्च हनुमन्तं तं ।
भ—आचक्ष्वेह च तन्माल्यं ।
१०. म—यथान्यत् ।
११. रा अ ल२ म श ‡ताराशि० ।
कै ल१ ब च—तारां ।
१२. रा अ म ल२ श भ च—०यात्येहि ।
१३. कै ल१ ब म ल२ श—युक्ते ।
१४. ल१ ब—‡ निर्हरिष्यन्तु ।

१९] तस्थौ भ्रातुः समीपे स[1] लक्ष्मणः परवीरहा ॥८॥ [१९

लक्ष्मणस्य वचः श्रुत्वा तारा संभ्रान्तमानसा ।

२०] प्रविवेश गृहं[2] शीघ्रं वालिसत्कार[3]कारणात् ॥९॥ [२१पू

आदाय शिविकां तारः[4] सानुगो[5] दीनमानसः । [२१उ

२१] वानरैरुह्यमानां तां शिविकावाहनोचितैः[6] ॥१०॥ [२२पू

ततो वालिनमुद्यम्य सुग्रीवः शिविकां बली ।

२२] आरोपयदनुक्रोशादङ्गदेन सहैव तम्[8] ॥११॥ [२८

२३ उ] माल्यैश्च समलंकृत्य वाससा[9] प्रवरेण च । [२९पू

आज्ञापयत् तदा राजा सुग्रीवः प्लवगेश्वरः ॥१२॥

२४] और्ध्वदेहिकं[10]मार्यस्य क्रियतामनुरूपतः । [३०

२५ उ] अग्रतः प्लवगा यान्तु शिविका तदनन्तरम् ॥१३॥ [३१उ

राज्ञो[11] मूर्ध्नि विशेषो हि दृश्यते भुवि यादृशः ।

२६] तादृशं वालिनं(?नः)शीघ्रं कुर्वन्तु सचिवाः स्वयम्॥१४॥[३२

अङ्गदं[12] परिगृह्याशु ताराप्रभृतयः स्त्रियः । [३३पू

२७] क्रोशन्त्यस्तत्रानुययुः प्रसंभं[13] व्याहृतं हरिम् ॥१५॥ [३४उ

ताराप्रभृतयः सर्वा वानर्यो हतभर्तृकाः ।

२८] अनुजग्मु हतं नाथं क्रोशन्त्यः करुणं तदा ॥१६॥ [३५

---

१. ब—तु ।
२. रा भ च—गुहां ।
३. ल₁—† वालिसंकर० ।
  श—वालिसंस्कार० ।
४. कै रा ल₁ अ ब म ल₂ श च—तारां ।
५. कै रा ल₁ ब श भ च—सानुगैः सह बान्धवैः ।
  श—सानुगा दीनमानसाः ।
  रा भ च—सानुपर्यपतत्पुनः ।
६. कै श—† शिविकां वाहनोचितैः ।
७. कै ल₁ अ ब म ल₂ श—आज्ञापय० ।
८. म रा—तां ।
९. रा—वाससां ।
१०. च—‡ उर्ध्वदेहिक० ।
११. रा भ च—राज्ञामृद्धि० ।
१२. कै अ म ल₂ श च—|अङ्गदः ।
१३. भ—प्रशंसन्त्यो तदा ।
  रा च—प्रशंस्यो हतं ।

तासां रुदितशब्देन वानरीणां वनान्तरे ।
२९] वनानि गिरयश्चैव रुदन्तीव समन्ततः ॥१७॥ [३६
पुलिने गिरिनद्यास्तु विविक्ते गिरिसंवृते ।
३०] चितां चक्रुः[1] सुबहवो वानरा राजवल्लभाः ॥१८॥ [३७
अवतार्य[2] तु ते स्कन्धाच्छिबिकां वानरर्षभाः ।
३१] तस्थुरेकान्तमाश्रित्य सर्वे ध्यानपरायणाः ॥१९॥ [३८
ततस्तारा पतिं दृष्ट्वा शिबिकातलशायिनम् ।
३२] आरोप्याङ्कं[3] शिरस्तस्य विललाप[4] सुदुःखिता ॥२०॥ [३९
अङ्गदोऽयं श्रियो[5] नाथ ननु ते पुत्रवत्सल ।
३३] नेक्षसि त्वमिमं वत्सं कस्माच्छोकाभिपीडितम्॥[6]२१॥[N
एष त्वां रामरूपेण कालः कर्षति वानर ।[7]
३५] येन स्म विधवाः सर्वाः कृता ह्येकेषुणा रणे ॥२२॥ [४२
इमास्तव स्त्रियो[8] वीर सर्वा सुदयिता भृशम् ।
३६] पादै विक्रम्य[9] नगरादागताः किं न बुध्यसे ॥२३॥ [४३पू
[10]तवेष्टा ननु नामैता भार्याश्चन्द्रनिभाननाः । [४३उ
३७] कथमीर्ष्यां [11]न कुरुषे[12] सुग्रीवस्य समीपतः ॥२४॥
एते हि सचिवा राजंस्तार[13]प्रभृतयस्तव । [४४

---

१. रा—चक्रुस्तु ब० ।
२. कै ल$_1$ अ ब म ल$_2$ श च अवतार्यास्तु ।
३. रा च—आरोप्यांके ।
४. अ ल$_2$—विललापातिदु० ।
५. रा ल$_1$ ब भ च—प्रियो ।
६. कै ल$_1$ ब म ल$_2$ श—नास्ति । रा भ—अतः परमधिकः पाठः—प्रहृष्टमपि ते वक्त्रं गतासोरपि वानर। भ—आस्तेऽर्कसमवर्णाभं लक्ष्यते जीवितो यथा ।
७. रा—नास्ति ।
८. च—प्रिया ।
९. रा भ च—०विक्रुष्य ।
१०. कै ल$_1$ अ म श—। तवैता ।
११. कै रा ल$_1$ अ ब म ल$_2$ श—तु ।
१२. ब—। कुरुते ।
१३. कै ल$_1$ अ ब म ल$_2$ श भ च—०स्ताराप्र० ।

३८] पुरवासी जनश्चायं परिवार्य (?र्यः) स तेऽनत्र ।
विसर्जयैतान् प्लवगान् यथोचितमरिन्दम ॥२५॥ [४५पू
३९] ततः क्रीडाम सहिता वनेऽस्मिन् मदिरोत्कटाः॥२६॥ [४५उ
एवं विलपतीं (?न्तीं) तारां पतिशोकपरिप्लुताम् ।
४०] उत्थापयन्ति स्म तदा वानर्यः शोककर्षिताः ॥२७॥ [४६
सुग्रीवेण तदा सार्धमङ्गदः पितरं रुदन् ।
४१] चितामारोपयामास शोकेनोपहतेन्द्रियः ॥२८॥ [४७
ततोऽग्निं विधिवद्दत्वा सोऽपसव्यं चकार ह ।
४२] पितरं दीर्घमध्वानं प्रस्थितं चाकुलेन्द्रियः ॥२९॥ [४८
वालिनं ते तु संकल्प्य विधिपूर्वं प्लवङ्गमाः ।
४३] प्रजग्मुरुदकं कर्तुं पंपां शीतजलां शुभाम् ॥३०॥ [४९
ततः कृतोदकाः सर्वे पंपायां क्लिन्नवाससः । [N
४४] आययू राघवं द्रष्टुं लक्ष्मणं चामितौजसम् ॥३१॥
तस्थुः प्राञ्जलयः सर्वे सुग्रीवश्च सहाङ्गदः । [N
N] वालिनः पूर्ववृत्तानि कथयन्तोऽद्भुतानि च ॥३२॥ [N

इत्यार्षे रामायणे किष्किन्धाकाण्डे वालिसत्कारणं नाम

अष्टादशः सर्गः ॥१८॥

---

१. ल१ अ ब म श—+विलपती तारा ।
२. ल१ अ ब ल२ श—+ ०पराप्लुता ।
म—+ परिप्लुता ।
३. ल१ ब म ल२ श—ततो ।
४. अ—+ ०मंगदं ।
५. कै ल१ अ ब म ल२ श—
+ ततोपि विधिवद्देवान् ।
६. रा—प्रज्वाल्य । भ च—संकल्य ।
७. कै ल१ अ ब ल२ श—पंपा-
शीतजलं शुभं ।
८. रा भ च—आजग्मू ।
९. कै—वर्ष (? र्ण) यन्तो० ।
१०. कै ल१ ब म ल२ श—किष्किन्धा० ।
भ च—नास्ति ।
११. ल१ अ ब ल२ च—०सत्कारणं ।
श—०सत्कारकारणं ।

[वं०-२५]= **[एकोनविंशः सर्गः]** =[दा०-२६]

१पू] आदशाहात् तु सुग्रीवं प्रेतकार्यकृतं शुचिम् ।
सहाङ्गदेन शोचन्तं भ्रातरं स्वर्गमास्थितम्[1] ॥१॥ [१पू

१उ] शाखामृगा[2] महामात्राः[2] परिवार्य कृतोदकम् । [१उ

N] ततः पुनः प्रतस्थुस्ते[3] रामदर्शनलालसाः ॥२॥ [N
तेऽभिगम्य महात्मानं राममक्लिष्टकारिणम् ।

२] तस्थुः प्राञ्जलयः सर्वे पितामहमिवर्षयः ॥३॥ [२
ततः काञ्चन-शैलाभस्तरुणार्क[4]-निभाननः ।

३] अब्रवीत् प्राञ्जलि वाक्यं हनुमान्[5] पवनात्मजः ॥४॥ [३
तव प्रसादात् सुग्रीवः पितृपैतामहं पदम् ।

४] वानराणां सुदुष्प्रापं[6] राज्यं प्राप्नोति[7] राघव ॥५॥ [४
भवता समनुज्ञातः प्रविश्य नगरीं शुभाम् ।

५] संविधास्यति कार्याणि सर्वाणि ससुहृज्जनः ॥६॥ [५
स्नात्वाऽयं[8] विविधै मन्त्रैरोषधीभिः[9] शुचिस्ततः[10] ।

६] अर्चयिष्यति दिव्यैश्च माल्यैस्त्वां[11] प्रीतमानसः ॥७॥ [६
इमां गिरिगुहां रम्यामभियातुं त्वमर्हसि ।

७] कुरुष्व[12] स्वामिसंबन्धं[12] वानरान् संप्रहर्षय ॥८॥ [७
एवमुक्तो हनुमता रामो दशरथात्मजः ।

८] प्रत्युवाच हनूमन्तं बुद्धिमान् वाक्यकोविदः ॥९॥ [८

---

१. कै—स्वर्गसंस्थितं ।
२. कै अ ल१ ल२ म श च—शाखामृगैर्महामात्रैः ।
३. ल१ ब श—प्रस्थितास्ते ।
४. रा—|| ०मरुणः कानननानन ।
५. म—हनूमान् ।
६. भ च—सुदुष्प्राप्यं ।
७. भ—प्राप हि ।
८. रा भ च—स्नातोयं ।
९. कै रा ल१ अ ब भ च—०मैन्त्रैरौषधैश्च ।
१०. ल२—शुचिस्मितः ।
११. श—माल्यैस्तैः ।
१२. रा—कुरु इष्टाभिसं० ।

चतुर्दश समाः सौम्य ग्रामं वा यदि वा पुरम् ।
९] न प्रवेक्ष्याम्यहं वीर पितुर्निर्देशकारकः ॥१०॥ [९
अयमद्य गुहां दिष्ट्या सुग्रीवो वानरर्षभः ।
१०] प्रविष्टो विधिवत् साधो क्षिप्रं राज्येऽभिषिच्यताम् ॥११॥ [१०
एवमुक्त्वा हनूमन्तं रामः सुग्रीवमब्रवीत् । [११पू
११] इममप्यङ्गदं राजन् यौवराज्येऽभिषेचय ॥१२॥ [१२
पूर्वोऽयं वार्षिको मासः श्रावणः सलिलागमः ।
१२] प्रवृत्ताः सौम्य चत्वारो मासा वार्षिकशारदाः ॥१३॥ [१३
नायमुद्योगसमयः प्रविश त्वं पुरीं शुभाम् ।
१३] इह वत्स्याम्यहं तावत् पर्वते नियतेन्द्रियः ॥१४॥ [१४
१४पू] इयं गिरिगुहा रम्या विशाला युक्तमारुता ।
१५पू] प्रसन्नसलिला पुण्या प्रभूतकमलोत्पला ॥१५॥ [१५
१४उ] इह वत्स्याम्यहं सौम्य वर्षाः सौमित्रिणा सह । [N
१५उ] कार्तिके समतिक्रम्य कुरु यत्नं रिपोर्वधे ॥१६॥
एष नः समयः सौम्य प्रविश त्वं स्वमालयम् । [१६
१६] अभिषिच्य स्वराज्ये च सुहृदः संप्रहर्षय ॥१७॥ [१७
इति रामाभ्यनुज्ञातः सुग्रीवो वानरर्षभः ।
१७] प्रविवेश पुरीं रम्यां किष्किन्धां वालिपालिताम् ॥१८॥ [१८
तं वानरसहस्राणि प्रविष्टं वानरर्षभम् ।

---

१. ल१ अ म ल२—‡ प्रवेशाम्यहं ।
२. कै म—पितुर्निदेश० ।
३. रा भ च—दिव्यां ।
४. ल१ ब—०भिषेक्ष्यतां ।
   म—०‡ भिषिच्यतां ।
५. कै ल१ अ ब म ल२ श—दीर्वोऽयं ।
६. कै—पुरीमिमां शुभां ।
७. भ च—वर्षां ।
८. रा—वः ।
९. म—‡ सुराज्ये ।
१०. कै ल१ ब म ल२ श—किष्किन्दां ।
११. ल१ अ ब म ल२—वानरर्षभाः ।

१८] अभिगम्य[1] प्रहृष्टानि सर्वतः पर्यवारयन्[2] ॥१९॥ [१९
ततः प्रकृतयः सर्वा वर्धयित्वा कपीश्वरम्[3] ।
१९] जयेत्यूचु[4] निपतिता वसुधायां महाबलाः ॥२०॥ [२०
सुग्रीवः प्रकृतिः सर्वा हनुमान् स हरीश्वरः ।
२०] भ्रातुरन्तःपुरं रम्यं प्रविवेश महाबलः ॥२१॥ [२१
प्रविश्य त्वभिनिष्क्रान्तं सुग्रीवं प्लवगेश्वराः[5] ।
२१] अभ्यषिञ्चन्[6] सुबलिनं[7] सहस्राक्षमिवामराः ॥२२॥ [२२
तस्य पाण्डुरमाजह्रुश् छत्रं हेमविभूषितम् ।
२२] शुक्ले च वालव्यजने हेमदण्डे[8] महाधने ॥२३॥ [२३
दिव्यानि मणिरत्नानि[9] सर्वाश्चैवौषधीस्तथा ।
२३] सक्षीराणां च[10] वृक्षाणां प्ररोहाः(?हान्) कुसुमानि च ॥२४॥ [२४
सुगन्धीनि च माल्यानि स्थलजान्यम्बुजानि च । [२५उ
२४] चन्दनानि च मुख्यानि गन्धांश्चैव[11] नैवान् बहून् ॥२५॥ [२६पू
अक्षतान् लाजरूपांश्च[12] प्रियङ्गुमधुसर्षपान्[13] ।
२५] दधि चर्म[14] च वैयाघ्रं वाराहे चाप्युपानहौ[15] ॥२६॥ [२६उ
समाल (? लं) भनमादाय नार्यश्चायतलोचनाः ।

---

१. अ ल२— + अभिषिच्य ।
२. म— + परिवारयन् ।
३. रा— + कपीश्वरः ।
४. कै ल१ अ म ल२ श— जयेत्युच्चैर् ।
५. रा भ च—प्लवगर्षभाः ।
६. कै ल१ अ ब— + अभिषिच्यन् ।
७ रा—सुबालिनः ।
८. कै ल१ अ ब म ल२ श—हेम-दण्डमहाघने ।
९. कै—बहुरत्नानि ।
१०. रा— + सवृक्षाणां ।
११. रा भ च—गन्धांश्चोच्चावचान् ।
१२. रा—ख्यातरूपांश्च ।
भ—जातरूपांश्च ( ? पं च ) ।
१३. कै ल२ म श—प्रियंगुमधुसर्पिषाम् ।
रा अ भ च—प्रियंगुमधुसर्पिषा ।
१४. श— + चन्द्रं ।
१५. कै ल१ अ ब म ल२ श— दूर्वाश्चैव सुशोभनाः ।

२६] आजग्मुस्तत्र सहिता वराः कन्याश्च षोडश ॥२७॥ [२७
ततस्ते वानरश्रेष्ठा यथाकालं यथाविधि ।
२७] रत्नै र्वस्त्रैश्च माल्यैश्च तर्पयित्वा द्विजर्षभान् ॥२८॥ [२८
ततः कुशपरिस्तीर्णं समिद्धं जातवेदसम् ।
२८] मन्त्रपूतेन हविषा हुत्वा मन्त्रविदो द्विजाः ॥२९॥ [२९
ततो हेमपरिष्कारं दिव्यास्तरणसंश्रितम् ।
२९] प्रासादशिखरे रम्ये चित्रमाल्योपशोभिते[3] । [३०
प्राङ्मुखं विविधै र्मन्त्रैः स्थापयित्वा वरासनम् ॥३०॥
३०] नदीनदेभ्यः सर्वेभ्यस्तीर्थेभ्यश्चैव सर्वशः । [३१
३१पू] आहृत्याम्भः समुद्रेभ्यः सर्वे ते वानरर्षभाः ॥३१॥[6] [३२पू
३२पू] शुभै ऋषभशृङ्गैश्च कलशैश्चापि काञ्चनैः । [३३पू
औषधै विविधैश्चैव कुसुमैश्च तथाविधैः ॥३२॥
N] मङ्गल्यैः पूर्णकुम्भैश्च लाजाभिश्च विभूषितैः । [N
कन्याभिश्च प्रशस्ताभिः शातकौम्भैः सुमन्त्रितैः ॥३३॥
N] आभिषेचनिकै र्द्रव्यैः समन्तात् परिवारितैः । [N
N] प्रणदद्भिश्च कपिभिः मन्त्रवद्भिः समन्ततः ॥३४॥ [N
३२ उ] शास्त्रदृष्टेन विधिना महर्षिविहितेन च । [३३उ
गजो गवाक्षो गवयः शरभो गन्धमादनः ॥३५॥
३३] मैन्दश्च द्विविदश्चोभौ[12] सुषेणो जांबवान् नलः ॥३६॥ [३४

---

१. कै ल$_1$ अ ब म ल$_2$ श—जनाः ।
२. म—दिव्यास्तरणसंमितं ।
म—दिव्याभरणसंश्रितं ।
३. कै ल$_1$ ब म ल$_2$ श—०पशोभितं ।
अ—०पशोभितां ।
४. रा ल$_2$ भ च—+ प्राङ्मुखैर् ।
५. कै ल$_1$ ब म ल$_2$ श—+आहृत्यान्तः ।
६. भ—अतः परमधिकः पाठः—
आ(?अ)कनककुंभेषु निधाय विविधाःशुभाः
७. रा अ म भ च—वृषभशृंगैश्च ।
८. कै रा म भ च—शातकुंभैः ।
९. रा भ च—समन्वितैः ।
१०. भ—परिचारितैः ।
११. रा भ च—प्रयतवद्भिः ।
कै श—प्रनदद्भिश्च ।
१२. कै ब अ ल$_2$ भ—द्विविध० ।

अभ्यषिञ्चन्त सुग्रीवं प्रसन्नेन सुगन्धिना ।
३४] सलिलेन सहस्राक्षं वसवो वासवं यथा ॥३७॥ [३५
अभिषिक्ते तु सुग्रीवे सर्वे ते वानरर्षभाः ।
३५] प्रचुक्रुशुर्महात्मानो हृष्टाः शतसहस्रशः ॥३८॥ [३६
एतस्मिन्नन्तरे छत्रं गृहीत्वा पनसो हरिः ।
N] धारयामास संहृष्टः सुग्रीवस्य महात्मनः ॥३९॥ [N
यूथपौ नलतारौ च वालव्यजनधारिणौ ।
N] त्वरितावभिगम्यैव तस्य पार्श्वे स्थितौ हरी ॥४०॥ [N
रामस्य तु वचः कुर्वन् सुग्रीवः प्लवगेश्वरः ।
३६] अङ्गदं संपरिष्वज्य यौवराज्येऽभ्यषेचयत् ॥४१॥ [३७
अङ्गदे चाभिषिक्ते तु सानुक्रोशाः प्लवङ्गमाः ।
३७] साधु साध्विति सुग्रीवं महात्मानोऽभ्यपूजयन् ॥४२॥ [३८
हृष्टपुष्ट—जनाकीर्णा पताका—ध्वजमालिनी ।
३८] बभूव नगरी रम्या किष्किन्धा वालिपालिता ॥४३॥ [४०
निवेद्य रामाय महात्मने तदा
महाऽभिषेकं कपिवाहिनीपतिः ।
उवास भार्यां प्रतिलभ्य तारां
३९] शशास राज्यं त्रिदशाधिपो यथा ॥४४॥ [४१

इत्यार्षे रामायणे किष्किन्धाकाण्डे सुग्रीवाभिषेको नाम
एकोनविंशः सर्गः ॥ १९ ॥

---

१. रा भ—महात्मानोऽभ्यपूजयन् ।
२. ल१ म ल२—मनसो ।
रा—पवनो ।
३. भ—नरतारौ ।
४. कै ल१ अ ब म ल२ श च—पार्श्वस्थितौ ।
५. ब—श्रुत्वा ।
६. कै श—[०]भिषेचयत् ।
७. रा च—त्वभिषिक्ते ।
भ—परिषिक्ते ।
८. ब—च ।
९. म—०जशालिनी ।
१०. ल१ ब म ल२ श—किष्किन्दा ।
११. ल१ ब म ल२ श—किष्किन्दा० ।
भ च—नास्ति ।

अभिषिक्ते तु सुग्रीवे प्रविष्टे वानरे गुहाम् ।
१] आजगाम सह भ्रात्रा रामः प्रस्रवणं गिरिम् ॥१॥ [१
२पू] शार्दूल[1]—मृगसंघुष्टं सिंहव्याघ्र—निषेवितम् ।
N] नानागुल्मलतागूढं[2] बहुपादपसन्ततम् ॥२॥[3] [२
२उ] ऋक्षवानरगोपुच्छै मार्जारैश्च निषेवितम्[4] ।
मेघवृन्दनिभं शैलं रम्यं शुचिजलाशयम् ॥३॥ [३
३] तस्य शैलस्य शिखरे महतो महतीं गुहाम् ।
पर्यगृह्णान्निवासार्थं रामः सौमित्रिणा सह ॥४॥ [४
४] गुहायां(?या) नातिदूरं[5] हि गिरिकूटे बहूदकाः ।
विस्तीर्णाश्चायताश्चैव पद्मिन्योऽथ सुपुष्पिताः ॥५॥ [N
५] कारण्डवगणै[6] घुष्टा श्चक्रवाकैरलङ्कृताः ।
N] प्रसन्नाः स्वादुसलिला मृणालबहु[7]पुष्कराः ॥६॥ [N
अवसत् तत्र धर्मात्मा राघवः सहलक्ष्मणः । [२९पू
६] बहुपुष्पफलै र्युक्ते सुरम्ये धरणीधरे[8] ॥७॥
बहुरम्ये बहुद्रव्ये[9] रतिरल्पोऽपि नाभवत् । [३०पू
७] वसतस्तत्र रामस्य लक्ष्मणस्य च धीमतः ॥८॥ [३०उ
हृतां तु भार्यां कौमारीं प्राणेभ्योऽपि गरीयसीम् । [३०उ

---

१. अ म श – ०संजुष्टं ।
२. रा च—०तागाढं ।
३. अ ब म—नास्ति ।
ल$_1$ ल$_2$ श—२योत्तरार्ध–३यपूर्वार्धयोः परस्परं स्थानव्यत्ययः ।
४. रा भ—विभूषितं ।
५. रा भ च—नातिदूरे ।
६. रा भ—०गणैः क्रुष्टा० ।
७. ल$_1$ अ ब म ल$_2$ श—मृणालाव० ।
भ—मृणालबहुपुष्कला: ।
८. कै अ ल$_2$—धरणीतले ।
९. भ—०व्ये० प्रीतिरल्पापि ।
रा—०यैरनल्पफलिते वने ।

८] ध्यातवानुदयं[1] दृष्ट्वा शशाङ्कस्य विशेषतः ॥९॥ [३१प

नैनमाविशति प्रीति र्वनेष्वपि सुगन्धिषु ।

N] रम्येऽपि[2] चाविशत्येनं[3] वाष्पो नेत्रसमुद्भवः ॥१०॥ [N

नाविवेश[4] च[4] तं[5] निद्रा शयानं शयने शुभे[6] । [३१उ

N] चिन्ता त्वेनं[7] विवेशाथ[8] वाष्पदुःखसमुद्भवा ॥११॥ [N

विललाप महातेजाः काममोहवशं गतः ।

N] रामः कमलपत्राक्षो दुःखशोकाभिपीडितः ॥१२॥ [N

चिन्तावाष्पमुखो ध्यायन् निःश्वसन् पन्नगो यथा ।

N] विक्षिप्तगात्रो विभ्रान्तो हां हेति च रुदन् मुहुः ॥१३[11]॥ [N

आमीलिताक्षः[12] स्तब्धास्यः[12] पुनः सभ्रुकुटीमुखः ।

N] पुनश्च दैन्यमापन्नो बहुरूपस्तथाऽभवत् ॥१४॥ [N

N] तं समीक्ष्य महातेजाः सुमित्राऽऽनन्दवर्धनः । [N

१० उ] तुल्यदुःखोऽब्रवीद् भ्राता लक्ष्मणोऽनुमतं वचः ॥१५॥ [३२उ

नार्हसे त्वं व्यथां[13] कर्तुं[13] न[14] च[14] शोचितुमर्हसि ।

११] शोचतः खलु[15] सीदन्ति[15] सर्वार्थाः सर्वदेहिनः ॥१६॥ [३३

---

१. रा—स्मृत्वा तथोदयं मुख्ये ।
भ—स्मृत्वा तथोदयं दृष्ट्वा ।
श—स्मृत्वा तथोदये दृष्ट्वा ।
२. रा—न्यासेपि ।
अ ल२—रम्ये चापि ।
३. कै ल१ ब म श—०त्येतं ।
ल२—विशत्येतं ।
४. रा भ च—न विवेश च ।
म—नाविवेशाथ ।
५. कै रा अ ल२ भ च—निद्रा तं ।
६. रा च—गते । भ—गतं ।
७. अ ल२—चैनं ।
८. रा च—विवेशैव ।
९. ल१ ब—|० काधिपीडितः ।
श म—नास्ति ।
१०. कै अ ल२ च—
दुःखशोकसमाकुलः ।
रा भ—क्रोधशोकसमाकुलः ।
११. श म—नास्ति ।
१२. कै रा अ ल२—निमीलिताक्षः स्तब्धाक्षः ।
भ—|निमीलिताक्षिः स्त० ।
म—नास्ति ।
१३. कै रा ब म भ—|व्यथाकर्तुं ।
१४. रा—न त्वं ।
१५. रा भ च—ह्यवसीदन्ति ।

भव क्रियापरो नित्यं तथा हर्षपरायणः ।
१२] आस्तिको धर्मशीलश्च[1] व्यवसायी च राघव ॥१७॥ [३४
न चाव्यवसितः[2] शत्रून्[2] रक्षांसि च विशेषतः ।
१३] समर्थस्त्वं[3] रणे जेतुं विक्रमै जिह्मचारिणः ॥१८॥ [३५
समुद्धर्षय तेजस्त्वं व्यवसायं स्थिरं कुरु ।
१४] ततः सपरिवारं तं निःशेषं कुरु राक्षसम् ॥१९॥ [३६
पृथिवीमपि वीर त्वं ससागरवनालयाम् ।
१५] परिवर्तयितुं शक्तः किं पुन र्दुष्टराक्षसम् ॥२० [३७
अहं हि खलु [4]वीर्यं ते[4] संसुप्तं प्रतिबोधये ।
१६] दीप्तमाहुतिभिः[5] काले भस्मच्छन्नमिवानलम् ॥२१॥ [३९
लक्ष्मणस्य हि तद् वाक्यं प्रतिपूज्य हितं शुभम् ।
१७] राघवः सौहृदात् स्निग्धमिदं वचनमब्रवीत् ॥२२॥ [४०
वाच्यं यदनुरक्तेन स्निग्धेन च हितैर्न च[6] ।
१८] सत्त्व[7]विक्रमसंयुक्तं तदुक्तं लक्ष्मण त्वया ॥२३॥ [४१
एष शोकः परित्यक्तः सर्वकार्यावसादकः ।[8]
१९] विक्रमेष्वप्रतिहतं तेजः प्रोत्साहितं च मे ॥२४॥ [४२
तस्य तद् वचनं श्रुत्वा राघवस्य महात्मनः ।
२१] हितोऽनुरक्तो मेधावी लक्ष्मणो वाक्यमब्रवीत् ॥२५॥ [N

---

१. अ ल$_{२}$—धार्मिकश्चापि ।
२. कै—ह्यवसितः शत्रून्वै ।
रा ल$_{२}$ भ च—ह्यव्यवसितः ।
अ ब म शा—|च व्यवसितः ।
३. अ—|समर्थस्तं ।
४. कै ल$_{१}$ अ ब म -|वीर्यं तं ।
ल$_{२}$—वीर्यं ते ।
५. कै अ ल$_{२}$—प्रदीप्तमाहुतिः ।
ल$_{१}$ ब म दीप्यमानाहुतिः ।
शा—|दीपमानाहुतिः ।
६. कै ल$_{१}$ अ ब म ल$_{२}$ शा भ—
हितं तव ।
७. ल$_{२}$—तत्त्व० ।
८. रा भ—न च शोकसमुत्थं मे
दुःखं कार्यावसादकं ।

शरत्कालं प्रतीक्षस्व प्रावृट्कालोऽयमागतः ।
२०] ततः सराष्ट्रं सजनं पश्य रावणमुद्धृतम् ॥२६॥ [३८
नियच्छ कोपं प्रतिपाल्यतां शरत्
क्षमस्व मासांश्चतुरो मया सह ।
वसे त्वमस्मिन् मृगसिंहसेविते
२५] विहाय रोषं भुजगो यथा विषम् ॥२७॥ [४७

इत्यार्षे रामायणे किष्किन्धाकाण्डे प्रस्रवणाभिगमनं नाम
विंशः सर्गः ॥२०॥

---

१. भ—सुराष्ट्रं सुजनं ।
२. भ—वसं (? सन्)
३. कै रा भ च—नास्ति ।
ल, ब भ श—किष्किन्दा० ।
४. रा भ च—०भिगमनो ।
अ—०णागमनं ।

[वं०–२७]= [ एकविंशः सर्गः ] =[दा०–२८]

स तदा वालिनं हत्वा सुग्रीवमभिषिच्य च ।
१] वसन् माल्यवतः पृष्ठे रामो वचनमब्रवीत ॥१॥ [१
[1]अयं लक्ष्मण सम्प्राप्तः समयोऽद्य जलागमे ।
२] संपश्य हि नभो मेघैरावृतं [2]भूरिवर्षिभिः ॥२॥ [२
[3]सर्वमासगतं गर्भं भास्करस्य गभस्तिभिः ।
३] रसं सर्वमुपादाय द्यौः प्रसूते रसायनम् ॥३॥ [३
जातु यात्रा नरेन्द्राणां लोकेऽस्मिन् न प्रवर्तते ।
८] [4]मार्गाश्च सह वैरेण सलिलेन [5]समीकृताः ॥४॥ [N
घनैः समुदितै रुद्धो दीनो वै न प्रकाशते ।
९] सूर्यः [6]प्रनष्टो धर्मज्ञ[7] शोकेनाहमिवावृतः ॥५॥ [N
एषा [8]तापपरिक्लिष्टा नववारि-परिप्लुता ।
४] सीतासन्तापतप्तेव [9]मही वाष्पं विमुञ्चति ॥६॥ [७
एष फुल्लार्जुनः शैलः केतकैर[10]धिवासितः ।
५] सुग्रीव इव संचारि [11]धाराभिरभिषिच्यते ॥७॥ [९
नीलमेघाश्रिता विद्युद् भ्रमन्ती प्रतिभाति मे ।

---

१. ल$_{1}$—अहो ।
२. रा च—भूमि० ।
३. रा भ च—†०सगतो गर्भो ।
४. कै ल$_{1}$ अ ब म ल$_{2}$ श भ च–मार्गाश्च ।
५. कै ल$_{1}$ अ ब म ल$_{2}$ श—सलिलैर्विषभीकृतः ।
रा—†सलिलेन समीकृतः ।
६. ल$_{1}$ अ ब म श च—प्रणष्टो ।
७. रा ल$_{1}$ भ च—†धर्मज्ञः ।
८. कै ल ब म ल$_{2}$ श—†सीता० ।
९. कै ल$_{1}$ ब म ल$_{2}$ श—†महा० ।
१०. रा—कानेन चाधि० ।
भ—कानेन च विवा० ।
११. रा भ—शान्ताभिर० ।

६] स्फुरन्ती रावणस्याङ्के सीतेव विवशा पुरा ॥८॥ [१२
इमास्ता मन्मथवतां हिताः प्राणवतां निशाः ।
७] अनुलिप्ता इव घनै नष्टग्रहनिशाकराः ॥९॥ [१३
प्रोष्ठपादो विनेयानां मासो ब्रह्मविवक्षताम् ।
१०] अयमध्यायसमयः सामगानामुपस्थितः ॥१०॥ [N
नूनमापूर्यमाणायाः सरय्वाः श्रूयते स्वनः ।
१२] मामप्रेक्ष्य वनायातमयोध्यायामिव स्वनः ॥११॥ [N
१३पू] इमां शीतगुणां वर्षा सुग्रीवश्च सुखी स्थितः ।[१३] [N
N] मन्दमारुतनिश्वासं सन्ध्यावन्दनचर्चितम् ॥१२॥
आपाण्डुजलदं भाति कामातुरमिवाम्बरम् । [६
N] सन्ध्यारागान्वितैस्ताम्रै रक्तैश्चाधिकपाण्डुरैः ॥१३॥

---

१. कै ल१ अ ब म ल२ श च—
† प्राणिहिता ।
२. कै अ म—† ०निशचराः ।
ल२—† निशावराः ।
३. रा—प्रोष्टपादा विनेयानां ।
कै ल१ अ ब म ल२ श—
प्रोष्टपादश्च गोपानां ।
च—प्रौढपादश्च गो० ।
४. ब—मासे । च—मासं ।
५. कै ल१ अ ल२ श—ब्रह्म इव श्रितां ।
ब म—ब्राह्म इवाश्रितां ।
च—ब्रह्म इव श्रितं ।
६. —अतः परमधिकः पाठः—
रा—
निवृत्तकार्यायतनो नूनं संचयसंचितः ।
भ—निवृत्तकार्यो यतयो „ „
च—
निवृत्तकर्म्मा यतयो नूनं संचितसंश्रयाः ।
रा भ—
आषाढाम्यत्युपगतो भरतः कोशलाधिपः ।
च—आषाढीमभ्युपगतो भरतः „
७. रा भ—ध्वनिः ।
८. कै ल१ ब म ल२ श—मामवेक्ष्य ।
रा भ—मां प्रेक्ष्य हि ।
९. रा भ—वने याति अयो० ।
१०. रा—द्रुतं । भ—ध्रुवं ।
११. च—सुग्रीवः स ।
१२. अ म ल२—व्यवस्थितः ।
१३. रा भ—
इमामयं गुणोपेतां सुग्रीवः समुपासते ।
इत ऊर्ध्वं ३७ तमश्लोकान्तं खण्डितम् ।
१४. कै रा ल१ ब म ल२ श भ—
०तनिश्वासां ।
१५. कै रा ल१ ब म ल२ श भ—
०नचर्चिताम् ।
१६. अ—† रक्तैश्चा० ।

स्निग्धैर् आयतच्छेदैर् बन्धुप्राणमिवाम्बरम् । [९

N] कशाभिरिव हैमीभिर् विद्युद्भिरिव ताडितम् ॥१४॥

अन्तःस्तनितनिर्घोषं सवेदनमिवाम्बरम् । [११

N] मेघकृष्णाजिनधरा धारायज्ञोपवीतिनः ॥१५॥

मारुतापूरितगुहाः प्राधीता इव पर्वताः । [१०

N] सह्यमन्दरमारुह्य मेघसोपानपङ्क्तिभिः ॥१६॥

कुटजार्जुनमालाभिरलङ्कर्तुं दिवाकरम् । ४

N] मेघाम्बरविनिर्मुक्ताः कह्लारसुखशीतलाः ॥१७॥

शक्यमञ्जलिभिः पातुं वाताः केतकिगन्धिभिः(?नः) । [८

N] केदारस्य च केदारः सोदकस्य निरूदकः ॥१८॥ [N

उपस्नेहेन जीवामि जीवन्ती(?नी-) यफलादिभिः । [N

N] कच्चिद्द्रक्ष्यामि सन्दृश्य वर्षागमसमुत्सुकान् ॥१९॥

कुटजानपि सौमित्रे पुष्पितान् गिरिसानुषु । [१४पू

N] मम शोकाभितप्तस्य कामसञ्जीवनं स्थितम् ॥२०॥ [१४ उ

रजः प्रशान्तं सं च मेघवायुर्

निदाघदोषप्रसरः प्रशान्तः ।

स्थिरा हि यात्रा वसुधाऽधिपानां

N] प्रवासिनो यान्ति नराः स्वदेशान् ॥२१॥ [१५

---

१. कै—† ०रभ्यायत० ।
च—† ०रअवदच्छेदैर्बंधुप्रणमिवा-
ध्वरे । वस्तुतस्तु—०'च्छेदैर्बद्धव्रण-
मिवाम्बरम्' इति दा० युज्यते ।
२. ल१ ब म—कषाभिरिव ।
३. कै—† ताराय० ।
४. कैल१ अ ब म ल२ श—प्रशान्ता ।
५. घ—† स्व० ।
६. कै रा ल१ ब म श—त्रुटितः पाठः ।
७. कै—कुटजानस्य ।
८. ब ल१—कामं सं० ।
९. अ ल२—स ह ।
१०. कै रा ल१ अ ब म ल२ श भ—
प्रवासिता ।
११. कै रा ल१ अ ब म ल२ श—
स्वदेशम् ।

सम्प्रस्थिता मानव(?स)वासलुब्धाः
प्रियान्विताः सम्प्रति चक्रवाकाः ।
भेका[1] नु वर्षोदकमो(?प्रो)क्षितेषु[2]
N] जानामि मार्गेषु च संपतन्ति ॥२२॥ [१६

मत्ता गजेन्द्रा मुदिता गवेन्द्रा
वनेषु विश्रान्ततरा मृगेन्द्राः ।
रम्या नगेन्द्रा[3] निभृता[4] नरेन्द्राः
N] प्रक्रीडिता वारिधरैः सुरेन्द्राः ॥२३॥ [४३

घना वनान्ताः शिखिनः प्रमत्ता[5]
जाताः कदम्बाः सकदम्बशाखाः ।
जाता[6] वृषाङ्केषु समाननम्रा
N] जाता मही सस्यवनाभिरामा ॥२४॥ [२६

क्वचित् प्रकाशं क्वचिदप्रकाशं
नभः प्रकीर्णाम्बुधरं विभाति[7] ।
क्वचित् क्वचित् पर्वतसंनिरुद्धं[8]
N] रूपं यथा शान्तमहाऽर्णवस्य ॥२५॥ [१७

नीलेषु नीला नववारिपूर्णा
मेघेषु मेघाः प्रतिभान्ति सक्ताः ।
दावाग्निदग्धेषु दवाग्निदग्धाः
N] शैलेषु शैला इव बद्धमूलाः ॥२६॥ [४०

---

१. कै म—‡ भीका न ।
अ ब क$_2$—† भेका न ।
च—अभीक्ष्ण० ।
२. च—वर्षोदकवीक्षितेषु ।
३. कै ल$_1$ अ ब म श च—नरेन्द्रम
४. कै श ल$_1$ अ ब म ल$_2$ श भ–
निसृता ।
५. च—प्रनर्त्ताः ।
६. अत्र–"जाता वृषा गोषु समानकामाः" इति दा पाठो युज्यते ।
७. कै च—प्रभाति ।
८. ल ब—०सन्निरुद्ध० ।

निद्रा शनैः केशवमभ्युपैति
द्रुतं नदी[1] सागरमभ्युपैति ।
हृष्टा बलाका घनमभ्युपैति[2]
N] मेघा निकामं[3] परिसंपतन्ति ॥२७॥ [२५

समेधिता भाति बलाकपङ्क्तिर्
वातावधूता प(?व-)रपुण्डरीकाः । [२३
लम्बालकाभो[4] जलदाश्चरन्ति [N
N] वहन्ति वर्षन्ति नदन्ति भान्ति ॥२८॥

ध्यायन्ति नृत्यन्ति समाश्वसन्ति
सुघोषणाः सान्तरजा[5] वनान्तात् ।
प्रियाविहीनाः शिखिनः प्लवन्ते[6] [२७
N] व्यामिश्रिताः[7] सर्जकदम्बपुष्पैः ॥२९॥

नवं जलं पर्वतधातुताम्रं
मयूरकेकाभिरतीर्वघुष्टाः[8] ।
शैलापगाः[9] शीघ्रतरं वहन्ति [१८
N] रसातलं चाम्बरसंनिकाशम्[10] ॥३०॥

प्रभुज्यते जम्बुफलं प्रकाम-
मनेकवर्णं पवनावधूतम् ।

---

१. च—। नदा ।
२. ल२—नास्ति ।
३. च—निकामा ।
४. च—लम्बा बलाका रवितास्वरस्य
५. अत्र 'मत्तगजा वनान्ता.' इति द्वा पाठो युज्यते ।
६. अ—प्लवन्ति । च—।प्लवत्वात् ।
७. च—व्यामिश्रितं ।
८. अ—० व घुष्टम् ।
म—घुष्टाः ।
च—‡ ०भिरदानुपातं ।
कै—०भिर...पातं ।
९. कै ल१ अ ब म ल२ श—। शैला वना ।
१०. म—‡ शांवरस० ।
च—।षट्पदसन्निकाशं ।

भूमौ पतत्याशु फलं विपक्वम् [१९

N] अङ्गारपूर्णोत्करसन्निकाशम् ॥३१॥

फलैः सुपर्याप्तरसैः समृद्धैर्

जम्बुद्रुमाणां प्रतिभान्ति शाखाः ।

नीलायमाना इव षट्पदौघैर् [३०

N] धारानिपातैरभिंदिह्यमानाः ॥३२॥

कदम्बशाखासु विलम्बमानाः

क्षणार्जितं पुष्परसावगाढं । [२९

लीलाविलासोपरमे युवानः [N

N] शनैर्मदं षट्चरणास्त्यजन्ति ॥३३॥ [२९

तडित्पताकाभिरलङ्कृताना-

मुदीर्णगम्भीरमहाऽर्णवानाम् ।

विभान्ति रूपाणि बलाहकानां

N] रणोद्यतानामिव वारणानाम् ॥३४॥ [३९

विद्युत्पताकाः सबलाकमालाः

शैलेन्द्रकूपे गिरिसन्निकाशाः ।

गर्जन्ति मेघाः समुदीर्णनादा

N] मत्ता गजेन्द्रा इव संयुगस्थाः ॥३५॥ [२०

सप्तच्छदानां कुसुमोपगन्धैः

षट्पादवृन्दैरनुगीयमानः ।

---

१. च—† ० रसन्निकाशैः ।

२. च—धाराभिपा० ।
अ म ल$_2$ च—† ०रभिदह्य० ।

३. ल$_2$—नास्ति ।

४. च—‡ विलक्ष्य० ।
ल$_2$—नास्ति ।

५. अ म ल$_2$—पुष्पफलाव० ।

६. च—नास्ति ।

७. कै ल$_1$ अ ब म ल$_2$ श—
† विद्युद्बलाकाः ।

८. च—† ०पगंधी

मत्तद्विपानां पवनानुसाराद्
N] रोषं वनेष्वभ्यधिकं करोति ॥३६॥ [N
मार्गानुगः शैलवनानुसारी
संप्रस्थितो मेघरवं निशम्य ।
मुक्तासकाशं सलिलं पतन्तं
N] सुनिर्मलं निर्झरसन्धिलग्नम् ॥३७॥ [N
हृष्टा विवर्णच्छदना विहङ्गाः
सुरेन्द्रदत्तां(?त्तं) तृषिताः पिबन्ति ।
युद्धातिकामः प्रतिनागशङ्का(?ङ्को)
N] मत्तो गजेन्द्रः प्रतिसन्निवृत्तः ॥३८॥ [N
१३ उ] जितारिरेषं सुग्रीवो राज्ये वै महति स्थितः । [५७पू
अहं हि हृतदारश्च राज्याच्च महतश्च्युतः ।
१४] नदीकूलमिव क्लिन्नमवसीदामि लक्ष्मण ॥३९॥ [५८
सागरश्च हि विस्तीर्णो मार्गश्च भृशदुर्गमः ।
१५] रावणश्च महाशत्रुरसाध्यं प्रतिभाति मे ॥४०॥ [५९
अयात्रां चैव दृष्ट्वेमां सागरं च सुदुर्गमम् ।

---

१. च—०नुसारी ।
२. च—०ष्वत्यधिकं ।
३. म—०नुसारं ।
च—०नुचारी ।
४. कै ल₁ ब म श—भग्नः पाठः ।
च—एव पुटेषु ल० ।
५. अ ल₂—०द्रदत्तास् ।
६. अ—भवन्ति ।
७. कै ल₁ ब म श—त्रुटितः पाठः ।
रा अ ल₂ भ—उपैति ।
८. भ च—जितारिः ससहायश्च स्वराज्ये ।
रा—जिताशः „ „
९. अ ल₂—सु० ।
१०. भ—मार्गाश्च भृषदुर्गमाः ।
११. रा भ च—०त्रुरहार्यं ।
१२. कै ल₁ अ ब म ल₂ श—अपात्रं ।
१३. कै ल₁ अ ब म ल₂ श च—दृष्ट्वा मां ।
१४. कै ल₁ अ ब म ल₂ श च—चैव दुर्गम० ।

१६] प्रमत्तं चापि सुग्रीवं मया किं साध्यमेव हि ॥४१॥ [६०
अपि चैवारिणाऽक्लिष्टं चिराद् दारैः समागतम् ।
१७] आत्मकार्यगरीयस्त्वाद् वक्तुं नेच्छामि वानरम्॥४२॥ [६१
N] सुदुःखाद् दुःखितो नूनं सुग्रीवः सुखितोऽपि सन् ।
N] अकाले तादृशं मित्रं नाहं दुःखे नियोजये ॥४३॥ [N
स्वयमेव विनिश्चित्य ज्ञात्वा कालमुपस्थितम् ।
१८] उपकारं च सुग्रीवो ज्ञास्यते नात्र संशयः ॥४४॥ [६२
N] यथा वालिवधे साह्यं सुग्रीवस्य मया कृतम् ।
N] तथा सीताऽधिगमने मत्साहाय्यमुपे(?पै)ष्यति॥४५॥ [N
उपकारेण वीरो[11] हि प्रतीकारेण युज्यते ।
२०] कृतं ह्यपकृतं हन्ति लोकेष्वेवासतां मनः ॥[15]४६॥ [६४
तस्मात् कालं हि विश्रम्य स्थितोऽहमिदमुत्तमम् ।
१९] सुग्रीवस्य नदीनां च प्रसादं प्रतिपालयन् ॥४७[16]॥ [६४
स एवमुक्तः प्रणिधाय लक्ष्मणः
कृताञ्जलिस्तत् प्रतिपूज्य भाषितम् ।

---

१. रा भ—प्रमत्ते वापि ।
च—प्रमत्ते चापि ।
२. रा भ च—सुग्रीवे ।
३. रा भ—† अथासौ परिसं० ।
च—† अपि चासौ परि० ।
४. कै रा अ ल२ भ च—०क्लिष्टश्चि-
राद्दारैः समागतः ।
५. अ—स्वदु० । च—महुःखाद् ।
६. रा—हि सन् । भ—हि यत् ।
७. कै ल१ अ ब म ल२श—नालं ।
८. कै ल१ब म श—नियोजयेत् ।
९. अ—कालं समुत्थितं ।
१०. अ—कृतं मया ।
११. रा—वैरे ।
१२. कै रा च—अकृतं ।
१३. रा च—ह्यप्युपकृतं ।
१४. रा—सत्त्ववतां । च—लोके सतां ।
१५. भ—नास्ति ।
१६. रा—नास्ति ।
१७. कै ल१अ व म ल२श भ च—
प्रतिधार्य ।

उवाच रामं प्रतिपूज्यदर्शनं

२१] प्रदर्शयन् दर्शनमात्मनः शुभम् ॥४८॥ [६५

यथोक्तमेवं तव सर्वमीप्सितं

नरेन्द्र कर्ता नचिरेण वानरः ।

शरत्प्रतीक्षः क्षमतामिदं भवान्

२२] जलप्रसादे रिपुनिग्रहे धृतः ॥४९॥ [६६

ततोऽस्य तस्मिन् वसतो महावने

महात्मनश्चिन्तयतोऽर्थे तां प्रियाम् ।

विसृज्य तोयं जलदा महाजवाः

२३] पुनर्निवृत्ताः शरदं निवेद्य च ॥५०॥ [N

इत्यार्षे रामायणे किष्किन्धाकाण्डे प्रावृड्वर्णनं नाम

एकविंशः सर्गः ॥ २१ ॥

---

१. रा—० नमात्मना ।

२. रा भ च—† जलप्रसादं ।

३. रा भ च—हत्वा ।

४. ल२—नास्ति ।

५. रा भ—उद्योगे ।

* ल१ ब म श्र—किष्किन्धा० ।

## [वं०-२८] = [ द्वाविंशः सर्गः ] = [ दा०-२९]

समीक्ष्य(१क्ष-) माणंः सुग्रीवं त्यक्तधर्मार्थसंग्रहम् ।
१] अत्यर्थाविहिता ऽऽत्मानमेकान्तगत-मानसम् ॥१॥ [२
निवृत्तार्थमभिप्रायैरिष्टैर् भ्रात्रा ऽविवासितम् ।
२] प्राप्तवन्तमभिप्रायं सर्वमेव मनोगतम् ॥२॥ [३
स्वां च पत्नीमभिप्रेतां तारां च मनसेप्सिताम् । [४पू
३] सुखेन राजपत्न्या च बुद्ध्वा रतिपरायणम् ॥३॥ [N
५उ] राज्यार्थे सुखसन्दोहे वर्तमानमुपस्थितम् । [N
N] स्वयमेव विनिश्चित्य ज्ञात्वा कालमुपस्थितम् ॥४॥
विनिश्चितार्थः कालज्ञः कार्यकालविशेषवित् । [६
६] प्रसाद्य वाक्यैर्विविधैः शाखामृगपतेर्मनः ॥५॥
वाक्यविद् वाक्यतत्त्वज्ञः सुग्रीवं मारुतात्मजः । [७
७] हितं तथ्यं च पथ्यं च धर्मकामार्थहेतुमत् ॥६॥ [८पू
प्रणयात् प्रीतिसंयुक्तं विश्वासकृतनिश्चयः ।
८] हरीश्वरमुपागम्य हनूमान् वाक्यमब्रवीत् ॥७॥ [८उ
राज्यं प्राप्तं यशः स्फीतं बलात्तारा ऽऽत्मसात् कृता । [९पू

---

१. कै—‡ समीक्ष्यमानः ।
रा ल ब म श च—† ०क्ष्य रामः ।
२. ल१ अ ब म ल२—०तगतचेतसं ।
भ—० नमेकान्ते गतचे० ।
३. रा—प्राप्तमेवम० ।
४. कै ल१ म श—च मनसीप्सितां ।
ब†—वचनमी० ।
५. कै ल१ अ ब श—सुखेन राजपु०
रा ल२ भ च—सुषेण राजपु० ।
६. रा भ—अतः परमधिकः पाठः—
विहरंतमहोरात्रं कृतार्थं विगतज्वरम् ।
मरुद्गणैः शक्रमिव न तदेवाप्सरोगणं ॥
मंत्रिसंन्यस्तकार्यार्थं मंत्राणामनवेक्षणं ।
७. रा भ— राज्यस्थं कृतसंदेहं ।
अ—०र्थे सुखसंदोहं ।
८. ब— नास्ति ।
९. रा भ—०निश्चितार्थकालज्ञः ।
१०. कै—‡ हनूमद् ।
११. रा भ च—बलाच्छ्रीरा० ।
भ—कोषे—बलात्तारा० इत्यपर-
हस्तेन पश्चात् ।

९] स्वजनः पूजितः सम्यक् प्रकृतीश्चानुरञ्जिताः ॥८॥ [N
शत्रवस्ते प्रतापेन नाममात्रावशेषिताः । [N
१०] मित्राणां चैव समयस् तद् बुद्ध्या[1] ननु मन्यताम् ॥९॥ [९उ
यो हि मित्रेषु मित्रज्ञः सततं चानुवर्तते ।
११] तस्य राज्यं च कीर्तिश्च प्रभावश्चाभिवर्धते[2] ॥१०॥ [१०
यस्य दण्डश्च कोशश्च मित्राण्यात्मा पुरं जनः[3] ।
१२] पूर्णान्येतानि सर्वाणि स राज्यफलमश्नुते ॥११॥ [११
तद् भवान् मित्रसंपन्नः स्थितः पथि निरत्यये ।
१३] मित्राणामुपनीतम्[4] त्वं यथावत् कर्तुमर्हसि ॥१२॥ [१२
यो हि कालाद्यतीतेषु[5] मित्रकार्येषु[6] वर्तते ।
१४] स कृत्वा महतोऽप्यर्थान् न मित्रार्थेषु युज्यते ॥१३॥ [१४
मनसाऽपि हि कार्यार्थं यः[7] काले प्रतिपद्यते ।
१५] स राजा बुद्धिसंपन्नः परेषां मूर्ध्नि वर्तते ॥१४॥ [N
तदिदं मित्रकार्यं त्वं कर्तुमर्हस्यरिन्दम । [१५पू
१६] रामस्यार्हसि पिङ्गाक्ष कर्तुं सर्वात्मना प्रियम् ॥१५॥ [२६उ
न च कालमतीतत्वान्नोदयाम्यद्य धर्मतः ।
१७] त्वरमाणो[8] ह्यनुमांस्[9] तव राज्यवशानुगः ॥१६॥ [१७

---

१. रा भ—तद्भवाननु० ।
च—तद्बुध्या ननु० ।
२. रा भ—०वश्चातिव० ।
$ल_2$ श—०वश्चाभिवर्तते ।
म—०वश्चापि वर्तते ।
३. कै $ल_1$ ब म श च—पुरे जनः ।
रा भ—स भूमिपः ।
४. रा—† ०पनीयस्तु ।
अ भ च—† ०पनीयस्त्वं ।
५. रा—कालाभ्यतीतेषु ।
कै $ल_1$ अ ब म $ल_2$ श—
कालोपनीतेषु ।
६. रा च—०कार्ये तु ।
७. कै—यत् ।
८. कै $ल_1$ अ ब म $ल_2$ श भ च—
त्वरमाणमनुभा० ।
९. $ल_2$—नास्ति ।

अस्य स्फीतस्य हेतोश्च[1][2] दीर्घकालस्य वानर ।
१८] अप्रमेयप्रधानस्य स्वयं च प्रतिमार्गतः ॥१७॥[3] [१८
१९पू] तस्य चाविर्तथं[4] कार्यं पूर्वं कृतवतः प्रियम् । [१९पू
N] राघवस्य प्रतिश्रुत्य वैदेह्याः प्रतिमार्गणम्[5] ॥१८॥ [१९उ
२६उ] नाधस्तान् न वने नाप्सु गतिर् नोपरि नाधरे[6] ।
कस्यचित् सज्जतो[7]ऽस्माकं सज्जते[8] कस्तवाज्ञया ॥१९॥ [२७
२७] तदाज्ञापय नः क्षिप्रं कुतो वा[9] सोऽपि तिष्ठति[10] ।
हरयो ह्यप्रधृष्या[11]स्ते सन्ति कोटयुग्रशूरपाः[12] ॥२०॥ [२८
२८] तस्य तद् वचनं श्रुत्वा काले साधुनिषेवितम् ।
सुग्रीवः सत्त्वसंपन्नं[13] चकार मतिमुत्तमाम् ॥२१॥ [२९
२९] स सन्दिदेशाथ हरिं नीलं नित्यकृतोद्यमम् ।
दिक्षु सर्वासु सैन्यानां सर्वेषामुपसङ्ग्रहे ॥२२॥ [३०
३०] यथा सेना समग्रा मे पौर्णमास्यां च सर्वशः[14] ।
समागच्छत्यसङ्गेन[15] तथा[16] नीतिर् विधीयताम् ॥२३॥ [३१

---

१. ल₁ ब म श—तस्य ।
२. रा अ भ च—हेतोर्हि ।
३. ल₂—नास्ति ।
४. कै ल₁ अ ब म ल₂ श च—०तथः कार्यः ।
५. रा भ—परिमार्गणं अ च—प्रियमार्ग० ।
६. कै रा ल₁ अ ब म ल₂ श भ च—नाम्बरे ।
७. रा अ भ च—सजते ।
८. रा भ च—तु तवा० ।
९. रा अ भ च—† वापि स ।
१०. कै अ ब—तिष्ठते ।
११. भ—प्यप्रधृ० ।
१२. रा अ भ च—कोटयुग्रशो नृप ।
१३. कै रा ल म भ च—सत्वसंपूर्ण० । ल—सत्यसंपूर्ण० ।
१४. कै—सर्वदा ।
१५. भ—समागच्छेदसंगेन ।
१६. रा भ—सेनाग्राणि तथा कुरु ।

३१] ये त्वन्तपालाः[1] प्रणताः शीघ्रगा व्यवसायिनः ।[2]

३२पू] स्वयं चानुत्तमं सैन्यं[3] भवानेवानुपश्यतु ॥२४॥ [३२

यः सप्तरात्रमध्ये[4] मे नाप्नुयादिह वानरः ।

३२ उ] तस्य[5] प्राणान्तिको दण्डो निपात्योऽत्र[6] मतिर्मम[7] ॥२५॥ [३३

हरींश्च सर्वाननुयोज्य सङ्गताँन्

भवान् ममाज्ञां कुरुताच्च सर्वशः ।

इति व्यवस्थां हरिवाहिनीश्वरो[9]

N] विधाय संस्थां प्रविवेश वीर्यवान् ॥२६॥ [३४

इत्यार्षे[10] रामायणे किष्किन्धा[11]काण्डे सेनाचोदनं[12] नाम

द्वाविंशः सर्गः ॥ २२ ॥

---

१. भ—प्लवगाः ।

२. अतः परं "समानयन्तु ते सैन्यं त्वरिताः शासनान्मम" इति दा० पाठो युज्यते ।

३. कै $ल_1$ ब म श—|सैन्ये ।

४. रा—पूर्णरात्राद्वूर्ध्वं ।
अ भ च—सप्तरात्रादूर्ध्वं ।

५. कै—तत्र ।

६. रा भ च—०त्र ज्ञानिंदितः ।

७. कै—| संगं । $ल_1$—मेंगं ।
म $ल_2$ श—मेंग ।

८. कै—| कुरु तात स० ।
रा अ भ च—| कुरुतां च सर्वदा

९. रा भ—बलिनां हरीश्वरो ।

१०. $ल_1$—इति श्रीवाल्मीकीये ।

११. रा भ—|उद्योगे ।
कै ल ब म $ल_2$ श— किष्किंदा०

१२. रा अ भ च—सेनाचोदनो ।

गुहां प्रविष्टे सुग्रीवे विनिवृत्ते जलागमे ।
१] वर्षारात्रोषितो रामः कामशोकाभिपीडितः ॥१॥ [१
कामवृत्तं च सुग्रीवं नष्टां च जनकात्मजाम् ।
२] बुद्ध्वा कालमतीतं च मुमोह परमातुरः ॥२॥ [३
ततः संज्ञामुपागम्य मुहूर्तान्मतिमास्थितः ।
३] मनोनिविष्टां वैदेहीं चिन्तयामास राघवः ॥३॥ [४
समीक्ष्य निर्मलं व्योम गतविद्युद्बलाहकम् ।
N] सरः सारससंघुष्टं विललापार्तया गिरा ॥४॥ [६
पाण्डुरं विमलं दृष्ट्वा गगने चन्द्रमण्डलम् ।
४] निर्मेघां रजनीं दृष्ट्वा शरज्ज्योत्स्नानुलेपनाम् ॥[५]५॥ [N
आसीनः पर्वतस्याग्रे हेमधातु-विभूषिते ।
५] शारदीं रजनीं दृष्ट्वा जगाम मनसा प्रियाम् ॥६॥ [N
ततः पद्मपलाशाक्षीं वैदेहीमनुचिन्तयन् ।
६] अब्रवील्लक्ष्मणं दृष्ट्वा मुखेन परिशुष्यता ॥७॥ [२१
तर्पयित्वा सहस्राक्षः सलिलेन वसुन्धराम् ।
७] निर्वर्तयित्वा शस्यानि कृतकर्मा पुरन्दरः ॥८॥ [२२
जलगर्भा महावेगाः कुटजार्जुनगन्धिनः ।
N] निवृत्ताः शिशिराः सौम्य वृष्टिपाताः समन्ततः ॥९॥ [२५

---

१. रा—०मलिनांबरः ।
अ भ च—०मतिमाम्बरः ।
२. रा अ भ च—शरदा ।
३. कै—†गतं विद्यु० ।
रा—‡०लाहकिं ।
४. अ च—शशिज्योत्स्ना० ।
५. कै ल१ ब म ल२ श—नास्ति ।
६. च—†हिमधा० ।
७. रा च—†शारदां ।
८. कै—पद्मविशालाक्षीं ।
९. कै ल१ ब म ल२ श भ—
निवर्तयित्वाथ ध्वनिं ।

१२ उ] मेघानां वानराणां च मयूराणां च लक्ष्मण ।
N] नादः[1] प्रस्रवणानां च विनिवृत्तो[2] नृपात्मज ॥१०॥ [२६
८ उ] स्निग्धगम्भीरनिर्घोषाः शैलद्रुमपुरोगमान् ।
N] पूरयित्वा महामेघाः प्रतिशान्ता महाद्युते ॥११॥ [२३
९उ] नीलोत्पलदलश्यामाः सबलाकाः सविद्युतः ।
१०पू] विमदा इव मातङ्गा नष्टरूपा घना घनाः ॥१२॥ [२४
१४उ] अभिवृष्टा महावर्षे निर्मलाश्चित्रधातवः ।
१५पू] अवलिप्ता[3] इवाभान्ति गिरयः पश्य लक्ष्मण ॥१३॥ [२७
१३उ] उत्पलैः पुण्डरीकैश्च कुमुदैश्चापि पादपैः ।
१४पू] वाप्यः समुपशोभन्ते सामान्याः प्रमदा इव ॥१४॥ [N
११उ] पनसाः सप्तपर्णाश्च कोविदाराश्च पुष्पिताः[4] । [N
N] सारसारवसंपन्नाः[5] सारसारववादिनी[6] [7]।
N] यस्य मे रमते कान्ता साऽद्य मे रंस्यते कथम् ॥१५॥ [७
१३ उ] पुष्पितान् पनसांस् तन्वी काञ्चनैरिव[8] निर्मितान् । [४
१७पू] कथं सा वर्तते नूनं पश्यन्ती मामपश्यती ॥१६॥ [८
अपि तां मद्वियोगाच्च सौकुमार्यावभासिनीम्[9] ।
२०] न भृशं दीपयेत् कामः शरद्गुणसुदीपितः ॥[10] १७॥ [१२
N] दर्शयन्ति शरन्नद्यः पुलिनानि शनैः शनैः ।

---

१. रा भ—नदप्रस्र० ।
अ च—नादाः प्रस्र० ।
२. अ च—विनिवृत्ताः ।
३. ब—अभिलिप्ता ।
४. रा भ—अतः परमधिकः पाठः —
दृश्यन्ते बन्धुजीवाश्च श्यामाश्च गिरिसानुषु
प्रसन्नसलिला नद्यः कुररैः संप्रणादिताः ॥
हंसकारण्डवाकीर्णाश्चक्रवाकोपशोभिताः ।
५. अ च—सारसा रसवन्नादाः ।
६. अ च—०रवनादिनी ।
७. रा भ—नास्ति ।
८. ब म ल, श—कांचनेनैव ।
९. अ च—०भामिनीम् ।
१०. रा भ—नास्ति ।

नवसङ्गमसव्रीडा जघनानीव योषितः ॥१८॥ [२८

N] शरत्काले तु काशानां मञ्जर्यो मारुतेरिताः[1] ।

N] वरासवमदक्षीबा विलोला इव योषितः ॥१९॥ [N

स.३०,२पू] अन्योन्यं बद्धवैराणां मानिनां विजिगीषताम् । [६२पू

३पू] इयं सा प्रथमा यात्रा नरेन्द्राणां जयैषिणाम् ॥२०॥ [६३पू

२उ] उद्योगसमयः[2] सौम्य पार्थिवानां नृपात्मज । [६२उ

३उ] न च पश्यामि सुग्रीवमुद्योगं वा तथाविधम् ॥२१॥ [६३उ

चत्वारो वार्षिका मासा गता वर्षशतोपमाः ।

४] मम शोकपरीतस्य सौम्य[3][4] सीतामपश्यतः ॥२२॥ [६४

प्रियाविहीने दुःखार्ते हृतराज्ये[5] विवासिते ।

५] कृपां न कुरुते राजा सुग्रीवो मयि लक्ष्मण ॥२३॥ [६६

अनाथो हृतदारश्च रावणेन प्रधर्षितः ।

६] दीनो दूरगृहः[6] कामी तस्यैव शरणं गतः ॥२४॥ [६७

इत्येतद्कारणैः[7] सौम्य सुग्रीवेण दुरात्मना ।

७] अहं वानरराजेन परिभूतो न संशयः ॥२५॥ [६८

शरदः[8] स च कालो[9] मे सीतायाः परिमार्गणे ।

८] कृतार्थः समयं कृत्वा दुर्मतिर्नातिमन्यते ॥२६॥ [६९

स किष्किन्धां[10] प्रविश्य त्वं ब्रूहि तं वानरेश्वरम्।

---

१. ल$_2$—मरुते० ।

२. कै ल$_1$ ब म ल$_2$ श—उद्योगसमये ।

३. अ च—सोम्य ।

४. ल$_2$—वत्स ।

५. रा भ—हृतराज्योहं ।

६. रा—दूरग्रहः ।

७. ल$_1$—।०करणैः ।

८. कै रा म ल$_2$ श भ च—शरदा ।

९. ल$_2$—सकलः कालः ।

१०. रा ल$_1$ ब म ल$_2$ श—किष्किन्दां ।

९] मूर्खं [1]ग्राम्यसुखे सक्तं सुग्रीवं वचनान्मम ।।२७।। [७०

१० उ] अर्थिनां याचमानानां पूर्वं [2]चाप्युपकारिणाम् ।

आशां संश्रुत्य[3] यो हन्ति स लोके पुरुषाधमः।।२८।। [७१

११] शुभं वा यदि वा पापं वाक्यं यः समुदीरितम् ।[4]

सत्यवाङ् नाभिजानाति स लोके पुरुषाधमः।।[5]२९।। [७२

१२] कृतार्था ह्यकृतार्थानां मित्राणां न भवन्ति ये ।

१३पू] तान् मृतानपि क्रव्यादाः कृतघ्नान् नोपभुञ्जते ।।३०।। [७३

१८ उ] नूनं काञ्चनपृष्ठस्य[6] विकृष्टस्य[7] मया रणे ।

द्रष्टुमिच्छसि[8] चापस्य रूपं[9] विद्युद्गुणोपमम् ।।३१।। [७४

१९] घोरं ज्याघात[10]निर्घोषं मम क्रुद्धस्य संयुगे ।

२०पू] निष्पेषमिव वज्रस्य पुनस्त्वं श्रोतुमिच्छसि ।।३२।। [७५

एकेनैव[11] रणे वाली शरेणाभिहतो मया ।[12] [८२पू

२१] समये तिष्ठ सुग्रीव मा वालिपथमन्वगाः ।।३३।। [८१उ

कुरुष्व सत्यं मयि वानरर्षभ[13]

प्रतिश्रुतं धर्ममवेक्ष्य शाश्वतम् ।

---

१. कै ल१ म श—चैव सु० ।
ल२—निजसुखे ।
२. ल२—वाप्युप० ।
३. कै ल१ ब म ल२ श—संश्राव्य ।
४. रा—नास्ति ।
५. रा—नास्ति ।
६. कै ल१ ब म ल२ श—† ०नशिष्टस्य ।
७. श—†विक्रमस्य ।
८. कै ल१ अ म श—†द्रष्टुमिच्छति ।
रा—†इष्टमिच्छति ।
ल—†इष्टुमिच्छति ।
९. कै—†तूणं ।
१०. रा ल१ ब अ म श भ च—ज्यातलनि० ।
११. कै अ म ल२ श भ च—एक एव ।
१२. रा अ च—अत: परमधिकः पाठः—संत्रसन्भ्रमदाक्रान्तं वधिष्यामि सबान्धवं । न च संकुचितः पन्था येन वाली हतो मया ॥
१३. रा भ—वानरेश्वर ।

मा वालिनं प्रेतगतं यमक्षये

२२]          हतोऽद्य[1] पश्येस्त्वमजिह्मगैः शरैः ॥३४॥ [८४

स पूर्वजं तीव्रविवृद्धशोकं

लालप्यमानं प्रसमीक्ष्य दीनम् ।

चकार रौद्रां मतिमुग्रवेगो

N]          हरीश्वरे मानवदेवनाथः ॥३५॥ [८५

स लक्ष्मणस्तद्वचनं निशम्य

रामस्य शोकाभिपरिप्लुतस्य ।

उवाच वाक्यं मतिमान[2]नमर्षी

स.३१,१]          रामार्थसिद्ध्यर्थमदीनसत्त्वः ॥३६॥ [N

न वानरः स्थास्यति साधुवृत्ते[3]

न मंस्यते कामफलानुषङ्गं[4] ।

न मोक्ष्यते[5] वानरराजलक्ष्मीम्[6]—( ? )

२]          तथा हि नाथ[7] क्रमतेऽल्पबुद्धिः[8]॥३७॥ [स.३१,२

मतिक्षयाद् ग्राम्यसुखेषु सक्तो

भवत्प्रसादात् प्रतिकार[9]दीनः ।

---

१. रा भ—+हतं च ।
२. कै ल₁ ब म श—नतिमान० ।
रा च—+प्रतिमानमर्षी ।
३. रा—साधुवृत्तिं ।
४. कै ल₁ ब म ल₂ श च—कामफलानुषङ्गी ।
५. कै ल₁ ब म ल₂ श—तोषतेऽसौ नर० ।
रा अ च—तोषतेसुं ।
६. रा अ च—०लक्ष्मीस् ।
७. कै ल₁ ब म ल₂ श च—तवाहिताय ।
८. कै रा ल₁ अ ब म ल₂ श च—क्रमतेऽस्य बुद्धिः ।
९. रा अ च भ—प्रतिकारबुद्धिः ।

हतोऽग्रजं पश्यतु[1] वालिनं मया[2]
३] न चैवं[3] राज्यं विगुणाय देयम् ॥३८॥ [३

न[4] धारये दोषविदीर्णवेगं[5]
निहन्मि सुग्रीवमशक्तमद्य[6] ।
हतप्रवीरोऽद्य नरेन्द्रसूनुर्
४] नरेन्द्रपुत्रीं[7] विधवां करोतु ॥३९॥ [४

तमात्तवेगाच्च[8] समुत्पतन्तं
निवेदितार्थं रणचण्डवेगम् ।
उवाच रामः[9] परवीरहन्ता
५] स्वापेक्षया सानुनयं च वाक्यम् ॥४०॥ [५

इत्यार्षे रामायणे किष्किन्धाकाण्डे[10] सुग्रीवसन्देशो नाम

त्रयोविंशः सर्गः ॥२३॥

—

१. ल१ म—पश्यति ।
२. रा—सदा । भ—स ।
३. रा भ—राज्यमेवं ।
४. कै—न दारये ।
ल१ अ ब म ल२ श च—विदारये ।
५. कै ल१ अ ब म ल२ श—मेरुसुदीर्णवेगं ।
भ—दोषसुदीर्ण० ।
६. कै ल१ अ ब म ल२ श—०मदानमद्य ।
७. भ—नरेन्द्रपुत्र्या विजयं ।
८. रा ल१ ब भ च—तमार्तवेगाच्च ।
९. ल१ म ल२—रामं ।
१०. ल१ ब म ल२ श—किष्किन्धा० ।
रा भ च—नास्ति ।

न पापे त्वद्विधास्तात पापं कुर्वन्ति निश्चितम् ।
६] पापं मर्षेण यो हन्ति स वीरः पुरुषोत्तमः ॥१॥ [६
नेदमद्य त्वया कार्यं साधुवृत्तेन गर्हितम् ।
७] तां प्रीतिमनुवर्तस्व पूर्ववृत्तं च लक्ष्मण ॥२॥ [७
सामोपहितया वाचा रूक्षाणि परिवर्जयन् ।
८] वक्तुमर्हसि सुग्रीवमतीतं कालसंग्रहम् ॥३॥ [८
स एवमनुशिष्टार्थो यथावत् पुरुषर्षभः ।
९] प्रययौ तां पुरीं वीरो लक्ष्मणः शुभलक्षणः ॥४॥ [९
ततः शुभमतिः प्राज्ञो भ्रातुः प्रियहिते रतः ।
१०] लक्ष्मणः प्रतिसंरब्धो जगाम भवनं कपेः ॥५॥ [१०
शक्रचापनिभं घोरं धनुः कालान्तकोपमम् ।
११] प्रगृह्य गिरिशृङ्गाभं मन्दरः सानुमानिव ॥६॥ [११
यथोक्तवचसां वक्ता शूराणां कर्मणोत्तमः ।
N] बृहस्पतिमतिर्वीरो भ्राता रामस्य लक्ष्मणः ॥७॥ [१२
कामक्रोधसमुत्थेन भ्रातृशोकेन चावृतः ।
१२] प्रभञ्जन इवाविष्टः प्रययौ लक्ष्मणस्तदा ॥८॥ [१३

---

१. रा अ भ च—पापमेवं प्रकुर्वते।
२. रा अ भ च—मार्गेण ।
३. कै ल१ ब म ल२ श—पूर्ववत् त्वं। रा अ—पूर्वं वृत्तं ।
४. कै ल१ ब म ल२—समोपहितया । अ श च—सामेपहि० ।
५. रा भ—कालसंग्रहे ।
६. रा—त्रुटितः पाठः । श—लक्ष्मणः शुभलक्ष्मणः । भ—लक्ष्मणः पुण्यकर्मकृत् ।
७. रा—त्रुटितः पाठः ।
८. श—धन० ।
९. अ—+कर्मणोत्तमं ।
१०. भ च—धीरो ।
११. रा अ भ च—भ्रातृशोकाग्निनावृतः

सालान्[1] तालान् तमालांश्च तरसा पातयन् द्रुमान् । [१४पू

१३] दूरादेकपथं[2] त्यक्त्वा ययौ कार्यवशाद्[3] द्रुतम्[4] ॥९॥ [N

पर्यस्यन्[5] गिरिकूटानि द्रुमान् भञ्जन् महाबलः । [१४उ

N] शिलाश्च शकलीकुर्वन् पद्भ्यां वज्र इवाशुगः ॥१०॥ [१५पू

१४पू] अथापश्यद् बलाकीर्णां[6] कपिराजपुरीं शुभाम् ।

N] सौम्यामिक्ष्वाकुशार्दूलः[7] किष्किन्धां[8] गिरिसङ्कटे॥११॥ [१६

१४उ] कपिभिः शैलसङ्काशैः[9] समन्तादभिनादिताम् ।

N] ततः सुग्रीवभवनं लक्ष्मणः स ददर्श ह ॥१२॥ [N

रोषात् प्रस्फुरमाणोष्ठो[10] वानरं प्रति लक्ष्मणः ।

N] स ददर्श हरीन् भीतान्[11] किष्किन्धायां[12] च निःस्वनान्[13]॥१३॥[१७

शैलशृङ्गाणि[14] शतशः प्रवृद्धांश्च महीरुहान् ।

१५] जगृहुः कुञ्जरप्रख्या वानरा ये वनान्तरे ॥१४॥ [१८

तान् गृहीतप्रहरणान् सर्वान् दृष्ट्वैव लक्ष्मणः ।

१६] भूय एवाभवत् क्रुद्धो वह्निरिन्धन इवानलः ॥१५॥ [१९

"तं ते"[15] भयपरीताङ्गाः क्रुद्धं दृष्ट्वा प्लवङ्गमाः ।

१७] कालं मृत्युयुगान्ताभं शतशो दुद्रुवुस्तदा ॥१६॥ [२०

---

१. रा अ—सालतालांश्च कीर्णाश्च ।
भ च—सालतालांश्च कर्णाश्च ।

२. कै ल$_1$ अ ब म ल$_2$ च—दूरादेव० ।

३. रा—कामवशाद् ।

४. च—+वनं ।

५. कै रा ल$_1$ अ ब म ल$_2$ श—पर्यसन् ।

६. रा—गजाकीर्णं कपिराजपुरं शुभं ।
ल$_1$—महाभीमां क० ।

७. रा—+ सौम्य० ।

८. ल$_1$ ब म ल$_2$ श—किष्किन्दां ।

९. कै ल$_1$ म ब ल$_2$ श—सालसंकाशैः ।

१०. भ च—०माणौष्ठो ।

११. रा—वीरान् ।

१२. ल$_1$ ब म ल$_2$ श—किष्किन्दायां ।

१३. रा अ म भ च—निःस्वरान् ।

१४. ल$_1$ ब अ म—शैलशृङ्गांश्च ।

१५. रा भ—+ तत्ते ।

ततः सुग्रीवभवनं प्रविश्य हरयस्तदा ।
१८] क्रोधमागमनं चैव तस्मै सर्वं न्यवेदयन् ॥१७॥ [२१
तारायाः सह कान्तायाः सक्तः कपिवरेश्वरः ।
१९] न तेषां हरिवीराणां शुश्राव वचनं तदा ॥१८॥ [२२
ततः सचिवसन्दिष्टाः[1] कपयः कामरूपिणः ।
२०] मेघकुञ्जरगिर्याभा नगर्या निर्ययुस्तदा ॥१९॥ [२३
२१पू] नखदंष्ट्रायुधा घोराः सर्वे विकृतदर्शनाः ।
N] सर्वे शार्दूलदर्पाश्च सर्वे च विकृताननाः ॥२०॥ [२४
२१उ] दशनागबलाः केचित् केचिद् दशगुणोत्तराः[2] ।
केचिन् नागसहस्रस्य बभूवुस् तुल्यविक्रमाः ॥२१॥ [२५
२२] मर्त्यकोटिबलाः[3] केचित् केचिद् वायुबलोपमाः ।[4]
२३पू] अप्रमेयबलाश्चान्ये तत्रासन् हरियूथपाः ॥२२॥ [२६
तानचिन्त्य महावीर्यो लक्ष्मणः परवीरहा ।
N] प्रविवेश महाबाहुः सुग्रीवभुजपालिताम् ॥२३॥ [३३
ततः कैलाससङ्काशं तप्तकाञ्चनवेदिकम् ।
N] सुग्रीव भवनं श्रीमद् दृष्ट्वा द्वारि व्यवस्थितः ॥२४॥ [३४पू
स तत्र मधुरं गीतं शुश्राव सुमनोहरम् । [३४उ
N] एकान्तमिव[5] सञ्जातं तन्त्रीवल्लकिवेणुभिः ॥२५॥ [N
वल्लीश्च विविधाकारा रूपयौवनदर्पिताः[6] ।
N] स्त्रियः सुग्रीवभवने ददर्श भरतानुजः ॥२६॥ [N
रूपदाक्षिण्यसंपन्नाग् चित्रमाल्यकृतस्रजः[7] ।

---

१. कै म—† सचिवाः संदिष्टाः ।
२. कै—दशगुणोत्तरं ।
३. कै रा ल, अ ब म श भ च—सन्ति कोटि० ।
४. रा—नास्ति ।
५. रा—† एकतामिव ।
६. कै—† ०नदर्शिताः ।
७. रा—‡ ०ल्याः कतिप्रभाः ।
भ—०ल्यकृतप्रभाः ।

N] नानाविरागवसना भूषणोत्तमभूषिताः[1] ॥२७॥ [N
नातृप्तान् न मदव्यग्रान् मुदितान्[2] नापरिच्छदान्[2] ।
N] सुग्रीवानुचरांस्तत्र लक्षयामास लक्ष्मणः ॥२८॥ [N
स सुग्रीवप्रमोदं च पूर्वजस्यार्ति[3]मुत्तमाम् ।
N] बुद्ध्वा[4] कोपवशं वीरः पुनरेव जगाम[5] ह ॥२९॥ [N
निःश्वस्य दीर्घमुष्णं च कोपाद् रक्तान्तलोचनः ।
N] बभूव नरशार्दूलः सधूम इव पावकः ॥३०॥ [N
बाणखड्ग[6]स्फुरज्जिह्वः सायकासनभोगवान् ।
N] स्वतेजोविषसंघातः[7] पञ्चास्य[8] इव पन्नगः ॥३१॥ [N
तं दीप्तमिव कालाग्निं नागेन्द्र[9]मिव कोपितम् ।
N] सहसैवाङ्गदो[10] दृष्ट्वा द्वारमतिमुखोऽभवत् ॥३२॥ [३६
अङ्गदं रोषसंविग्नः[11] सन्दिदेश महाबलः ।
N] मामिहोपस्थितं शीघ्रं सुग्रीवाय निवेदय ॥३३॥ [३७
एष वै लक्ष्मणो नाम रामवाक्यप्रचोदितः ।
N] व्यवसायरथेनाशु शीघ्रं प्राप्तो महाकपे ॥३४॥ [३८
लक्ष्मणस्य वचः श्रुत्वा शोकाविष्टो[12]ऽङ्गदोऽब्रवीत् । [४०पू
N] तथेति कृत्वा[13] वचनमेतत् सर्वं न्यवेदयत्[13] ॥[14]३५॥ [N

---

१. भ—† ०त्तमभूषणाः ।
२. कै ब—मुदितानपरिग्रहान्
रा—नानुदग्रप० ।
भ—नापकृष्टपरि० ।
३. श—† ०जस्यांतमुत्तमं
४. ल२—दृष्ट्वा ।
५. ब—पुनरेवाजगाम ।
६. रा भ—† बाणशब्द० ।
भ—'०खड्ग' हृस्वपरहस्तेन ।
७ अ—सुतेजो० ।
८. ल१—त्रुटितः पाठः ।
९. कै—† नगेन्द्र० ।
१०. रा भ—† सहसैवागतं ।
११. ल१ ब—त्रुटितः पाठः ।
१२. रा—†०विष्टोद्गतो० ।
श—नास्ति ।
१३. ल१—त्रुटितः पाठः ।
१४. श—नास्ति ।

लक्ष्मणागमनं श्रुत्वा सुग्रीवः प्लवगेश्वरः ।
N] लक्ष्मणं कुपितं प्राप्तं विदित्वा समुपाविशत् ॥३६॥ [N
N] प्रतिपूर्णमिवाकाशं संच्छन्नमिव तद् वनम् ।
तेन वानरसैन्येन सुग्रीवस्य महाकपेः ॥३७॥ [२७
२४] ततो द्वाराणि सर्वाणि ह्यङ्गदः परिवारयन् ।
पर्याक्रमत दुर्धर्षो नक्षत्राणीव चन्द्रमाः ॥३८॥ [२८
२५] कृत्स्नां हि कपिभिर् व्याप्तां द्रुमहस्तो महाबलः ।
अपश्यल्लक्ष्मणः क्रुद्धः किष्किन्धां च दुरासदाम् ॥३९॥ [२९
२६] ततस्तु हरयः सर्वे प्रासादपरिखान्तरात् ।
निर्गम्योदग्र-सत्त्वास्ते तस्थुरधिकृतास्तदा ॥४०॥ [३०
२७] तं महेन्द्रनिभं दृष्ट्वा वज्राशनिसमस्वनम् ।
सिंहनादं समं चक्रुर्लक्ष्मणस्य समन्ततः ॥४१॥ [४९
२८] तेन शब्देन महता तारया प्रतिबोधितः । [४६पू
सुग्रीवः सचिवैः सार्धममन्त्रयत वानरः ॥४२॥ [N
२९] विनतेन सुषेणेन नीलेन च नलेन च ।
अङ्गदेन च शूरेण प्राज्ञेन च हनूमता ॥४३॥ [N
३०] एतेऽन्ये च महात्मानः सर्वे वानरयूथपाः ।

---

१. श—नास्ति ।
२. ब—त्रुटितः पाठः ।
ल$_1$—परिपीडयन् ।
३. कै अ च—† पर्योत्क्रमत ।
ल$_1$ ब म ल$_2$ श—पर्युत्क्रामत ।
भ—† पर्याक्रामत ।
४. रा भ—कृत्स्नं ।
५. रा भ—† व्याप्तं ।
६. ल$_1$ ब म ल$_2$ श—किष्किन्दां ।
७. रा—तस्थुराविष्कृता० ।
ल$_1$—०कृतास्तथा ।
८. रा—† ०निसमन्वितं ।
९. श—ततश्चक्रुर् ।
१०. रा भ—विशेषतः ।
११. रा—सर्वम० ।
१२. म श—विनीतेन ।

एकान्ते यैः[1] समासीनः शक्रः सुरगणैरिव ॥४४[2]॥ [N
सम्मन्त्र्य सचिवैस्तैस्तु चकार मतिमान् मतिम् ।
N] लक्ष्मणस्य प्रसादार्थं वानरैः[3] स प्रचोदितैः[4] ॥४५॥ [N
३२ उ] वाक्यमुच्चावचं तेषां लक्ष्मणं प्रति शुश्रुवे । [४८उ
अर्थधर्मसमायुक्तं मन्त्रिणां[5] स कपीश्वरः ॥४६॥ [N
N] तेषां तद् वचनं श्रुत्वा सर्वेषां[6] चायतिक्षमम् । [N
प्रसादयित्वा सुग्रीवं बुद्धिमान् मारुतात्मजः ॥४७॥
३३] अब्रवीत् पर्युपासीनः[7] यथा शक्रं बृहस्पतिः । [४९
सत्यसन्धौ महात्मानौ भ्रातरौ रामलक्ष्मणौ ॥४८॥
३४] उपकारप्रवृत्तौ च राजन् राज्यस्य दायकौ । [५०
तयोरेको धनुष्पाणिर् द्वारि तिष्ठति भूमिप ॥४९॥
३५] तस्य भीताः प्रवेपन्ते नादं मुञ्चन्ति वानराः । [५१
स एष राघवभ्राता लक्ष्मणो गुणसागरः ॥५०॥
३६] व्यवसायरथं प्राप्तस्तस्य रामस्य शासनात् । [५२
स दृश्यतां वा प्रतिषिध्यतां वा
यच्च [8]क्षेमं भवता तद् विधेयम् ।

---

१. रा अ भ च—च पुरासीनं शक्रं ।
२. कै ल१ अ ब म ल२ श च—अतः परमधिकः पाठः—
बलविक्रमयुक्ताश्च मन्त्रे च परिनिष्ठिताः ।
उत्साहं च प्रभावं च मन्त्रिणो मन्त्रसिद्धये ॥
अ भ च—कोषेषु च—'मन्त्रिणो मन्त्रसिद्धये' इत्यस्य स्थाने 'मन्त्रे चैवार्थधर्मयोः' इति पठित्वा 'प्रक्षेपं च प्रचारं च मन्त्रिणो मन्त्रसिद्धये' इत्यधिकं पठ्यते ।
३. रा अ भ च—वानरैः प्रतिवेदितं ।
४. कै ल१ ब म ल२ श—वाक्यमुवाच वै ।
५. रा भ—मन्त्रीशः ।
६. कै अ भ च—सर्वेषामायतिक्षमं ।
७. कै ल१ अ ब म ल२ श च—॰पासीनं ।
८. रा अ भ—क्षमं पार्थिव मन्यतां च ।
च—त्रुटितः पाठः ।

क्रुद्धः किलागच्छति लक्ष्मणोऽसौ
रामस्य हेतोरिह तं न विद्मः ॥५१॥ [N

तस्य मूर्ध्ना प्रणम्य त्वं सपुत्रः सह बन्धुभिः । [५५ पू
N] राजंस्तिष्ठाद्य समये भव सत्यप्रतिश्रवः ॥५२॥ [५६ उ
उपकारेण संयुक्तः प्रतिकारं स्मरस्व च ।
N] कर्तुमर्हसि सीतार्थं प्रीतिमानीय तद्वशे ॥५३॥ [N
स हि शूरो महेष्वासः सर्वास्त्रविधिपारगः ।
N] अमर्षी दुःखसन्तप्तस्तस्य प्रतिकर्तुं क्षमम् ॥५४॥ [N

इत्यार्षे रामायणे किष्किन्धाकाण्डे लक्ष्मणगर्मनं नाम
चतुर्विंशः सर्गः ॥ २४ ॥

---

१. कै ल$_1$ब म ल$_2$श—प्रणतस्।
२. म—त्रुटितः पाठः।
३. ल$_2$—सत्यपराक्रमः।
४. रा भ—सीतार्थे।
५. रा भ—+ प्रीतिभार्ये च।
अ च—+प्रीतिभार्याय।
६. श—+ प्रतिकृति०।
७. रा भ—नास्ति।
ल$_1$ब म श ल$_2$—किष्किन्दा०।
८. रा भ च—लक्ष्मणगमनो।

एवमुक्तस्तु[1] सुग्रीवः सम्मन्त्र्य हनुमन्मुखैः ।
१] मुहूर्तं चिन्तयामास दीनः किञ्चिदवाङ्मुखः ॥१॥ [N
सचिवानब्रवीत् सर्वान् संप्रधार्य[2] बलाबलम् ।
२] वाक्यज्ञो वाक्यमेवान्ते[3] मन्त्रेषु परिनिष्ठितः ॥२॥ [२
न मे दुर्व्याहृतं[4] किञ्चिन् नापि मे दुरधिष्ठितम् ।
३] लक्ष्मणो राघवभ्राता किंनिमित्तं स रुष्टवान्[5] ॥३॥ [३
असुहृद्भिर्[6] ममामित्रैर् नित्यमन्तरदर्शिभिः[7] ।
४] उक्त्वा[8] दोषानसंभूतान् प्रेरितो लक्ष्मणो भवेत् ॥४॥ [४
अत्र तावद् यथाबुद्धि[9] सर्वैरेव[10] विधीयताम् ।
५] भवद्भिर् निश्चितैस्[11]तत्त्वे विज्ञेयो निपुणं[12] शनैः ॥५॥ [५
कः खल्वस्ति मम त्रासो राघवाच्चापि लक्ष्मणात् ।
६] मित्रं त्वस्थानकुपितं जनयत्येव संभ्रमम् ॥६॥ [६
दुष्करं सर्वथा मित्रं कृतं दुरनुपालनम् ।
७] अनित्यत्वात् तु चित्तस्य प्रीतिरल्पेन[13] भिद्यते ॥७॥ [७

---

१. रा—एवमुक्तः स ।
२. भ—संधार्य च ।
३. रा अ भ च—वाक्यमेधावी ।
४. ल१—द्व्याहृतं ।
म ल२ श—०द्व्याश्रितं ।
५. कै ल१ अ ब म श भ च—सुरुष्टवान् ।
६. कै ल१ ब म ल२ श—०द्भिर्ममामि० ।
रा—स सुहृद्भिर्महामात्यै र् ।
भ—सोऽसुहृद्भिः सहामात्यैर् ।
७. म—|०रदर्शिनः ।
च—नित्यमन्त्रैरदर्शिभिः ।
८. कै—|उक्तान् । उक्त्वा, इति प्रान्ते लेखान्तरम् ।
रा—|उक्तो ।
९. कै ब ल१—|यथाबुधिः ।
अ—|यथाबुद्धिः ।
१०. रा भ—|सर्वेषामेव धीमतां ।
११. ल२—|निश्चिते सर्वैर् ।
१२. कै रा—निपुणः ।
१३. रा—प्रीतिरस्य न वर्धते ।
भ—प्रीतिरस्य न विद्यते ।

अतो निमित्तं त्रस्तोऽहं रामेण हि[1] महात्मना ।
८] यन्मयोपकृतं वाक्यं प्रतिकर्तुं(?कृतं) ने[2] तन्मया॥८॥ [८
N] अतो[3] दुःखं[4] मम महद्धृदि[4] शल्यमिवार्पितम् । [N
सुग्रीवेणैवमुक्ते तु हनुमान् हरिपुङ्गवः ।
९] उवाच श्लक्ष्णया वाचा मध्ये वानरमन्त्रिणाम् ॥९॥ [९
सर्वथा नैतदाश्चर्यं यत् त्वं हरिगणेश्वर ।
१०] न विस्मरसि तं स्निग्धमुपकारं तथा कृतम् ॥१०॥ [१०
राघवेण हि शूरेण भयमुत्सृज्य दूरतः ।
११] त्वत्प्रियार्थं[5] हतो वाली शक्रतुल्यपराक्रमः ॥११॥ [११
सर्वथा प्रणयक्रुद्धो[6] राघवो नात्र संशयः ।
१२] भ्रातरं संप्रहितवांल्लक्ष्मणं कीर्तिवर्धनम् ॥१२॥ [१२
त्वं प्रमत्तो न जानीषे कालं कालविदां वर ।
१३] फुल्लसप्तच्छद[7]श्यामा प्रवृत्ता हि शरत्[8] प्रिया ॥१३॥ [१३
निर्मलग्रहनक्षत्रा द्यौः[9] विगतबलाहका ।
१४] प्रसन्नाश्च दिशः सर्वा नद्यश्च हरिपुङ्गव ॥१४॥ [१४
N] प्रसक्तः कामभोगेषु राजंस्त्वं नावबुध्यसे ॥१५॥ [N
प्राप्तमुद्योगसमयं नावैषि हरिपुङ्गव ।
१५] प्रमत्तस्त्वमिति ज्ञात्वा लक्ष्मणोऽयमिहागतः ॥१६॥ [१५
आर्तस्य हृतदारस्य परुषं परुषाक्षरम् ।
१६] वचनं मर्षणीयं ते राघवस्य समीरितम्[10] ॥१७॥ [१६

---

१. ब—सुम० ।
२. कै ल, अ ब ल२ श भ—च ।
३. कै अ ल१—अहो ।
४. ल१—मम महद्दुःखं हृदि ।
५. रा—राघवेण ।
६. अ—प्रणयात्क्रुद्धो ।
७. च—|सप्तहृद० ।
८. रा अ च—शरच्छिवा ।
९. कै म—|द्यौ ।
१०. रा—प्रसादने ।

कृतापराधस्य हि ते नान्यं पश्याम्यपक्रमम् ।[1]
१७] अन्तरेणाञ्जलिं कृत्वा राघवस्य प्रसादने ॥१८॥[2] [१७
निर्युक्तैर्[3] मन्त्रिभिर् वार्च्यो ह्यवश्यं[4] पार्थिवो हितम् ।
१८] अतस्त्वै[5] भयं त्यक्त्वा ब्रवीम्येष हितं वचः ॥१९॥ [१८
अतिक्रुद्धः समर्थो हि चापमुद्यम्य राघवः ।
१९] सयक्षसुरगन्धर्वं[6] परिवर्तयितुं जगत् ॥२०॥ [१९
न स क्षमः कोपयितुं यः प्रसाद्यः पुनर् भवेत् ।
२०] कृतोपकारं[7] स्मरता कृतज्ञेन विशेषतः ॥२१॥ [२०
तस्य मूर्ध्ना प्रणम्य त्वं सपुत्रः सह बन्धुभिः ।
२१] राजंस्तिष्ठाद्य समये पत्यौ भार्येव शाश्वते ॥२२॥ [२१
न रामरामानुजशासनं त्वया
कपीन्द्र युक्तं मनसाऽप्यपोहितुम्[8] ।
मन्ये हि[9] तज्जातु न मानुषं बलं
N] सराघवस्यास्यं[10] महेन्द्रवर्चसः ॥२३॥[11] [२३

इत्यार्षे रामायणे किष्किन्धाकाण्डे[12] हनुमद्वाक्यं नाम
पञ्चविंशः सर्गः ॥ २५ ॥

---

१. अ च श—पश्याम्युप० ।
भ—पश्याम्युपा० ।
२. रा—नास्ति ।
३. रा—†निर्युक्तैर् ।
४. अ च—‡वाच्यं अवश्यं ।
५. रा अ भ च—अत एव ।
६. भ—सयक्षासुर० ।
७. रा अ म— पूर्वोपकारं ।
८. कै म ल$_2$ भ—मनसा ह्यपोहि० ।
९. कै—तु तज्जातु ।
रा ल$_1$ ब म ल$_2$ श च—
महज्जातु ।
१०. कै ल$_1$ अ ब म ल$_2$ श च—
०वचस्याद्य ।
११. रा—अतः परमधिकः पाठः—
दहेद्धि लोकान् कुपितः स राघव-
स्तव प्रतिज्ञां चलितां निशम्य वै ।
तदन्यथा नार्हसि कर्तुमात्मवत्
स्वमग्निशक्राशनितुल्यतेजसः ॥
१२. ल$_1$ ब म श ल$_2$—किष्किन्धा० ।
रा—नास्ति ।

तथा प्रतिसमादिष्टो लक्ष्मणः परवीरहा ।
१] प्रविवेश पुरीं रम्यां[1] किष्किन्धां[2] वालिपालिताम् ॥१॥ [१
द्वारस्था हरयस्तत्र महाकाया महाबलाः ।
२] वानरा लक्ष्मणं दृष्ट्वा स्थिताः प्राञ्जलयस्तदा ॥२॥ [२
क्रुद्धं विनिःश्वसन्तं तं ज्वलन्तमिव तेजसा ।
३] बभूवुर् हरयस् त्रस्ता[3] न चैनं प्रत्यवारयन् ॥३॥ [३
स तु रोषपरीतात्मा लक्ष्मणः परवीरहा । [N
४] जातरूपमयीं चित्रां ददर्श महतीं गुहाम् ॥४॥ [४उ
५] रम्यां रत्नसमाकीर्णां चित्रपुष्पितकाननाम् । [४पू
N] वैडूर्यरुचिरस्तम्भां प्रवालोच्छ्रिततोरणाम् ॥५॥ [N
हर्म्यप्रासादसंबाधां[4] नानामणिविभूषिताम् ।
६] सर्वकामफलैर् वृक्षैः पुष्पितैरुपशोभिताम् ॥६॥ [५
दिव्यमालाम्बरधरैर् मधुरैः प्रियदर्शनैः ।
७] देवगन्धर्वपुत्रैश्च वानरैरुपशोभिताम् ॥७॥[5] [६
चन्दनागुरुपद्मानां गन्धैः[6] सुरभिगन्धिभिः ।
८] मैरेयाणां[7] सुराणां च समावृतमहापथाम् ॥८॥ [९पू
विन्ध्यमेरुनिकाशाश्च बहुभूमिसमावृताः । [७उ
९] ददर्श नृपमार्गेषु[8] चित्राः प्रासादपङ्क्तयः ॥९॥ [८
सरांसि च सपद्मानि पुष्पितानि वनानि च ।

---

१. कै ल१ ब म श ल२—†लङ्कां।
२. ल१ ब म श ल२—किष्किन्दां ।
३. ब—†तत्र ।
४. श—०दसंबाधैर् ।
५. ल१ ब म भ च—पूर्वोत्तरार्द्धयोः परस्परं व्यत्ययः ।
६. रा भ—०गुरुगन्धैश्च ।
७. कै ल१ ब म श ल२—†मैरायाणां।
८. ब—†०पगात्रेषु ।

११] ददर्श गिरिनद्यश्च लक्ष्मणो विमलास्तथा ॥१०॥ [N
देवतायतनांश्चैव राजमार्गे ददर्श सः ।
१०] सुधाऽवदातं सुकृतं विमानं शुभदर्शनम् ॥११॥ [N
अङ्गदस्य गृहं रम्यं मैन्दस्य द्विविदस्य च ।
१२] गवयस्य गवाक्षस्य गजस्य शरभस्य च ॥१२॥ [९
१३पू] विद्युन्मालेश्च संपातेः सूर्याक्षस्य हनूमतः । [१०पू
१४पू] कुमुदस्य सुषेणस्य नीलस्य च नलस्य च ॥१३॥ [११पू
१३ उ] वीरबाहोः सुबाहोश्च विनतस्याथ केसरेः । [१०उ
१४ उ] कपेः शतबलस्यैवं रंभस्य पनसस्य च ॥१४॥ [N
१९पू] पाण्डुरेण तु शैलेन परिक्षिप्तं दुरासदम् । [१४पू
अन्येषां कपिमुख्यानां राजमार्गे महात्मनाम् ॥१५॥
१५] ददर्श गृहमुख्यानि रत्नस्तम्भोज्ज्वलानि च । [१२
पाण्डुराभ्रप्रकाशानि दिव्यमाल्यैचितानि च॥ १६॥
१६] प्रभूतधनधान्यानि स्त्रीरत्नैः शोभितानि च । [१३
१७ उ] वानरेन्द्रगृहं रम्यं महेन्द्रभवनोपमम् ॥१७॥ [१४उ
शुक्लैः प्रासादशिखरैः कैलासशिखरोपमैः ।
सर्वकामैः फलैर् वृक्षैः शीतच्छायैर् मनोरमैः॥१८॥ [१५

---

१. रा अ भ च—विमला लक्ष्मण०।
२. भ—देवतायतनं चैव।
३. रा ल१ ब म श—ह।
४. कै ल१ ब म ल२—द्विविधस्य।
५. रा भ—विनतस्य महात्मनः।
६. रा—०तबलेश्चैव।
७. रा—च महात्मनः।
८. म—नास्ति।
९. अ—+राजमार्गं।
१०. ल२—नास्ति।
११. रा—+दिव्यमाल्यु०।
१२. भ—नास्ति।
१३. ल२—०तधनरत्नानि।
१४. भ—नास्ति।
कै रा ल१ ब म भ—अतः परमधिकः पाठ :—
पाण्डुरेण तु शैलेन परिक्षिप्तं दुरासदम्।
१५. ल२—महेन्द्रसदनोपमं।
१६. रा भ—सर्वकामफलैर्।

दिव्यगन्धवहैश्चित्रैः पुष्पितैरुपशोभितम् ।

१९पू] महेन्द्रकल्पैर् हरिभिर् नीलजीमूतसन्निभैः ॥१९॥ [१६

बहुभिः संवृतद्वारं बलिभिः शस्त्रपाणिभिः ।

२०] दिव्यमाला[1]ऽऽवृतं रम्यं तप्तकाञ्चनतोरणम् ॥२०॥ [१७

२१पू] सुग्रीवस्य गृहं[2] रम्यं लक्ष्मणः प्रविवेश ह । [१८

सभयैर् हरिभिर् मुख्यैर् मत्तमातङ्गसन्निभैः ।[3] [N

N] अवारितैः[4] स सौमित्रिर् महाऽभ्रैरिव भास्करः[5] ॥२१॥ ]१८ उ

तमुपायान्तमव्यग्रं श्रुत्वा सुग्रीवशासनात् ।

२२] प्रत्युज्जग्मुश्च सचिवाः कृताञ्जलिपुटास्तदा ॥२२॥

तानाभाष्य यथान्यायं[6] हनुमत्प्रमुखान् हरीन् । [N

२३] धर्मवृद्धान्[7] न दौर्बल्याद् विदितः प्रविवेश ह ॥२३॥

स सप्त[8] कक्षा धर्मात्मा यानासनसमावृताः ।

२४] प्रविश्य सुमहद् गुप्तं ददर्शान्तःपुरं ततः ॥२४॥ [१९

हेमराजतपर्यङ्कैर् महद्भिश्च वरासनैः ।

२५] महाऽर्हास्तरणोपेतैर् ददर्शादित्यसन्निभैः[9] ॥२५॥ [२०

ततः सुग्रीवमासीनं काञ्चने शयनोत्तमे ।

३४] महाऽर्हास्तरणोपेते ददर्शादित्यसन्निभम्[10] ॥२६॥ [६३

दिव्याभरणचित्राङ्गं दिव्यरूपसमन्वितम् ।

---

१. अ भ च—दिव्यमाल्यावृतं ।
२. भ—ह निर्भीतः ।
३. भ—नास्ति ।
४. अ भ च—आवार्यमाणः ।
५. $ल_2$— भास्करैः
६. ब—न्याय्यं ।
७. अ भ—धर्मबुध्या न दौर्बल्यात् ।
   श—दर्पवृद्धा० ।
८. $ल_1$ ब श—सप्तकक्ष्या ।
   $ल_2$—सप्तकक्ष्यान् ।
९. कै रा—०त्यसन्निभः ।
   भ—तत्र तत्रोपशोभितं ।
१०. भ—ददर्शादित्यसन्निभे ।

३५] दिव्यमाल्याम्बरधरं महेन्द्रमिव दुर्जयम् ॥२७॥ [३४
दिव्याभरणमालाभिः प्रमदाभिः समन्ततः । [६५पू
N] सहोपविष्टं हृष्टाभिः कुमारमिव नन्दने ॥२८॥
स्त्रीभिः परमहृष्टाभिर् वृतं शतसहस्रशः ।[४]
३६] अप्सरोभिः परिवृतं महेन्द्रमिव नन्दने ॥२९॥
वामपार्श्वे स्थिता चास्य तारा तारानिभानना । [N
३७] रुमा तु दक्षिणे पार्श्वे सुग्रीवस्य महात्मनः ॥३०॥
शुक्ले तु बालव्यजने तप्तकाञ्चनभूषिते । [N
३८] दोधूयमाने नारीभिर् लक्ष्मणः स ददर्श ह ॥३१॥
तं दृष्ट्वा तस्य ललितं विलासं चैव लक्ष्मणः । [N
३९] विषमत्वं च रामस्य द्विगुणं क्रोधमाप्तवान् ॥३२॥
स क्रोधाद् रक्तनयनं सङ्कुचितभ्रूवन्मुखम् । [N
४०] दष्टाधरौष्ठपुटकं प्रेक्षमाणं तमन्तिके ॥३३॥
दीर्घमुष्णं विनिश्वस्य श्वसन्तं च मुहुर्मुहुः । [N
४१] कुपितं सप्तशिरसं बिलरुद्धमिवोरगम् ॥३४॥
तं दृष्ट्वा क्रोधरक्ताक्षं प्रगृहीतशरासनम् । [N
४२] सुग्रीवः सहसोत्तस्थौ कृताञ्जलिपुटस्तदा ॥३५॥
तस्य तारा रुमा चैव द्वे भार्ये पार्श्वतः स्थिते । [N

---

१. कै $ल_2$—दिव्यमालाम्बर० ।
२. कै अ च—०रणमाल्याभिः ।
३. अ भ च—कुवेरमिव ।
४. $ल_1$ म—नास्ति ।
५. $ल_1$ ब म $ल_2$ श—०भूषणे ।
६. अ भ च—नारीभिरभितः ।
७. $ल_2$—विमलत्वं ।
८. अ च—क्रोधमुच्छ्रितः ।
भ—क्रोधमूर्छितः ।
९. कै रा $ल_1$ ब म ल श—
०तद्रुमोन्मु० ।
१०. रा $ल_2$—च निःश्वस्य ।
११. कै $ल_1$ अ ब म श $ल_2$—
सुप्तशि० ।

४३] कृताञ्जलिपुटे चास्तां लक्ष्मणाभिमुखे तदा ॥३६॥

पत्न्योर् मध्यगतस्तत्र स सुग्रीवो व्यरोचत । [N

४४] विशाखयोर् मध्यगतः संपूर्ण इव चन्द्रमाः ॥३७॥

N] उत्पतन्तं समुत्पेतुस्म ताराऽऽद्यास्तत्र योषितः॥३८॥ [N

प्रत्युद्गम्यं[1] च सुग्रीवो बहुमानेन लक्ष्मणम् ।

४५] गृहं प्रवेशयामास सामात्यः सपुरोहितः ॥३९॥ [N

तमप्रतिबलं क्रुद्धं प्रविष्टं पुरुषर्षभम्[2] ।

N] वानरेन्द्रस्तु तं दृष्ट्वा लक्ष्मणं व्यथितं[3] तदा[4] ॥४०॥ [N

बाहुभ्यां संपरिष्वज्य तारां ताराऽधिपाननाम् ।

N] शुशुभे स तया राजा सतार इव चन्द्रमाः ॥४१॥ [N

तां दिव्यरूपां परिरभ्य तारां

वरासनस्थो वरहेमवर्णाम् ।

ददर्श सौमित्रिमदीनसत्त्वो[5]

N] विशालनेत्रैः[6] पृथुदीर्घवक्षाः[7] ॥४२॥ [N

स पद्मपत्रप्रतिरूपनेत्रं[8]

महाकपिं देवसमप्रभावम् ।

सुखोपविष्टं कनकप्रभाऽऽभं

N] वरासने सूर्यनिभे ददर्श ॥४३॥[9] [N

इत्यार्षे रामायणे किष्किन्धाकाण्डे[10] किष्किन्धाप्रवेशो[11] नाम

षड्विंशः सर्गः ॥ २६ ॥

---

१. भ—प्रत्युदस्य ।

२. भ—स नरर्षभं ।

३. अ भ—व्यथितस्तदा ।

४. ल$_2$—तदा ।

५. अ—सौमित्रिर० ।

रा—०त्रिरदीनसत्वं ।

६. च—विशालनेत्रं ।

७. ल$_2$—किल धीरचेताः ।

८. भ—०त्रप्रतिमान० ।

च—| ०त्रप्रतिपात० ।

९. अ—नास्ति ।

१०. ल$_1$ ब म ल$_2$ श—किष्किन्दा० ।

११. ल$_1$ ब म ल$_2$ श—किष्किन्दा० ।

## [वं०-३४]= [ सप्तविंशः सर्गः ] =[दा०-३४]

तमप्रतिहतं क्रुद्धं प्रविष्टं पुरुषर्षभम् ।
१] सुग्रीवो लक्ष्मणं दृष्ट्वा बभूव व्यथितस्तदा[1] ॥१॥ [१
क्रुद्धं विनिःश्वसन्तं तु प्रदीप्तमिव तेजसा ।
N] भ्रातुर् व्यसनसन्तप्तं दृष्ट्वा दशरथात्मजम् ॥२॥ [२
उत्पपात हरिश्रेष्ठो हित्वा सौवर्णमासनम् ।
N] महेन्द्रध्वजसङ्काशं[2] तारां सन्त्यज्य वानरः ॥३॥ [३
उत्पतन्तं समुत्पेतुस् ताराप्रभृतयः स्त्रियः ।
N] सुग्रीवं गगने पूर्णं चन्द्रं तारागणो यथा ॥४॥[3] [४
संरक्त[4]नयनः श्रीमान् मन्दस्वेदः[5] कृताञ्जलिः ।
N] बभूवावस्थितस्तत्र कल्पवृक्षोपमस्तदा ॥५॥ [५
तारा[6]द्वितीयं सुग्रीवं नारीम[7]ध्यगतं पुनः ।[8]

---

१. भ—व्यथितस्तथा ।
२. अ भ च—०जसंकाशस् ।
३. भ—अतः परमधिकः पाठः—
प्रत्युद्गम्य च सुग्रीवो बहुमानेन लक्ष्मणं ।
गृहं प्रवेशयामास सामात्यः सपुरोहितः ॥
४. भ—सुरक्त० ।
५. अ च—मंदस्वेदः । भ-मंदलेखः ।
६ भ—ताराद्वितीयः सुग्रीवो ।
७. कै रा ल₁ व म ल₂ श—
तारामध्यगतं ।
भ —नारीमध्यगतः ।
८. भ—अतः परमधिकः पाठ —
संक्रुद्धं लक्ष्मणं तत्र निषीदेत्यब्रवीद्वचः ।
तं लक्ष्मणो विनिःश्वस्य विलरुद्ध इवोरगः ।
भ्रातुर्वचनसंत्रस्तः सुग्रीवमिदमब्रवीत् ।
न शक्यमकृतार्थेन दूतेन हरिपुंगव ।
प्रतिग्रहीतुं शक्यं वै भोक्तुं संवेष्टुमेव च ॥
सदा कृतार्थो दूतः स्याद्भर्तुरर्थविनिश्चये ।
प्रतिग्राह्यस्तदा तेन सत्कारश्च कपीश्वर ।
सोहमार्यस्य रामस्य कृत्येस्मिन्ननुष्ठिते ।
सत्कारं प्रतिगृह्णीयां कथं वानरसत्तम ॥
अथ नष्टमदः श्रीमान् भयादाकुलितेन्द्रियः ।
प्रणम्य लक्ष्मणं राजा सुग्रीव इदमब्रवीत् ॥
समासतो वयं भृत्या रामस्य विदितात्मनः ।
सर्वं तत्प्रतियास्यामो यद्रामस्य चिकीर्षितं ।
अर्घ्यपात्रे च विधिवत् गृहीते लक्ष्मण त्वया ।
निषण्णे चासने दिव्ये ततो वक्ष्ये तव प्रियम् ॥
सोब्रवीदहमार्येण संदिष्टो वानरेश्वर ।
अकृतार्थेन सत्कारो न ग्राह्यस्ते कपेर्गृहे ॥
स त्वं शृणु समादेशमार्यस्याक्लिष्टकर्मणः ।
कुरु संचित्य च कपे यदि साध्विति मन्यसे ॥
ततः स्त्रीभिः परिवृतं स्थितमेवं कपीश्वरं ।
स्थित एवाब्रवीद्वाक्यं लक्ष्मणः परवीरहः ॥

११] अब्रवील्लक्ष्मणः क्रुद्धः सतारं शशिनं यथा ॥६॥ [६
सत्त्वाभिजनसंपन्नः सानुक्रोशो जितेन्द्रियः ।
१२] कृतज्ञः सत्यवादी च राजा लोके महीयते ॥७॥ [७
यस्तु राजा स्थितो धर्मे मित्राणामुपकारिणाम् ।
१३] मिथ्याप्रतिज्ञां कुरुते को नृशंसतरस्ततः ॥८॥ [८
N] पञ्च पश्वनृते[1] हन्ति दश हन्ति गवानृते । [N
१४पू] शतमश्वानृते हन्ति सहस्रं पुरुषानृते[2] ॥९॥ [९पू
१५पू] हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन् ।
N] सर्वं भूम्यनृते[3] हन्ति मा[4] स्म भूम्यनृतं वदेत् ॥१०॥ [N
१४उ] आत्मानं स्वजनं हन्ति पुरुषैः[5] पुरुषानृते । [९उ
१५उ] गवानृतेन तुल्यं हि पुरुषानृतमुच्यते ॥११॥ [N
१६उ] पूर्वं कृतार्थो मित्राणां न तत् प्रतिकरोति यः[6] ।
कृतघ्नः सर्वभूतानां स वध्यः[7] प्लवगेश्वर[8] ॥[9]१२॥ [१०
१७] गीतोऽयं ब्रह्मणा श्लोकः सर्वदेवैर्नमस्कृतः[10] ।
दृष्ट्वा[11] कृतघ्नं क्रुद्धेन तन्निबोध[12] प्लवङ्गम ॥१३॥[13] [११
१८] ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते तथा ।
निष्कृतिर् विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः॥१४॥ [१२

---

१. कै रा ल$_1$ ब म ल$_2$ श— पत्न्यनृते ।
२. ल$_1$ ब च—पुरुषानृती ।
३. ब—भूम्यनृती ।
४. कै रा ल$_1$ ब म ल$_2$ श— नात्मभूम्यनृतं ।
५. श—पुरुषान् ।
६. म—† प्रतिकरोषि यत् ।
७. कै रा ल$_1$ अ ब म ल$_2$ श— भवेत् ।
८. म—पुरुषाधमं ।
९. म—नास्ति ।
१०. अ—सर्वदैवनम० ।
म—‡ सर्वभूतनमस्कृता ।
११. कै रा ल$_1$ ब म ल$_2$ श च— † पृष्ट्वा कृतघ्नः ।
१२. कै रा ल$_1$ अ ब म ल$_2$ श च— सन्निबोध ।
१३. म—नास्ति ।

१९] कृतघ्नस्त्वं[1] नृशंसश्च मिथ्यावादी[2] च वानर ।
२०पू] पूर्वं कृतार्थो रामस्य[3] न[4] तत् प्रतिकरोषि यत् ॥१५॥[5] [२१
२४पू] न त्वां रामो विजानीते कृतघ्नं दुष्टचारिणम् । [१५उ
N] प्रमत्तश्चातिरक्तश्च[6] यथा स्यात् प्राकृतस्तथा ॥१६॥ [N
२४ उ] आत्मनश्च महाभाग्यात् पापः करुणवेदिना[7] ।
रामेण प्रापितो राज्यं त्वं दुरात्मा महात्मना ॥१७॥ [१६
२५] कृतं तु नाभिजानासि रामस्याक्लिष्टकर्मणः ।
अद्य संख्ये शितैर् बाणैर्हतो द्रक्ष्यसि[8] वालिनम् ॥१८॥ [१७
२६] उपकारो न कर्तव्यस्त्वद्विधानां महात्मभिः ।
२७पू] मूर्खानामकृतज्ञानां स्त्रीवशानां कदाचन ॥१९॥ [N
न स सङ्कुचितः पन्था येन वाली हतो गतः ।
३३ उ] समये तिष्ठ सुग्रीव मा वालिपथमद्य गाः ॥२०॥ [१८
२७ उ] 'को[10] हि' विज्ञानसंपन्नो दृष्टलोकपरावरः ।
प्रसज्जेत[11] कामभोगेषु यथा त्वमिह वानर ॥२१॥ [N
२८] लप्स्यसे सुमहद् दुःखं सर्वथा स्त्रीप्रसङ्गजम् ।
[12]मयेन हि यथा प्राप्तमसुरेण सुरेश्वरात् ॥२२॥ [N

---

१. कै रा ल१ ब म ल२ श—कृतघ्नश्च ।

२. भ—मिथ्याचारश्च ।

३. कै रा ल१ ब म श ल२—रामः स्यात् ।

४. ब—तत् । भ—यः ।

५. अ भ च—अतः परमधिकः पाठः—ननु राम(भ-नाम) कृतार्थेन त्वया रामस्य वानर । सीताया मार्गणे यत्नः कर्तव्यः कृकपांसन॥ सक्तो ग्राम्येषु भोगेषु पाप मिथ्याप्रतिश्रव॥

६. कै अ—† ०श्चातिरिक्तश्च ।

७. कै रा ल१ ब म ल२ श च—करुणवेदितः ।

८. भ—†द्रक्ष्यामि ।

९. अ भ च—०मैन्वगाः ।

१०. कै—कोपि ।

११. भ—प्रसक्तः ।

१२. कै रा—बलेन । ल१ ब म श भ—†मयेन ।

२९] नैव सत्यं प्रमाणं ते न[1] प्रतिज्ञा न सङ्गतम् ।
नैवं[2] पाणिप्रदानं ते दीप्यमाने विभावसौ ॥२३॥ [N

३०] सर्वथा वञ्चितो भ्राता मम दुष्टात्मना त्वया ।
ऋजुबुद्धिरनार्येण बुद्धि[3]मान् जिह्म[4]-बुद्धिना ॥२४॥ [N

३१] अवमानकृतो दोषो महान् मे हृदि वर्तते ।
उदयः सागरस्येव पर्वकाले महात्मनः ॥२५॥ [N

३२] क्षुद्रं नृशंसं दुर्वृत्तं स्त्रीप्रधानं च वानर ।
३३पू] अद्य[5] त्वां सायकैस्तीक्ष्णैर् नयामि यमसादनम् ॥२६॥ [N

तथा करोम्यहं तेऽद्य[5] सायकैर् मर्मभेदिभिः ।
N] अपरे[6]ऽपि यथा नैवावज्ञा[7]स्यन्ति हि[8] सौहृदम् ॥२७॥ [N

अयम[9]हमिह सत्पथादपेतं
चपलमतिं चपलस्व[10]भावदोषात् ।
अनृतमधुरभाषिणं कृतघ्नं
३५] प्रभुमपि चाग्रजवन् मथा[11]मि बाणैः ॥२८॥ [N

---

१. कै रा ब ल₂—न प्रज्ञातिर्न० ।
ल₁ श म—नास्ति ।
२. ल₁ श म—नास्ति ।
३. कै रा ल₁ अ ब म ल₂ श च—†०मानार्यबु० ।
४. अ भ च—अयं ।
५. ल₂—†तद्ये ।
६. कै—अपरे हि ।
७. भ—नैवमवज्ञास्यन्ति ।
८. कै रा ल₁ ब म श च—०हं हि ।
भ—अयविमिह ।
९. भ—चपलं स्वभाव० ।
१०. अ भ च—तमिह तवाग्र० ।
११. म—नयामि ।
ल₂—ममासि० ।

न यावदिक्ष्वाकुवरस्य कार्मुकाच्
च्युताञ् शरान् पश्यसि वज्रसन्निभान्।
तावत् सुखं नाम निषेवसे सुखी
N] न राम¹कोपं मनसा व्यपेक्षसे ॥२९॥ [१९

इत्यार्षे² रामायणे किष्किन्धा³काण्डे लक्ष्मणवाक्यं नाम
सप्तविंशः सर्गः ॥२७॥

---

१. अ भ च—रामकार्यं ।
२. ल₂—नास्ति ।
३. ल₁ ब म श—किष्किन्दा ।

## [त्रं–३५]=[ अष्टाविंशः सर्गः ]=[ दा–३५ ]

इति ब्रुवाणं सौमित्रिं प्रदीप्तमिव तेजसा[1] ।
१] अब्रवील्लक्ष्मणं तारा तारापतिनिभानना ॥१॥ [१
नैवं लक्ष्मण वक्तव्यं नायं परुषमर्हति ।
२] हरीणामीश्वरो[2]ऽश्लीलं तव वक्त्राद् विशेषतः ॥२॥ [२
नैवाकृतज्ञः सुग्रीवः न[3] शठो नापि दारुणः ।
३] नैवानृतकथो वीर नैवं[4] जिह्मविनिश्चयः ॥३॥ [३
उपकारं कृतं चैव नाप्ययं विस्मरिष्यति ।
रामलक्ष्मणयोर् वीर यदन्यैर् दुष्करं रणे ।
४] तव करिष्यति सौमित्रे इति मे मतिर् वीरहन्[5] ॥४॥ [४
रामप्रसादात् कीर्तिं च कपिराज्यं च शाश्वतम् ।
५] प्राप्तवानिह सुग्रीवो रुमां मां च परन्तप ॥५॥ [५
६पू] सदुःखः[6] शयितो नित्यं प्राप्येदं सुखमुत्तमम् ।
प्राप्तं कालं न जानीते विश्वामित्रो यथा मुनिः ॥६॥ [६
७] घृताचीकेलिसंसक्तो[8] दशवर्षाणि लक्ष्मण । [७पू
N] न विजानाति धर्मात्मा ग्राम्यभोगसुखे रतः ॥७[9]॥ [N
स हि प्राप्तं न जानीते कालं कालविदां[10]वरः ।
८] विश्वामित्रो महातेजाः किं पुनर् यः पृथग्जनः ॥८॥ [८

---

१. रा—तेजसम् ।
२. कै रा ल१—हरीणामीश्वरे० ।
भ—०श्वरोलीकं ।
३. कै ल१ब म ल२ शा—शठो नापि ना।
४. भ —न जिह्म इति निश्चयः ।
५. रा ल१ अ ब म ल२ श भ च—नास्ति ।
कै—कोषस्य च प्रान्तभागे विन्यस्तोऽप्ययमस्माभिस्तात्पर्यपूरणपरत्वान्मूल एव सन्निवेशितः ।
६. भ—स दुःखतापितो ।
७. रा—काले कालविदांवर ।
८. अ भ—घृताच्यां किल संसक्तो ।
९. रा—नास्ति ।
१०. ल१ ब म—०वर ।

दशवर्षगतस्यास्य[1] परिश्रान्तस्य लक्ष्मण ।
९] अवितृप्तस्य कामेषु रामः क्षमितुमर्हति ॥९॥ [९
न च रोषवशं वीर गन्तुमर्हसि लक्ष्मण ।
१०] निश्चयार्थमविज्ञाय सहसा प्राकृतो यथा ॥१०॥ [१०
सत्त्वयुक्ता हि पुरुषा स्त्वद्विधाः पुरुषर्षभ ।
११] अविमृश्य न रोषस्य सहसा यान्ति वश्यताम्[2]॥११॥ [११
धर्मज्ञस्य कृतज्ञस्य सततं[3] गुरुवर्तिनः ।
१२] त्वत्सकाशाद् विशेषेण नायं परुषमर्हति ॥१२॥ [N
पूर्वजस्य तव भ्रातू रामस्य रणमूर्धनि ।
१३] सखा परतरः सौम्यै[4] सुग्रीवो वानरेश्वरः ॥१३॥ [N
यथा रामस्तथा तेऽयं सुग्रीवो वानरेश्वरः[5] ।[6]
१४] पूजनीयश्च मान्यश्च रामस्यार्थे विशेषतः ॥१४॥ [N
प्रसादये त्वां धर्मज्ञ[7] सुग्रीवार्थे समाहिता ।
१५] महारोषसमुत्पन्नः संरंभस्त्यज्यतामयम्[8] ॥१५॥ [१२
स[9] रुमां मां धनं धान्यं कपिराज्यं गृहाणि च ।
१६] रामप्रियार्थं सुग्रीवस्त्यजेदपि[10] च जीवितम्[11] ॥१६॥ [१३
१७] कः शक्तस्तस्य देवस्य प्रियं कर्तुं[12] महात्मनः ॥१७॥ [N
स हि योग्यो महाबाहुरीदृशो[13] व सहस्रशः ।

---

१. भ—दशवर्षशतस्यास्य ।
२. ल₂—वाच्यताम् ।
३. ल₁ ब म ल₂ श—सहसा ।
४. म—सोथ ।
५. कै श—सुग्रीवोयं गुरुप्रियः ।
अ भ च—सुग्रीवोपि गुरुप्रियः ।
६. श—नास्ति ।
७. भ च—धर्मात्मन् ।
८. कै—१ त्यजतामयं ।
९. अ भ च—रुमां मां धनधान्यं च ।
१०. भ—०स्त्यजेदिति मतिर्मम ।
११. म—यः ।
१२. म—वक्तुं ।
१३. भ—० हुरीदृशान् ।
अ च—० रीदृशा ।

१८] प्रतिष्ठापयितुं राज्ये निहन्तुमपि वा पुनः ॥१८॥ [N

१९ उ] समन्वेष्यति सुग्रीवः सीतया सह राघवम् ।
शशाङ्कमिव रोहिण्या तं हत्वा रावणं रणे ॥१९॥ [१४

२०] यथा मयैव सुग्रीवो भार्यया रुमयैवं[1] च ।[2]
अचिरेणैव रामोऽयं सीतया राजयिष्यति ॥[3]२०॥ [N

२१ उ] यत् तु मे सौम्य विज्ञाप्यं श्रृणु तन्मे नरर्षभ ।
श्रूयते नरशार्दूल रावणस्य दुरात्मनः ॥२१॥ [N

२२] दश कोटिसहस्राणि लङ्कायां सन्ति राक्षसाः ।
अयुतानि च षट्त्रिंशत् सहस्राणि चतुर्दश ॥२२॥ [१५

२३] अहत्वा तान्[4] दुराधर्षान्[5] राक्षसान् कामरूपिणः ।
न शक्यो रावणो हन्तुं येन सा मैथिली हृता ॥२३॥ [१६

२४] नैव शक्यो(?क्या) रणे हन्तुमसहायेन सर्वथा[7] ॥२४॥

२५पू] राक्षसाः[6] क्रूरकर्माणः सुग्रीवेण विशेषतः । [१७

N] निहन्तव्याः सुबहवः सह वानरपुङ्गवैः ॥२५॥ [N

२५ उ] एतदाख्यातवान् वाली स ह्यभिज्ञो हरिः प्रभुः[9] ।

२६पू] आगमस्तु[10] न मे व्यक्तः श्रुत्वा चैतद्[11] ब्रवीम्यहम् ॥२६॥ [१८

२७ उ] तत्सहायनिमित्तं वै प्रेषिता हरिपुङ्गवाः ।

---

१. रा—रुमयापि ।

२. भ—
यथा मयैव सुग्रीवं समयोजद् रघूत्तमः ।
तथाऽकरिष्यत् सुग्रीवो रामं च सह मैथिलीम् ।

३. रा ल$_1$ अ ब म ल$_2$ श भ च—नास्ति ।

४. अ च—तांस्तु ।

५. अ च—दुर्धर्षान् ।
भ—सुदुर्धर्षान् ।
म—‡ सुराधर्षान् ।

६. ल$_2$—राक्षसो ।

७. कै रा ल$_1$ ब म ल$_2$ श—सर्वदा ।

८. श—† राक्षसान् ।

९. ल$_1$—प्रभोः ।

१०. म ल$_2$—आगमश्च ।

११. कै—च तद् ।

आनेतुं प्रवरान् युद्धे वानरान् वानरोपमान् ॥२७॥ [१९

२८] तांश्च प्रतीक्षमाणोऽयं विक्रान्तान् सुमहाबलान् ।
राघवस्यार्थसिद्धयर्थं नं निर्यातो हरीश्वरः ॥२८॥ [२०

२९] कृतां तु संज्ञा सौमित्रे सुग्रीवेण यथों पुरा ।
अद्य तैर्वानरैः सर्वैं रागन्तव्यं महाबलैः ॥२९॥ [२१

३०] ऋक्षकोटिसहस्राणि गोलाङ्गूलशतानि च । [२२पू
कोटिशश्चोपयास्यन्ति पृथिव्यां ये चरन्ति वै ॥३०॥ [N
आसमुद्रात् परायुक्ताः सागरद्वीपवासिनः ।

३१] अद्य त्वामुपयास्यन्ति जहि कोपमरिन्दम ॥३१॥ [२२ उ
तव वदनमिदं निरीक्ष्य रुष्टं
क्षतजनिभे नयने च भीमरूपे ।
हरिवरवनिता न यान्ति शान्तिं

३२] प्रथमभयस्य विशङ्किताः स्म सर्वाः ॥३२॥ [२३

इत्यार्षे रामायणे किष्किन्धाकाण्डे तारावाक्यं नाम
अष्टाविंशः सर्गः ॥ २८ ॥

---

१. भ—परवारणान् ।
२. कै रा ल१ ब म ल२— निर्यातोद्य ।
 श—निर्यातोद्य ।
३. भ—कृत्वा ।
४. रा—तथा ।
५. रा अ भ च—कण्य० ।
६. कै—वचनमिदं ।
 भ—हि मुखमिदं ।
७. भ—निशाम्य ।
८. भ—क्षतजनिभैर्नयनैर्निरीक्ष्यमाणं ।
९. रा अ भ च—हि शंकिताः ।
१०. ल२—नास्ति ।
११. ल१ ब म श—किष्किन्धा० ।
 भ—नास्ति ।

## [ ऊनत्रिंशः सर्गः ]



इत्युक्तः प्रश्रितं वाक्यं तारया धर्मसंहितम् ।
१] मृदुस्वभावः सौमित्रिः प्रतिजग्राह तद्–वचः ॥१॥ [१
तस्मिन् प्रतिगृहीते तु वाक्ये हरिगणेश्वरः ।
२] लक्ष्मणात् सुमहत्त्रासं क्लिष्टं माल्यमिवात्यजत् ॥२॥ [२
ततः कण्ठगतं माल्यं चित्रं बहुगुणं तदा ।
३] चिच्छेद विमदश्चासीत् सुग्रीवो वानरेश्वरः ॥३॥ [३
स लक्ष्मणं भीमैरूपं सर्ववानरसम्मतः ।
४] अब्रवीत् सम्मतं वाक्यं सुग्रीवः प्रीतिवर्धनम् ॥४॥ [४
प्रनष्टा श्रीश्च कीर्तिश्च कपिराज्यं च शाश्वतम् ।
५] रामप्रसादात् सौमित्रे पुनः प्राप्तमिदं मया ॥५॥ [५
न शक्तस्तस्य देवस्य ख्यातस्य स्वेन कर्मणा ।
६] यादृशं तादृशं वाऽपि प्रतिकर्तुमहं पुनः ॥६॥ [६
सीतां प्राप्स्यति धर्मात्मा वधिष्यति च रावणम् ।
७] सहायमात्रेण मया राघवः स्वेन तेजसा ॥७॥ [७
सहायकार्यं किं तस्य येन सप्त महाद्रुमाः ।
८] शैलाश्च वसुधा चैव बाणेनैकेन दारिताः ॥८॥ [८
धनुर्विस्फारयान (?ण-)स्य तस्य शब्देन लक्ष्मण ।
९] सशैला कम्पिता भूमिः सहायैस्तस्य किं भवेत् ॥९॥ [९

---

१. कै रा ल१ ब म ल२ श— सुमहान्तसाद् गंधं माल्यानि चात्यजत् ।
२. कै रा ल१ अ ब म ल२ श च— विमदश्चासात् ।
३. रा अ भ च—भीमबलं ।
४. ल१ ब म—†प्रणष्टा ।
५. भ—०राज्यमिदं मया ।
६. भ—प्राप्तं च शाश्वतं ।
७. ल१ ब म—सर्वमहा० ।
ल२—सर्वे महा० ।
८. रा—०स्फारमाणस्य ।

अनुयात्रां हि रामस्य करिष्येऽहं नरर्षभ ।
१०] गच्छतो रावणं हन्तुं वैरिणं सपुरःसरम् ॥१०॥ [१०

यदि किञ्चिद् व्यतिक्रान्तं विश्वासात् प्रणयेन वा ।
११] प्रेष्यस्य क्षमितव्यं मे[2] न कश्चिन्नापराध्यति ॥११॥ [११

इति सर्म्यग् ब्रुवाणस्य सुग्रीवस्य महात्मनः ।
१२] अभवल्लक्ष्मणः प्रीतः प्रेम्णा चेदमुवाच ह ॥१२॥ [१२

धर्मज्ञस्य कृतज्ञस्य संग्रामेष्वनिवर्तिनः ।
१३] उपपन्नं च युक्तं च सुग्रीवस्य सुभाषितम् ॥१३॥ [१६

दोषज्ञः सति सामर्थ्ये कोऽन्यो भाषितुमर्हति ।
१४] वर्जयित्वा मम ज्येष्ठं भ्रातरं त्वां च वानर ॥१४॥ [१७

सदृशस्त्वं च रामस्य सत्त्वेनाभिजनेन च ।
१५] वयस्यो दैवतैर्दत्तश्चिराय हरिपुङ्गव ॥१५॥ [१८

सर्वथा तु मम भ्राता सनाथो रघुनन्दनः ।[10]
१६] त्वया नाथेन सुग्रीव प्रस्थितेन विशेषतः ॥१६॥ [१३

यस्ते स्वभावः सुग्रीव यच्च शौर्यमनुत्तमम् ।
१७] अर्होऽसि कपिराज्यस्य श्रियं भोक्तुमनुत्तमाम् ॥१७॥ [१४

---

१. म—सपरस्परं ।
   व—स्वपुरःसरं ।
२. कै ल$_2$—वै ।
३. कै ल$_1$ म—किंचिन्ना० ।
   म—कस्मिन्नाप० ।
४. अ म च—तस्य ।
५. ल$_2$—कृतार्थस्य ।
६. कै रा ल$_1$ व म ल$_2$ श भ च—दोषज्ञस्य च ।
७. कै रा ल$_1$ अ व म श—वं ।
   ल$_2$ च—त्वं ।
८. भ—|भातिश्चि० ।
९. ल$_2$—स ।
१०. भ—नास्ति ।
११. रा व म—प्रियां भोक्तुमनंतरं ।
   ल$_1$ अ ल$_2$ श भ च—प्रियं भोक्तुमनुत्तमम् ।

सहायेन च सुग्रीव त्वया रामः प्रतापवान् ।
१८] हनिष्यति रणे शत्रुमचिरान्नात्र संशयः ॥१८॥ [१९
किन्तु शीघ्रतरं वीर निष्क्रम्य त्वं मया सह ।
१९] आश्वासय वयस्यं च भार्याहरणदुःखितम् ॥१९॥ [१९
यच्च शोकाभिभूतस्य श्रुत्वा रामस्य भाषितम् ।
२०] मया त्वं परुषाण्युक्तस्तानि मे सोढुमर्हसि ॥२०॥ [२०
तमोवशगतानां हि क्षन्तव्यं स्वच्छचेतसा ।
N] अतो दुरुक्तं सुग्रीव सौहार्दात् क्षन्तुमर्हसि ॥२१॥ [N
महात्मनस्तस्य हि शोकविक्लवं
निशम्य वाक्यं मम मन्युरुद्धतः ।
ततो मया त्वं कुपितेन मार्दवं
२१] विमुच्य तीक्ष्णानि वचांसि भाषितः ॥२२॥[N

इत्यार्षे रामायणे किष्किन्धाकाण्डे लक्ष्मणसुग्रीववाक्यं नाम

ऊनविंशः सर्गः ॥ २९ ॥

---

१. कै ब—०च्छतेजसा ।
भ—स्वेन चेतसा ।
२. ब—अहो ।
३. ल१—नास्ति ।

४. ल ब म श—किष्किन्दा० ।
भ—नास्ति ।
५. ल ब म—लक्ष्मणवाक्यं ।
भ च—०णसुग्रीवयो० ।

एवमुक्तस्तु सुग्रीवो लक्ष्मणेन महात्मना ।
१] हनूमन्तं स्थितं पार्श्वे सचिवं वाक्यमब्रवीत् ॥१॥ [१
महेन्द्रे मलये सह्ये कैलासशिखरे तथा ।
२] मन्दरे पार्श्वगिरिषु पञ्चालेषु च संश्रितान् ॥२॥ [२
तरुणादित्यवर्णेषु भ्राजमानेषु सर्वशः ।
३] पर्वतेषु समुद्रेषु पश्चिमायां तथा दिशि ॥३॥ [३
आदित्यभवने चास्ते गिरौ चादित्यसन्निभाः ।
४] पद्मचन्दनसङ्काशाः संश्रिता हरिपुङ्गवाः ॥४॥ [४
अञ्जनाम्बुदसङ्काशाः कुञ्जरप्रतिमौजसः ।
५] अञ्जने पर्वते चैव वसन्ति हरियूथपाः ॥५॥ [५
हरितालगुहाशय्या वानराः कनकप्रभाः ।
६] मेरुपार्श्वशयाश्चैव ये च धूम्रगिरिश्रिताः ॥६॥ [६
मनःशिलाधातुगिरिं संश्रिता ये च मन्दरम् ।
७] बहवो वानराः शूराः सन्ध्याऽभ्रसमवर्चसः ॥७॥ [N
तरुणारुणवर्णाश्च पर्वते ये महारुणे ।
८] पिबन्ति मधु मैरेयं भीमवेगाः प्लवङ्गमाः ॥८॥ [७

---

१. ल₂—नास्ति ।
२. म—महेन्द्रम० ।
३. म—†मन्दारे ।
४. कै रा ल₁ ब म ल₂ श—पांचालेषु ।
५. ल₁—संस्थितान् ।
६. रा अ म च—समुद्रांते ।
७. कै रा अ म च—तु ये ।
८. म—नास्ति ।
९. म—†०रप्रतिमौजसा ।
१०. ल₂—ये वसन्ति ।
११. म—†मनश्शलाधा० ।
१२. कै रा ल₁ ब म ल₂—†मान्दिरं ।
१३. रा ल₁ ब—†महारणे ।
१४. रा—भीमरूपाः ।

वनेषु सुविशालेषु सुगन्धिषु महत्सु च ।
९] तापसानां च पुण्येषु वनान्तेषु समन्ततः ॥९॥ [८
तान् समानय क्षिप्रं वै[1] पृथिव्यां सर्ववानरान् ।
१०] सामदानादिभिर् वाक्यैरनु[2]प्रेषय वानरान् ॥१०॥ [९
प्रेषिताः प्रथमं दूता महाकाया महाबलाः[3] ।
११] त्वरणार्थं तु भूयस्त्वं हरीन् संप्रेषयाशु च ॥११॥ [१०
ये[4] च प्रसक्ताः कामेषु दीर्घसूत्राश्च वानराः ।
१२] इहानयस्व तान् सर्वान् शीघ्रं त्वं मम शासनात् ॥१२॥ [११
अहोभिर्दशभिस्तूर्णं ये चागच्छन्ति न त्विह ।
१३] हन्तव्यास्ते दुरात्मानो राजशासनदूषकाः ॥१३[5]॥ [१२
१४पू] शतान्यथ सहस्राणि कोट्यश्च मम शासनात् ।[5] [१३पू
N] हरीणामागमिष्यन्ति दूतसंप्रेषणादिह ॥१४॥ [N
मेघपर्वतसङ्काशाश् छादयन्त इवाम्बरम् ।
१५] घोररूपाः कपिश्रेष्ठा यान्तु मच्छासनाद्[6] दिशः ॥१५॥ [१४
ते गतिज्ञा गतिं ज्ञात्वा पृथिव्यां सर्ववानराः ॥१६॥
१६] आनयन्तु हरीन् भीमान् हरयः शासनान्मम । [१५
तस्य वानरराजस्य श्रुत्वा वायुसुतस्तदा ।
१७] दिशं दिशं सुविक्रान्तान् प्रेषयामास वानरान् ॥१७॥ [१६
तेऽपदं[7] विष्णुना क्रान्तं पतन्ति ज्योतिषां गणम्[8] ।

---

१. अ ल$_2$—वै क्षिप्रं ।
२. भ—कस्यैरनु० ।
३. अ—महाजवाः ।
४. अ भ च—ये प्रसक्ताश्च ।
५. कै रा ल$_1$ ब भ ल$_2$ श—नास्ति ।
१२ श—१३$\frac{1}{2}$ श्लोकयोरवसानयो-
रभेदात् सम्भ्रमजन्यः पाठभ्रंशः स्यात् ।
६. अ—०सनाद्दिशं ।
७. कै रा—०नाक्रान्ताः ।
अ—| ०क्रीतं ।
ब—विष्णुपदमाक्रान्ताः ।
८. अ भ च—मार्तिं । श—गणान् ।

१८] प्रयाताः प्रहिता राज्ञा हरयः खं क्षणेन ते ॥१८॥ [१७
तान् समुद्रेषु गिरिषु वनेषु च सरित्सु च ।
१९] वानरो वानरान् सर्वान् रामहेतोरनाययेत ॥१९॥ [१८
मृत्युकालसमस्याज्ञां कपिराजस्य वानराः ।
२०] श्रुत्वैव संप्रतस्थुस्ते सुग्रीवस्य भयात् ततः ॥२०॥ [१९
अस्तं गच्छति यत्रार्कः तस्मिन् गिरिवरे रताः ।
२२] तप्तहेमसमाभासस्तस्मात् कोट्यो दश स्मृताः ॥२१॥ [२१
ततस्त्वञ्जनसङ्काशा गिरौ सह्ये मनोजवाः ।
२१] तिस्रः कोट्यः प्लवङ्गानामागता यत्र राघवः ॥२२॥ [२०
कैलासशिखरेभ्यस्तु सिंहकेसर—वर्चसाम् ।
२४] सप्त कोटिशतान्येव वानराणामुपागमन् ॥२३॥ [२२
फलमूलरसंज्ञा ये[8] हिमवन्तमुपाश्रिताः ।
२५] तेषां कोटिसहस्राणां सहस्रं समुपागतम् ॥२४॥ [२३
अङ्गारशिखराभाणां भीष्माणां भीमकर्मणाम् ।
२६] विन्ध्याद् वानरकोटीनां सहस्रं भुवि[12] चोद्यतम ॥२५॥ [२४

---

१. रा ल$_1$ ब म ल$_2$ श च भ—ते ।
२. अ भ च—०तोरनोदयत् ।
ब—०तोरनामयत् ।
म—०तोरनाययत ।
३. ल$_1$—† संहतस्थुस्ते ।
४. कै रा ल$_1$ ब म ल$_2$ श—नो सूर्ये ।
५. रा अ श भ च—०भासास्त० ।
६. ल$_1$ ब म—कोव्य(?)शतान्येवं ।
७. कै रा म च—† ०मुपागतं ।
ल$_1$—† ०मुपागताम् ।
८. कै रा ब म—०मूलकसञ्ज्ञा ।
ल$_1$ कसंज्ञा । ल$_2$—† ०सांज्ञा ।
९. म—ते ।
१०. भ च—०पागमत् ।
म ल$_2$ श—नास्ति ।
११. म ल$_2$ श—नास्ति ।
भ—०माणां ।
१२—अ भ च—नव ।

क्षीरोदवेलानिलयास्[1] तमालवनग[2]न्धिनः ।

२८] नारिकेला[3]शिनः सौम्यास्तेषां संख्या न विद्यते ॥२६॥ [२५

वनेभ्यः सागरान्तेभ्यः[4] सरिद्भ्यश्च वनौकसः ।

२९] वानरास्[5] तूर्णमभ्येत्य रुन्धन्[6]तीव दिवाकरम् ॥२७॥ [२६

ये तु त्वरयितुं याता वानराः सर्ववानरान् ।

३०] ते[7] वीरा हिमवच्छैले[8] ददृशुर् महदद्भुतम् ॥२८॥ [२७

तस्मिन् गिरिवरे रम्ये[9] यज्ञो माहेश्वरः[10] पुरा[11] ।

३१] सर्वदैवतसन्तोषी बभौ विप्रमनोहरः ॥२९॥ [२८

३२पू] अन्नविष्य[12]न्दजातानि मूलानि च फलानि च ।

अमृतस्वादकल्पा[13]नि ददृशुस्तत्र वानराः ॥३०॥ [२९

N] ततः[14] समभवद् दिव्यं फलमूलं[15] मनोहरम् ।

यः कश्चित् सकृदश्ना[16]ति मांसं भवति निःक्षुधः[17] ॥३१॥ [३०

---

१. ल$_2$—०लानियतास् ।

२. अ—०लवतग० ।

३. कै अ च—नालिकेरा० ।

भ—नालिकेराशनाः ।

४. भ—पर्वतेभ्यश्च ।

५. अ च—| वानरं पुनरभ्येत्य ।

भ—वानराः पुनरभ्येत्य ।

६. रा ल$_1$—|रुंधतीव ।

७. ल$_2$—

अत आरभ्य ३२तमश्लोकं यावत्पाठो नास्ति ।

८. कै रा ल$_1$ ब म ल$_2$ श—

०च्छैलाद् ।

९. भ—पुण्ये ।

१०. भ—०रस्सदा ।

म श—०रःस्मृतः ।

११. भ—अतः परमधिकः पाठः—

गौरीपदानि वेदी च तपोवनमनुत्तमं ।

१२. भ—अन्नविछंद० ।

श—अन्विष्यन्दभैजातानि ।

१३. ब—|०तस्वादुकल्पाणि ।

कै रा ल$_1$ अ ब ल$_2$ श भ च—

०तस्वादुकल्पानि ।

१४. भ—यदन्नमभवद् ।

१५. कै रा ब म श—फलमूलमनो०

भ—फलमूलं मनोरमं ।

१६. भ—सकृदद्याच्च ।

१७. भ—समं भवति तर्पितः ।

N] तानि दिव्यानि मूलानि फलानि[1] च फलाशिनः ।[2]
३२ उ] औषधानि[4] च दिव्यानि प्रगृह्य हरियूथपाः ॥३२॥ [३१
तस्माद् भगवतो यज्ञात् कुसुमं च मनोहरम् ।
३३] आनिन्युर् वानरा गत्वा सुग्रीवहितकारिणः[5] ॥३३॥ [३२
ते तु सर्वे हरिवराः पृथिव्यां[6] सर्ववानरान्[7] ।
३४] सञ्चोदयित्वा[8] त्वरिता जवेनाजग्मुरग्रतः ॥३४॥ [३३
ते तु तेन मुहूर्तेन वानराः शीघ्रविक्रमाः[9] ।
३५] किष्किन्धां[10] समनुप्राप्ताः सुग्रीवो यत्र वानरः ॥३५॥ [३४
ते गृहीत्वौषधीर् दिव्याः फलमूलं च वानराः[11] ।
३६] तं प्रतिग्राहयामासुर्[12] वचनं चेदमब्रुवन्[13] ॥३६॥ [३५
सर्वे परिश्रिताः[14] शैलान्[15] समुद्रांश्च[16] वनानि च ।
३७] पृथिव्यां वानराः सर्वे शासनादुपयान्ति ते ॥३७॥ [३६
ततः प्रहर्षमगमत् सुग्रीवो वानरस्तदा[17] ।

---

१. भ—जलानि ।
२. ब—+च फलाशनः ।
म—फलशालिनः ।
३. श—नास्ति ।
४. कै रा ल१ ब म श—+औषधानि ।
५. भ—०चाप्रियकाम्यया ।
६. च—पृथिव्याः ।
७. ल२—नास्ति ।
२६ तम—३२ तमयोरवसानसाम्य-जन्यः २७ तमादि—३२तमांतः पाठभ्रंशः ।
८. अ च—संवादयित्वा ।
९. भ—शीघ्रगामिनः ।
१०. ल१ ब म ल२ श—किष्किन्धां ।
११. म—नास्ति ।
१२. कै रा ल१ अ ब म ल२ श च—संप्रति० ।
१३. ल२—+० मब्रवीत् ।
१४. म—+ परिश्रुताः ।
भ—परिगताः ।
१५. ल१ अ ब—शैलाः ।
१६. अ भ च—समुद्राश्च ।
१७. म—ततः प्रहर्षोऽभूत्तस्य सुग्रीवस्य महात्मनः ।

३८] प्रतिजग्राह च[1] प्रीतस्तेषां सर्वमुपायनम् ॥३८॥[2] [३७

प्रतिगृह्य तु तत् सर्वमुपायनमनुत्तमम् ।

स३८,१ वानराणामुपागम्य सान्त्वयित्वा[3] हरीश्वरः ॥३९॥ [३८

विसर्जयित्वा च[4] हरीञ् शूरांस्तान् कृतकर्मणः ।[5] [३८पू

२] मेने कृतार्थमात्मानं[6] राघवं च महाबलम्[7] ॥४०॥ [३८।२उ

इत्यार्षे रामायणे किष्किन्धाकाण्डे[8] वानरोद्योगो[9] नाम
त्रिंशः सर्गः ॥ ३० ॥

---

१. अ म—सुप्रीतस्ते० ।

२. म—एतावतैव सर्गोऽयं समाप्तो भवति। 'प्रतिगृह्य' त्याद्यवशिष्टेन श्लोकद्वयेन चोत्तरः सर्गः प्रारभ्यते ।

३. च—† ०यित्वा च ।

४. ब—तु ।

५. म—वानरान् सांत्वयित्वा च विससर्ज कपीश्वरः ।
स विसर्ज्य ततः सर्वान् कपींस्तत् कृतकर्मणः ।

६. $ल_2$—कृतार्थं ।

७. कै रा $ल_1$ ब—महाबलः ।

८. ब $ल_2$—नास्ति ।
$ल_1$ म श—०णे किष्किन्धा० ।

९. अ च—उद्योगे ।
म—वानरसैन्यप्रवेशो ।

६उ] अथ राजा स सिद्धार्थः सुग्रीवः प्लवगेश्वरः । [स.४०,१पू
रामं दिदृक्षुस् त्वरितं प्रस्थानं समरोचयत् ॥१॥ [N

७] समाहूय महाशूरान् सर्वांस्तान् हरियूथपान् ।
सुग्रीवो मन्त्रयामास लक्ष्मणेन च धीमता ॥[3]२॥ [N

८] हरिसैन्यमिदं प्राप्तमविघ्नेन समन्ततः ।
समागच्छन्ति चाद्यापि हरयो गिरिचारिणः ॥३॥ [N

९] अनुरक्ताश्च तुष्टाश्च हरियूथपयूथपाः ।
प्राप्ता ये चेह बलिनस्तान् न संख्यातुमुत्सहे ॥४॥ [N

१०] मुख्यैर्न कपिसैन्येन सर्वेण सहवानराः ।
माल्यवन्तं गिरिं गत्वा पश्यामो लक्ष्मणाग्रजम् ॥५॥ [N

११] प्रीतिमेष्यति सुव्यक्तं दृष्ट्वा च हरिवाहिनीम् ।
सर्वं युक्तं समालक्ष्य मन्युं त्यक्ष्यति मत्कृते ॥६॥ [N

१२] इति[10] मत्वा प्रयास्यामि स्वयमेव कृताञ्जलिः ।
लक्ष्मणं पुरतः कृत्वा प्रसादयितुमीश्वरम् ॥७॥ [N

१३] दह्यमानेन चार्येण प्राणान् राज्यं तु मोहवे (?)।
तारा प्रदत्ता दयिता हत्वा वालिनमाहवे ॥८॥ [N

---

१. भ—अव्यवहितपूर्वसर्गान्तगतं श्लोकद्वयमादौ पठति।तु० ३०,३९–४०
२. भ च—त्वरितः ।
३. श म—नास्ति ।
४. कै रा ल१ ब म श —+०गिरिचारिणः ।
५. रा—+शक्ता ।
६. रा अ च—+ सुखेन ।
७. श—भरताग्रजं ।
८. म—दृष्ट्वा च राघव (वो?) ।
श—दृष्ट्वा च रामो मे ।
भ—सुव्यक्तं दृष्ट्वैव ।
९. अ भ च—मां चोयुक्तं ।
१०. अ—अथवाहं गमिष्यामि ।
११. कै रा अ श भ च—प्राणा ।
१२. ल१ ब म ल२ श—नावहे ।

१४] पश्याम्येवं हि काकुत्स्थं शरण्यमरिमर्दनम् ।
जाज्वल्यमानं कोपेन दिधक्षुमिव पावकम् ॥९॥ [N

१५] स दृष्ट्वा लक्ष्मणं मां च कृताञ्जलिपुटौ स्थितौ ।
प्रसादं यदि गच्छेत सरिद् वै शारदीव हि ॥१०॥ [N

१६] तदा वीक्ष्याभयं दद्याद् यद् भवेद् गुणवत्तरम् ।
तत् संप्रधार्य मनसा समनुज्ञातुमर्हसि ॥११॥ [N

१७] तस्य तद् वचनं श्रुत्वा हनूमान् मारुतात्मजः ।
हेतुमद् ह्लादकं वाक्यं सुग्रीवमिदमब्रवीत् ॥१२॥ [N

१८] न लक्ष्मणे श्रिते[3] रामः सुग्रीवे प्रहरिष्यति ।
राघवः स परामर्षी धर्मात्मा धर्मवत्सलः ॥१३॥ [N

१९] शरण्यः सततं राजन् शरणागतसौहृदः ।
सुप्रसादोऽल्पदोषश्च कर्ता चैवार्थधर्मयोः ॥१४॥ [N

२०] एवं रामो महात्मा स महेन्द्रसदृशो गुणैः ।
न पापं विद्यते तस्मिंस्तस्माद् गच्छस्व मा चिरम् ॥१५॥ [N

२१] स लक्ष्मणं भीमबलं सर्ववानरसंमतः ।
अब्रवीत् प्रश्रितं वाक्यं सुग्रीवः संप्रहर्षयन् ॥१६॥ [३ पू

२२] किष्किन्धाया विनिष्कासस् तवैं लक्ष्मण रोचते । [३ उ

२३पू] एवं त्वामनुगच्छामि[12]ः स्थेयं त्वच्छासने मया॥[11] १७॥ [९

---

१. कै रा ल$_1$ ब म ल$_2$ श भ च—पश्यामि न ।
२. अ भ च—सरितः ।
३. कै रा ल$_1$ ब म ल$_2$ श—स्थिते ।
४. कै रा ल$_1$ अ ब म ल$_2$ श च—शरण्ये ।
५. कै रा ल$_1$ अ ब म ल$_2$ श च—शरण्यः स्थितसौ० ।
६. म श—।०र्थदोषयोः ।
७. भ—०रमासौ ।
८. भ—समुद्रसदृशो ।
च—महोदस० ।
९. रा अ भ च—भीमबलः ।
१०. ल$_1$ ब म ल$_2$ श—किष्किंदाया ।
११. ल$_1$—नास्ति । त्रुटितः ।
१२. भ च—भवतु गच्छामः ।

तमेवमुक्त्वा सुग्रीवो लक्ष्मणं शुभलक्षणम् ।
२४] विसर्जयामास तदा तारां ताश्चैव योषितः ॥१८॥ [६
प्रविष्टायां तु तारायां तस्यामन्तःपुरं तदा ।
२५] केऽत्रेत्युवाच हरिपः सुग्रीवः सुमहाबलः ॥१९॥ [N
N] वानराश्चाब्रुवंस्तत्र इमे स्मो वयमित्यथ । [N
तानुवाच स सुग्रीवः प्रांजलीन् समुपागतान् ।
२७] उपस्थापयत क्षिप्रं शिबिकामिह वानराः ॥२०॥ [९
सुग्रीववचनं श्रुत्वा हरयो जातसंभ्रमाः ।
२८] उपानयन् महारत्नां शिबिकां प्रियदर्शनाम् ॥२१॥ [१०
तामुपस्थापितां दृष्ट्वा शिबिकां वानराधिपः ।
२९] लक्ष्मणारुह्यतां क्षिप्रमिति सौमित्रिमब्रवीत् ॥२२॥ [११
इत्युक्त्वा काञ्चनं यानं सुग्रीवः सूर्यसन्निभम् ।
३०] बृहद्भिर् हरिभिर् युक्तमारुरोह सलक्ष्मणः ॥२३॥ [१२
पाण्डुरेणातपत्रेण ध्रियमाणेन वल्गुना ।
३१] शुक्लैश्च बालव्यजनैर् धूयमानैस्ततस्ततः ॥२४॥ [१३
N] शंखभेरीनिनादैश्च वन्दिभिश्चाभिनन्दितः ।
निर्ययौ प्राप्य सुग्रीवो राजश्रियमनुत्तमाम् ॥२५॥ [१४
३२] स वानरशतैर् घोरैर् बलिभिः शस्त्रपाणिभिः ।
संवृतो निर्ययौ तत्र यत्र रामो महाबलः ॥२६॥ [१५
N] सोऽभ्यगच्छत् तदा रामं दिव्याभरणभूषितः ।

---

१. भ च—शुभलक्ष्मणं ।
२. अ भ च—कोत्रे० ।
३. कै रा ल, ब म ल, शा—स्म ।
४. रा—१ उपस्थापयित ।
५. कै अ म स च—महारत्नं ।
६. म—ध्रियमाणेन ।
च—प्रेर्यमाणेन ।
७. अ च—संवृतोभिययौ ।
८. ल, —०रणभूषितं ।

काञ्चनीं शिविकां त्यक्त्वा पद्भ्यामेव प्लवंगमः[1] ॥२७॥ [N

४८] स रामं शिरसा भूमौ प्रणम्य हरिपुंगवः ।

उपविश्याभ्यनुज्ञातः प्राञ्जलिर् वाक्यमब्रवीत ॥२८॥[N

४९] प्रनष्टां[1] श्रीश्च कीर्तिश्च कपिराज्यं च शाश्वतम् ।

त्वत्प्रसादान्महाबाहो पुनः प्राप्तमिदं मया ॥२९॥ [२६पू

५०] नरदेवस्य[2] भर्तुश्च मित्रस्य जयतां वर । [२६

कृते न प्रतिकुर्याद्यः[3] पुरुषाणां स[4] दूषकः[5] ॥३०॥ [२७

५१] गता वानरमुख्या मे शतशः शत्रुकर्षण[6] ।

प्राप्ताश्चादाय बलिनः पृथिव्याः सर्ववानरान् ॥३१॥ [२८

N] प्रकर्षेण च संप्राप्ता बलिनोऽतुलविक्रमाः ।

महाकायाः पृथिव्यां ये[7] वानराः समुपागताः ॥३२॥ [N

५२] ऋक्षाश्चावहिता[8] घोरा गोलांगूलाश्च राघव ।

कान्तारवनदुर्गाणामभितो[9] भीमविक्रमाः ॥३३॥ [२९

५३] देवगन्धर्वपुत्राश्च वानराः कामरूपिणः ।

स्वैः स्वैः परिवृताः सैन्यैः पथि तिष्ठन्ति राघव ॥३४॥ [२९

---

१. ल$_1$ ब म—प्रणष्टा ।

२. अ भ च—तव देवस्य ।

३. कै रा ल$_2$ अ ब म ल$_2$ श च—०र्यां च ।

४. कै रा ल$_1$ अ ब म ल$_2$ श च—च ।

५. कै ल$_1$ श—दूरतः ।

रा—दूषणं । ल$_1$ ब म—माननां ।

६. कै रा ल$_1$ ब म ल$_2$ श—

आगता राम मुख्या मे शतशश्च सहस्रशः ।

प्रकर्षेण च संप्राप्ता बलिनोतुलविक्रमाः ॥

च—आगता हरिमुख्या मे शतशश्च स० ।

प्रकर्षेण संप्राप्ताश्च सर्वे वै वरवालिनः ।

७. च—पृथिव्यां वच सर्वे च ।

अ—नास्ति ।

८. ल$_1$ ब—ऋक्षाश्चावाहिता ।

अ—ऋक्षाश्चैवागता ।

म—दक्षाश्चावाहिता ।

भ—ऋक्षाबलिता ।

९. अ भ च—०दुर्गाणामभिज्ञा ।

५४] शतैः शतसहस्रैश्च[1] कोटिभिरयुतैरपि ।
५५पू] प्रयुतैरागमिष्यन्ति संकुलैर्[2] हरियूथपाः ॥३५[3]॥ [३२
५६ उ] आगमिष्यन्ति ते राजन् महेन्द्रसमविक्रमाः ।
मेरुमन्दरसंकाशा विन्ध्यशैलकृतालयाः ॥३६॥ [३३
५७] ते त्वामभिगमिष्यन्ति रावणं ये[4] सहायनेम् ।
५८ उ] निहत्य हरयः सीतामानयिष्यन्ति मैथिलीम् ॥३७॥ [३४

इत्यार्षे[5] रामायणे[6] किष्किन्धाकाण्डे सुग्रीववाक्यं नाम
एकत्रिंशः सर्गः ॥ ३१ ॥

---

१. म—शतैश्च शतसाहस्रैः ।
२. म—संकुभिश्च परंतपाः ।
३. म—अतः परमधिकः पाठः—
अर्बुदैरर्बुदशतैर्लक्षैरन्यैश्च वानराः ।
समुद्रैश्च परार्ध्यैश्च हरीणां हरियूथपाः॥
४. कै रा $ल_1$ ब म श—घातिनो हि ये ।
$ल_2$—घातिनो दिवि । च—घातनायक ।
५. $ल_2$—नास्ति ।
६. $ल_1$ ब म $ल_2$ श—किष्किन्धा० ।
भ—कथाने ।

आगतांश्च प्रविष्टांश्च पृथिव्यां सर्ववानरान् ।[1]
१] दृष्ट्वा प्रहृष्टः सुग्रीवो राजा राघवमब्रवीत् ॥१॥[2]
N] आगताश्च निविष्टाश्च[3] बलिनः कामरूपिणः ।
वानरेन्द्रा महाकाया ये मद्विषयवासिनः ॥२॥ [२
२] त इमे बहुसाहस्रैरनीकैर्भीमविक्रमैः । [३,पू
३पू] आगता वानराः शूरा दैत्यदानवसन्निभाः ॥३॥ [३,७उ
६उ] यन्मन्यसे नरव्याघ्र प्राप्तकालं तदुच्यताम् ।
N] स्वसैन्यं[4] मानवश्रेष्ठ निवेशयितुमर्हसि ॥४॥ [७उ
८उ] इति ब्रुवन्तं सुग्रीवं रामो दशरथात्मजः ।
९पू] बाहुभ्यां संपरिष्वज्य प्रीतो[5] वचनमब्रवीत् ॥५॥ [९
११ उ] नाहमस्मिन् प्रभुः कार्ये वानरेन्द्र सलक्ष्मणः ।
१२पू ] त्वमस्य हेतुः[6] कार्यस्य त्वं गतिर्हि[7] मतो[8] मम ॥६॥ [१२
सुहृद्[9]विनीतो विक्रान्तः प्राज्ञः[10] कर्मविशेषवित् ।
१३] भवानस्मद्धिते[11] युक्तः स्वकृता[12]र्थोऽर्थविक्रमः ॥७॥ [१४

---

१. ल$_{2}$ ब—नास्ति ।
२. कै अ ल$_{1}$ म श रा च—नास्ति ।
३. ल$_{1}$—+ विनिष्टाश्च ।
म—+ विनष्टाश्च ।
४. रा—+ सुसैन्यं ।
५. म—प्रीतिवचनं० ।
६. ल$_{2}$म च—+हेतोः ।
७. कै अ ल$_{1}$ ल$_{2}$ ब म श रा च—गतिर्हि ।
८. कै अ ल$_{1}$ ल$_{2}$ ब म श रा च—भवतो ।
श—+ भरतो ।
९. कै ल$_{2}$म श रा—+सुहृद्भिमीतो ।
म ० दृद्वितीयो ।
१०. म—प्रज्ञः ।
११. कै ल$_{1}$ ल$_{2}$ ब श रा—०द्धितयुतः ।
अ भ च—०द्विधियुतः ।
१२. अ म श—सुकृता ० ।

९उ] ज्ञायतां सौम्य वैदेही यदि जीवति वा न वा ।
स च देशो महाप्राज्ञ यस्मिन् वसति रावणः ॥८॥ [१०
१०] अभिगम्य तु वैदेहीं निलयं रावणस्य च[1] ।
११पू] प्राप्तकालं विधास्यामि तस्मिन् काले त्वया सह॥९॥ [११
एवमुक्तस्तु सुग्रीवो विनतं[2] नाम यूथपम् ।
१४] अब्रवील्लक्ष्मणस्याग्रे रामस्य वनगोचरः ॥१०॥ [१५
वृतः शतसहस्रेण वानराणामरिन्दम[3] ।
१७] अधिगच्छ दिशं[4] पूर्वां सशैलवनकाननाम् ॥[5]११॥ [१७
तत्र सीतां तु वैदेहीं निलयं रावणस्य च ।
१८] मार्गध्वं गिरिदुर्गेषु[6] वनेषु च नदीषु च ॥१२॥ [१८
यमुनामापगां रम्यां यामुनं च महावनम् ।
१९] नदीं भागीरथीं चैव सरयूं कौशिकीं तथा[7] ॥१३॥ [१९
मेकलप्रभवं[8] शोणं नदं मणिनिभोदकम् ।[9] [२०पू
२०] कावेरीं[10] रुचिरां चैव चन्दनामपि चापगाम् ॥१४॥ [N
नदीं कालमहीं चैव तमसां[12] पुष्पवाहिनीम् ।
२४] गोमतीं गोकुलाकीर्णां तथा पूर्वां सरस्वतीम् ॥१५॥[13] [N

१. ल२ ल१ ब म श—तु ।
२. कै ल१ ल२ ब श रा—विनलं ।
३. श—अरिंदमः ।
४. अ च—दिशां ।
५. कै ल१ ल२ ब म श—नास्ति ।
६. ब—हरिदु० ।
७. म—+तमसा पुष्पवाहिनीं ।
८. कै—मेलकप्र० ।
९. म—नास्ति ।
१०. कै—+ कावेरां ।
११. ल२—चर्मणाम० ।
१२. म—+ तमसा ।
१३. म—गोमतीमित्यादि श्लोकार्धः १४ शस्योत्तरार्धत्वेन पठितः । कावेरीमित्यारम्य पुष्पवाहिनीमित्यन्तः श्लोकपाठश्च १५ शत्वेन पठितः ।

शीघ्रं वाप्य(?पी)स्तडागांश्च मगधान् काशिकोसलान् ।
२५] मलयांश्च विदेहांश्च पुण्ड्रान् वङ्गांश्च मार्गत ॥१६॥ [२१पू
महानदं च लौहित्यं शैलं पट्टनशोभितम् ।
२६] पत्तनं कोशकाराणां तिमिवरजवाकुलम् । [२१उ
२७पू] सर्वमेतद् विचेतव्यं मार्गमाणैस्ततस्ततः ॥१७॥
N] रामस्य पत्नीं वैदेहीं स्नुषां दशरथस्य च । [२२
अवगाह्य समुद्रं च पर्वतान् पत्तनानि च ॥१८॥
२८] मन्दरस्य च ये कुक्षिं किराताः केचिदाश्रिताः । [२३
२९पू] कर्णप्रावरणाश्चैव किराताश्चाष्टकर्णिकाः ॥ ''१९॥ [२४पू
अक्षया बलवन्तश्च पुरुषाः पापकारिणः ।

---

१. कै अ ळ$_1$ ळ$_2$ ब म श रा च—
०स्तडागाश्च ।
२. कै ळ$_1$ ळ$_2$ ब म श रा च—
मगधाः ।
३. कै ळ$_1$ ळ$_2$ ब म रा च—
काशिकोसलाः ।
श—काशिकोशलाः ।
४. ळ$_1$ ळ$_2$ रा—वंगाश्च ।
५. कै श च—✝ मार्गतान् ।
ळ$_1$ ब—✝ सार्गतान् ।
म—✝मार्गतां । रा—✝सार्गज्ञान् ।
भ—✝ मार्गथ ।
ळ$_2$—✝ मागधान् ।
६. कै ळ$_1$—✝ तिमि—नुजवाकुलां ।
अ—✝तिर्मि चरजताकुलं ।
ळ$_2$—तिमिवक्त्रजवाकुलं ।
ब—✝तिमि—नुजवाकुलं ।
म—✝तिमि—वजवाकुलं ।
श ✝तिमि—रावजवा० ।
रा—✝तिमिवज्रजवा० ।
भ—✝तिर्मिचरजताकरं ।
'तिमिनक्रजवाकुलं' इति मूलतः
पाठःस्यात् ? ।
७. रा—विगंतव्यं ।
कै रा—✝०व्यं मार्गमाणस्त० ।
ळ$_1$ ळ$_2$ ब म श—✝०मार्गमाणास्त०
८. अ च—✝ मंदारस्य ।
९. म श—०दागताः ।
१०. म—कर्णप्रव० ।
११. अ भ—अतः परमधिकः पाठः—
बर्बराः कालमुमुखाः का(?वा-)मैनाश्चक-
पादकाः ।

३०] किराता वनभूताश्च हेमाङ्गाः प्रियदर्शनाः ॥२०॥ [२५

आममीनाशिनश्चैव किराता द्वीपवासिनः ।

३१] अन्तर्जलगता घोरा नरग्राहा इति श्रुताः ॥२१॥ [२६पू

एतेषामालयाः सर्वे विचेतव्याः समन्ततः ।

३२] गिरिभिर्यानि गम्यन्ते प्लवनेन प्लवेन च ॥२२॥

रत्नवन्तं जलद्वीपं सर्वरत्नोपशोभितम् ।

३३] सुवर्णकुट्टिमं चैव सुवर्णाकरमण्डितम् ॥२३॥ [२७

जम्बुद्वीपमतिक्रम्य शिविरो नाम पर्वतः ।

३४] दिवं स्पृशति शृङ्गैर्यो देवदानवसेवितः ॥२४॥ [२८

तत्र सर्वेषु शृङ्गेषु निर्झरेषु गुहासु च । [२९पू

३५] रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥२५॥ [३१उ

तथा कालोदकं नाम समुद्रं भीमदर्शनम् ।

३६] आक्रीडं दानवेन्द्राणां गत्वा द्रक्ष्यथ वानराः ॥२६॥ [N

तत्र रक्षोगणा घोराश्छायां गृह्णन्त्यलक्षिताः ।

३७] ब्रह्मणा समनुज्ञाता नित्यकालं बुभुक्षिताः ।

N] ब्रह्मस्वहारिणः पापास्ते द्विजा नरकं गताः ॥२७॥ [N

तं कालमेघप्रतिमं महोरगनिषेवितम् ।

३८] अभिगम्य महानादं तथा नदनदीपतिम् ॥२८॥ [३६

ततो रक्तजलं घोरं लौहित्यं नाम सागरम् ।

---

१. म—†प्रेमांगाः ।
२. कै—†अंतजल० ।
३. म—प्लवनेन ।
४. ल₂—जयद्वीपं ।
५. कै—†सुवर्णकरमंडितं ।
६. म—शिशिरो ।
७. रा—अथ ।
८. कै अ ल₁ ल₂ ब म श रा—वानरेन्द्राणां ।
९. कै ल₁—नित्यं कालं ।
१०. श—रक्तानलं ।
११. ल₂—†लौहित्ये ।
म—‡ लाहित्यं ।
रा म—‡ लोहित्यं ।

३९] गता[1] द्रक्ष्यथ वेत्सं[2] च बृहतीं कूटशाल्मलीम्[3] ॥२९॥ [३७
गृहं पतंगराजस्य[4] सुपर्णस्य महात्मनः ।
४०] शुभ्रकैलाससंकाशं निर्मितं विश्वकर्मणा ॥३०॥ [३८
तस्य स्थानेषु[5] रम्येषु विचेया जनकात्मजा ॥३१॥ [N
४१] ततः शृङ्गसहस्रेण भित्त्वा सलिलमुत्थितम् ।
द्रक्ष्यथाम्बुधरप्रख्यं[6] गोशृङ्गं नाम पर्वतम् ॥३२॥ [N
४२] तत्र शृङ्गनिभा घोरा मंदेहा[7] नाम राक्षसाः ।
शैलशृङ्गेषु लम्बन्ते नानारूपा महाबलाः[8] ॥३३॥ [३९
४३] ते पतन्ति[9] जले नित्यं सूर्यस्योदयनं प्रति ।
अभिशप्ता महेन्द्रेण निशायामुत्पतन्ति च ॥३४॥ [४०
४४] ततः पांडुरमेघाभं क्षीरोदं[10] नाम सागरम् ।
गता द्रक्ष्यथ दुर्धर्षं मुक्तामणिनिभोदकम् ॥३५॥ [४१
४५] तस्य मध्ये शुभो नाम जातो रजतपर्वतः[11] ।
दिव्यगन्धैः कुसुमितै राजतैः कमलैश्चितैः[12] ॥[13]३६॥ [४२

---

१. ल१—गत्वा ।
२. अ म च -तां चैव
 श—वत्सां च ।
३. कै—शाल्मलिं ।
४. ल२ रा—पतंगराजस्य ।
५. कै अ ल१ ब म श रा च—
 रम्येषु स्थानेषु ।
 भ—रम्येषु देशेषु ।
६. भ—०थांबुचरम० ।
 च—०थांबुवरप्र०
७. अ म श रा भ—संदेहा ।
८. कै अ ल२ श रा च—नानारूप-
 बलाबलाः ।
 कै—०बलावृताः इति प्रान्तीयं
 लेखान्तरम् ।
९. अ च -†तंपति ।
१०. म—†क्षीरोदो नाम ।
११. ल२—नास्ति ।
१२. श—कलशैस्ततः ।
 रा—‡फलशैशिता ।
 कै अ ल१ ल२ ब म—
 कलशैश्चितः ।
१३. ल२—नास्ति ।

४६] तत्र सा राजतैः पद्मैर् नलिनी हेमकेसरैः [3]।
नाम्ना सुदर्शना नाम राजहंसैः समाकुला ॥३७॥ [४३
४७] किन्नराश् चारणा यक्षा गंधर्वाः पतगोरगाः ।
हृष्टाः समभिगच्छन्ति नलिनीं चारुदर्शनाम् ॥३८॥ [४४
४८] क्षीरोदं समतिक्रम्य तत्र द्रक्ष्यथ वानराः ।
घृतोदमुदधिश्रेष्ठं सर्वभूतनमस्कृतम् ॥३९॥ [४५
४९] तत्र कर्कोटनं तेजः कृत्वा हयशिरा महत् । [४६पू
हविर्भूतं पयोधिं तं ग्राश्नात्यविरतं हविः ॥४०॥ [N
५०] तत्र विक्रोशतां नादो भूतानां सलिलौकसाम् ।
श्रूयते भृशमार्तानां कृष्यतां वडवामुखे ॥४१॥ [४७
५१] घृतोदस्योत्तरे कूले योजनानि चतुर्दश ।
जातरूपशिलो नाम जातः कनकपर्वतः ४२॥ [४८
५२] तस्यांसीना नगस्यांग्रे गता द्रक्ष्यथ वानराः । [४९उ
सहस्रशिरसं देवमनन्तं नीलवाससम् ॥४३॥ [५०उ
५३] त्रिशिराः काञ्चनस्तालः केतुस्तस्य महात्मनः ।
भ्राजते पर्वतस्याग्रे वेदिकोच्छ्रायभूषितः ॥४४॥ [५१

---

१. श—संराजते ।
२. अ च—०केशरैः ।
३. ल$_2$—नास्ति ।
४. अ च—समाकुलैः ।
५. भ—ततो ।
६. अ च—०मुदधिं श्रेष्ठं ।
७. कै अ श रा भ च—करकोटनं ते०
म—कर्कोटनतेजः ।
८. कै ल$_1$ ल$_2$ ब म श रा—
प्राश्नमवि० ।
९. म—हतानां ।
१०. अ भ च तस्यासीनं ।
ल$_1$ ल$_2$ ब म—तत्रासीना ।
११. कै ल$_1$ ल$_2$ ब म श रा भ च—
वनस्याग्रे ।
१२. ल$_2$—द्रक्ष्यति ।
१३. कै ल$_1$ ल$_2$ ब म श रा भ च—
वेदिका रुक्मभूषिता ।

५४] पूर्वस्यां दिशि निर्माणं द्रक्ष्यथ ब्रह्मनिर्मितम् । [५२
तत्र हेममयः श्रीमानुदयो नाम[1] पर्वतः ॥४५॥
५५] तस्य[2] कोटिदिवः[3](?दिव्य) स्तम्भा शतयोजनमायतौ[4] । [५३
जातरूपशिला दिव्या विराजति स वेदिका ॥४६॥
५६] सालैस्तालैस्तमालैश्च कर्णिकारैश्च पुष्पितैः ।[5]
५७पू] जातरूपमयैर्दिव्यैः शोभिता सूर्यसन्निभैः ॥४७॥ [५४
तत्र योजनविस्तीर्णमायतं शतयोजनम् ।
५९] शृङ्गं सौमनसं नाम जातरूपमयं ध्रुवम्[6] ॥४८॥ [५५
६० उ] तत्र वैखानसा[7] नाम बालखिल्या[8] मरीचिपाः ।
प्रादेशमात्रा[9] दृश्यन्ते सूर्यकाले तपोधनाः ॥४९॥ [५८
६१] काञ्चनस्यैव शैलस्य[10] सूर्यस्य च महात्मनः ।
आविष्टा तेजसा सन्ध्या पूर्वा रक्ता[11] प्रकाशते ॥५०॥ [६१
६२] तत्र [12]पूर्वं [12]पदं कृत्वा तदा[13] विष्णुस् त्रिविक्रमः ।
द्वितीयं[14] शिखरे[14] मेरोश् चकार पुरुषोत्तमः ॥५१॥ [५६
६३] उत्तरेण परिक्रम्य जम्बुद्वीपं दिवाकरः ।

---

१. श—नास्ति ।
२. श—नास्ति ।
३. कै ल२ श—कोटिर्दिवस्तम्भा ।
ब म—०दिवः स्तम्भा ।
श—नास्ति ।
भ—कोटिशतं स्तम्भाः ।
४. भ—०नमायताः ।
अ—+० नमायतं ।
५. कै ल१ल२ ब म रा च—नास्ति ।
६. ल१ ल२ म श—+ विसुं ।
७ कै ल१ल२ ब म श रा—वैश्वानरा ।
८ अ म—+ वाल० ।
९. अ च—+प्रदेशमात्रा ।
१०. ब—+ शूलस्य ।
११. अ—पूर्वं रक्ता ।
ल१ भ च—पूर्वरक्ता ।
१२. कै अ ल१ ल२ ब म श रा—पूर्वपदं ।
१३. ल१ ल२ ब म श—तत्र ।
१४. ल१—द्वितीयाशिख० ।

दृश्यो भवति भूतानां शिखरं तत् समाश्रितः ॥५२॥ [५७

६४] ततोऽस्य दर्शनादेव[1] गोभिरेव प्रकाशते ।

६५पू] ततस्तेजश्च[2] सर्वत्र सर्वप्राणभृतामिह[3] ॥५३॥ [५९

६६पू] शैलेषु तेषु दिव्येषु काननोपवनेषु च ।

५८पू] रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥५४॥ [६०

ये च नोक्ता मया देशा विचेया तेषु जानकी । [६५ उ

N] मासे पूर्णे निवर्तध्वं गत्वा तमुदयं गिरिम् ।[4] [N

६९ उ] ऊर्ध्वं मासान्न वस्तव्यं वसन् वध्यो भवेन्मम ॥५५॥ [६८ उ

एतावद् वानरैः सत्यं(?शक्य)मन्वेष्टुं[5] रघुनन्दन ।

६८] आभास्करममर्यादं[6] नाभिजानाम्यतः परम् ॥५६॥ [६६

अधिगम्य तु वैदेहीं निलयं रावणस्य च[7] ।

७०पू] पूर्णे मासे समृद्धार्था निवर्तध्वं प्लवंगमाः[8] ॥५७॥ [६७

अतः परं प्रवक्ष्यामि गतिमन्यां महीतले ।

N] दक्षिणस्यां दिशि यथा गन्तव्यं प्लवंगाधिपैः ॥५८॥ [N

यथोक्तं चैव कर्तव्यमवश्यं प्रीतिमानहम् ।

N] अन्यथा संशयो वः स्याद् दाराणां जीवितस्य च ॥५९॥ [N

---

१. कै ल१ ल२ ब म श रा च — दर्शनादीनि ।

२. अ भ—चक्षुश्च । च — नास्ति ।

३. च नास्ति ।

४. कै अ ल१ ल२ ब म श रा च— नास्ति ।

५. ब—०मन्वेष्यं । ल२—०मन्वेष्टुं । म—०मन्वष्टुं ।

६. कै अ ल१ ल२ ब म श रा च— आभास्करम० । भ—अभास्करममर्यादं ।

७. ल१—तु ।

८. अ भ च—प्लवगर्षभैः ।

महेन्द्रकान्तां[1] वनशैलमण्डितां
संचार्य[2] सर्वामपि गां च वानराः ।
नरेन्द्रपत्नीमधिगम्य मैथिलीं
७१] ततो निवृत्ताः सुखिनो भविष्यथ ॥६०॥ [६९

इत्यार्षे[3] रामायणे[4] किष्किन्धाकाण्डे[5] पूर्वदिग्वर्णनं[6] नाम
द्वात्रिंशः सर्गः ॥३२॥

---

१. ल₁ब म श—०कान्तावनशैल० ।
२. अ भ च—विचीय सर्वां सनगां ।
३. ल₂—नास्ति ।
४. ब—रामायणे वाल्मीकीये ।
५. ल₁ ब म श—किष्किन्दाकांडे
भ—उद्योगे ।
६. श—नास्ति ।

 **[ त्रयस्त्रिंशः सर्गः ]** 

ततः प्रस्थाप्य सुग्रीवस्तं कपिं वानरेश्वरः[1] ।
१] अपरान् प्रेषयामास वानरान् संप्रहर्षयन् ॥१॥ [१
२उ] पितामहसुतं वीरं जाम्बवन्तं महाकपिम् ।
नीलमग्निसुतं चैवं[2] हनूमन्तं च मारुतिम्[3] ॥२॥ [२
३] सुहोत्रं[4] च सुरार्चिं च शरगुल्मं तथैव च ।
गजं गवाक्षं शरभं[5] सुषेणम्[6]ऋषभं तथा ॥३॥ [३
४] मैन्दं च द्विविदं[7] चैव विजयं गंधमादनम् ।
N] उल्कामुखमसंगं च[8] वैश्वानरसुतावुभौ ॥४॥ [४
५उ] अंगदप्रमुखान्[9] वीरान् कपीन् कपिवरेश्वरः ।
वेगविक्रमसंपन्नान् संदिदेश कपीश्वरः ॥५॥ [५
६] तेषामनुगणं चैव ददौ बलमनेकशः ।
७पू] विचार्य हरिवीराणामादिशद् दक्षिणां दिशम् ॥६॥ [६
ये केचन समुद्देशास्तस्यां दिशि सुदुर्गमाः ।[10]
९] कपीशः कपिमुख्यानां स तेषां समुदाहरत्[11] ॥७॥ [७
[12]एतैः सह महाभागैर् वानरैः कामरूपिभिः ।
८] अभिगम्य महाभागा विशालां दक्षिणां दिशम् ॥८॥ [N

---

१. भ च—वानरर्षभः ।
२. ल२—नास्ति ।
३. कै ल१ ल२ ब म श रा—मारुतं ।
४. अ—सुहौत्रं ।
५. कै ल१ श रा भ च—सरभं ।
ब म—† सुरभं ।
६. कै—† सुषीण० ।
७. कै ल१ ल२ ब म रा—द्विविधं ।
८. कै—उल्का ( पाठस्त्रुटितः )
९. कै—अंगदप्रमुखा……वरेश्वरः ।
( पाठस्त्रुटितः )
१०. भ—ये केचिद्वन उद्देशास्तान्सर्वान्
परिमार्गथ ।
११. ब म च—समुदाहरन् ।
भ—तानुदाहरत् ।
१२. भ—एतैस्तु स ।

बुद्धि-विक्रम-संयुक्तै रुपायैरनुगच्छथ ।

N] ततः[1] सीतां च मार्गध्वं निलयं रावणस्य च[2] ॥९॥ [N

सहस्रशिखरं[3] विन्ध्यं नानाद्रुमलतावृतम् ।

१०] नर्मदां च नदीं रम्यां महोरगनिषेविताम् ॥१०॥[4] [८

१४पू] मेकलामुत्कलां[5] (?) चैव नदं मणिनिभोदकम् ।

N] जम्बूमतीं चन्द्रवतीं[6] सर्वमेव विचीयताम्[7] ॥११॥ [१०

१६ उ] विदर्भान्[8] ऋषिकांश्चैव[9] रम्यान् माहिषकानपि । [११पू

पर्वतप्रभवां[10] तां तु श्लक्ष्णस्रोतस्तरङ्गिणीम् ।[11] [N

११] नानापक्षियुतां दिव्यां पुण्यां वेगवतीं नदीम् ॥१२॥[12]

तत्र[13] पर्वतपादेषु गिरीणां[14] शिखरेषु च[14] । [N

१२] रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥[14] १३॥ [N

---

१. अ भ—तत्र ।

२. च—नास्ति ।

३. ल१ ब म श—०शिरसं ।

४. भ—अतः परमधिकः पाठः—

तां च वेगवतीं रम्यां कृष्णवर्णां महानदीम् ।
वरदां च महाकालां महानागनिषेविताम् ॥

च—नास्ति ।

५. ल१ ल२—मेकलानुकलं ।
ब म—मेकलानूकलं ।
कै अ श च—मेकलानुकलां ।

६. कै अ ल१ ब म श रा भ च—
‡ चन्द्रमतीं ।

७. कै ल१ ल२ ब म श रा—
† विधीयताम् ।

८. कै अ ल२ ब म रा भ च—
‡ विदर्भाम् ।

९. कै अ ल१ ब म रा भ च—
‡ ऋषिकांश्चैव ।
श—‡ मृषिकांश्चैव

१०. कै ल१ ल२ ब म श रा भ च—
† पर्वतप्रभवांस्तांस्तु ।

११. भ—नास्ति

१२. अ रा भ च—
अतः परमधिकः पाठः—
मार्गध्वं हरिशार्दूला तथा वेत्रवतीं नदीं ।

१३. भ—तस्य ।

१४. च—नास्ति ।

१७पू ] तथा शकान्[1] कुणिन्दांश्च[2] कलिङ्गांश्च[3] विशेषतः ।[4]
N] दशार्णान् कौकुरांश्चैव[5] हैमानपि[6] च कंदरान्[7] ॥१४॥ [N
१७ उ] अन्वेष्यं दंडकारण्यं सशैलवनकाननम्[8] ।
१८पू ] नदीं गोदावरीं चैव प्रसन्नसलिलां[9] शुभाम् ॥१५॥ [१२पू
N] गता द्रक्ष्यथ कावेरीं वृतामप्सरसां[10] गणैः । [N
१८ उ] तथैव चौराड्रान्[11] पुण्ड्रांश्च[12] केरलांश्च[13] कुरूनपि ॥१६॥ [१२ उ
१९ उ] गंतव्यो मलयः श्रीमान् पर्वतो धातुमण्डितः ।
१९ उ] सचित्रशिखरैश्चैव[14] चित्रपुष्पितकाननः ॥१७॥ [१३
सचन्दनवनोद्देशो[15] मार्गितव्यो[16] महागिरिः ॥१८[17]॥ [१४
२०] ततस्तामापगां दिव्यां[18] प्रसन्नसलिलां शुभाम् ।
गता द्रक्ष्यथ कावेरीं[19] वृतामप्सरसां[20] गणैः[21] ॥१९॥ [१५

---

१. अ—+ शका ।
२. ब—कुणिध्रांश्च । म—कुणित्रांश्च ।
३. ल₂ रा—कुलिंदांश्च ।
४. च—नास्ति ।
५. अ रा—कुररांश्चैव ।
कै अ ल₁ल₂ ब म श रा च—कुक्कुरांश्चैव ।
६. कै—हेमान् ।
७. कै—कंधरान् ।
८. अ भ च - सशैलवनपादपं ।
९. ल₁—+ ०सलिला ।
१०. च—कृतामप्सर० ।
११. कै—दौंड्रान् ।
ल₂ ब म—चौड्रान् ।
ल₁ श —चोड्रान् ।
१२. ब म—पौंड्रांश्च रा-पुंड्रांश्च ।
भ च—पुंड्रांश्च ।
१३. कै—ग्रन्थपातः ।
'तैलंगानन्यानपि' इत्यपरहस्तेन पूरितम् ।
१४, ल₁—०शिखरैश्चैव ।
१५. कै सचंदन…(पाठस्त्रुटितः)
'कंदराश्च' इत्यपरहस्तेन पूरितम् ।
१६. कै ल₁ ब म श—मार्गितव्यस्ततस्तवः ।
१७. अ ल₁ रा भ च—
अतः परमधिकः पाठः—
तत्र चंदनखंडेषु(ल₁ षंडे)तमालानां वनेषु चा रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥
१८. कै अ भ—रम्यां ।
१९. ब म—+ कावीरीं ।
२०. कै ल₂ म—+ ०मप्सरसो ।
२१. ल₁—नास्ति ।

२१] तत्रासीनं नगस्याग्रे तपस्यन्तं महौजसम् ।
२२पू] द्रक्ष्यथादित्यसंकाशमगस्त्यमृषिसत्तमम् ॥२०॥ [१६
तमतिक्रम्य शैलेन्द्रं दिव्यधातुसमन्वितम् ।
N] पुलस्त्यमृषिमासाद्य गत्वा द्रक्ष्यथ वानराः ॥२१॥ [N
N] गंधर्वकन्या निहिता यत्र हित्वा सखीजनम् । [N
२२उ] ततस्तयाऽभ्यनुज्ञाताः प्रसन्नेनान्तरात्मना ॥२२॥
तां महाग्राहदुस्तारां तरिष्यथ महानदीम् । [१७
२३] सचंदनवनैर् दिव्यैः प्रसन्नद्वीपमालिनीम् ॥२३॥
कान्तं तं कृतसंकेतां समुद्रमभिगच्छतीम् । [१८
२४] ततो हेममयं दिव्यं मुक्तामणिविभूषितम् ॥२४॥
गुप्तं कपाटं पाण्ड्यानां गता द्रक्ष्यथ वानराः । [१९
२५] तामतिक्रम्य कावेरीमाप्लुत्य मलयं गिरिम् ॥२५॥ [N
N] पौष्पीं मालामिव कृतां वेलां द्रक्ष्यथ वानराः । [N
पौष्पीं च मालां दिव्यां तु वितन्वन्तु वनौकसः ।[13]
२७] तत्र केतकिषण्डेषु[14] पुष्पितेषु वनेषु च ॥२६॥ [N

---

१. ल₂—+नरस्य ।
कै अ ल₁ ब म श रा च—नदस्या० ।
२. अ भ च—मलयस्य ।
३. अ ल₁ ल₂ ब म श रा च—तमाभिक्रम्य ।
४. ब म—निहता ।
५. कै अ ल₁ रा च—+०खीजनः ।
६. ब—ततस्तथा० ।
म श—०ह्यनुज्ञा ।
कै ल₁ रा—०यानुज्ञा० ।
७. अ—+दीपमालिनीं ।
८. कै—कर्तुं तं । अ भ—कांतेव ।
च—कांतं च ।
९. ल₂—समुद्रमपिगच्छ० ।
१०. ब म श—कपाट० ।
११. ल₁ ल₂ ब म श—पाद्यानां ।
१२. ब म श—+कावेरीमा० ।
१३. कै ल₁ ल₂ ब म श रा भ च—नास्ति ।
१४. कै अ रा च—+ केतकिखंडेषु ।
भ—+केष्वपि खण्डेषु ।

रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ।

२८] ततः समुद्रस्तर्[1]तव्योऽगाधः पुलिनसंवृतः ॥२७॥ [N

स देशो ह्यतरङ्गोऽभून्मुनिना शापनिर्मितः ।

२९] [2]उपहारं तु विन्यस्तं तरंगैराकुलीकृतम् ॥२८॥ [N

दृष्ट्वा भगवता शप्तो ह्यतरंगो भवि[3]ष्यसि ।

३०] [4]ततश्च शापतस्तस्य [5]समुद्रो वै महात्मनः ॥२?॥ [N

अतरंगोऽभवत् क्षिप्रं निर्मलादर्शनिर्मलः[6] ॥

३१] ततो द्वीपं समुद्रस्य शतयोजनमायतम्[7] । [N

तमतिक्रम्य शैलेन्द्रो[8] [9]महेन्द्रो नाम पर्वतः ॥३०॥

३२] जातरूपमयैः[10] शृङ्गै रप्सरोगणसेवितैः[11] । [२१

३३पू] सिद्धचारण[12]संघैश्च विप्र[13]कीर्णो [14]मनोरमः ॥३१॥ [२२पू

N] नानापक्षिगणैर् जुष्टो बहुकिन्नरसेवितः ।[15] [N

३३ उ] [16]यमुपैति सहस्राक्षः सदा पर्वसु पर्व[17]सु ॥[18]३२॥ [२३ उ

३६ उ] पुष्पितैः पादपैः [19]कीर्णः सिद्धचारणसेवितः [N

---

१. ल$_1$—† गाढः ।

२. म—‡ तपहारं ।

३. कै अ ल$_1$, ल$_2$ ब म श रा—
भविष्यति ।

४. कै—ततः शासनता तस्य ।
अ च—ततः स शासनात्तस्य ।
रा—ततः † शासनतां तस्य ।
भ—ततः स शासनात्तस्य ।

५. कै ब—† समुद्रं ।

६. ल$_1$ ल$_2$ ब म श—० सन्निभः ।

७. ल$_2$—† ०मायुतं ।

८. ब भ—शैलेन्द्रं ।

९. श—शैलेन्द्रो ।

१०. ल$_2$—† जातरूपमयः ।

११. ल$_1$—† सेवितं । च—† सेविता ।

१२. म—सिद्धचारण...(ग्रन्थपातः) ।

१३. म—नास्ति ।
कै अ ल$_1$, ल$_2$ ब श रा च—
विप्रकीर्णैर् ।

१४. च—† मनोरमाः । म—नास्ति ।

१५. म—नास्ति ।

१६. अ—† ०यमुपेति ।

१७. च—नास्ति ।

१८. ल$_1$—नास्ति ।

१९. अ—† कीर्णं ।

N] तत्राप्रमत्ता वैदेहीं विचिन्वंतु वनौकसः ॥३३॥ [N
द्वीपस्तस्य गिरेः पार्श्वे शतयोजनमायतः । [२३ उ
३८] [1]अगम्यं मानुषैः सर्वैर् यमाहुर् [2]वनगोचराः ॥३४॥[3] [२४
तमतिक्रम्य द्वीपं तु गिरिं द्रक्ष्यथ काञ्चनम् ॥३५॥ [N
३९] उत्थितः सागरं भित्त्वा वयस्यश्चन्द्रसूर्ययोः ।
N] प्रविष्टो [4]ब्रह्मभवनं [5]शृङ्गेण महता गिरिः ॥३६॥ [N
चंद्रसूर्यांशुसंकाशः सागराम्बुपरिप्लुतः ।
४०] भ्राजते विपुलैः शृङ्गैरम्बरं विलिखन्निव ॥३७॥ [२९
तस्यैकं काञ्चनं शृङ्गं सेवते [6]यद्दिवाकरः ।
४१] [7]श्वेतं [8]राजतरूपं च सेवते [9]यन्निशाकरः ॥३८॥
४२पू] न तत् कृतघ्नाः पश्यन्ति न नृशंसा न नास्तिकाः । [३१पू
N] नातप्ततपसः केचिन् न च पापकृतो [10]जनाः ।[11] [N
४२ उ] प्रणम्य शिरसा शैलं विचिन्वन्तु [12]वनौकसः ॥३९॥ [३१ उ
तं तु शैलमतिक्रम्य [13]गिरिमादित्यसन्निभम् ।[14]
४३] [15]परं पारं समुद्रस्य योजनानि चतुर्दश ॥४०॥ [३२

---

१. अ ल$_1$ ल$_2$ ब म श रा भ च— अगम्यो ।
२. ब म—† वनगोचरः ।
३. इत ऊर्ध्वं सर्वे स्मृत्येव प्रेरिताः पुनः पठन्ति—
तत्र सीतां च वैदेहीं निलयं रावणस्य च ।
४. श—ब्राह्मभवनं ।
५. कै अ ल$_1$ ल$_2$ ब श रा च— ‡शृंगेन ।
६. कै ल$_1$ ल$_2$ ब म श रा— ‡ यं दिवा० ।
७. श—†शीतं ।
८. ब म—रजतरूपं ।
९. कै ल$_1$ ल$_2$ ब म श रा— ‡यं निशा० ।
१०. ब म—जनः ।
११. अ प्रान्तेऽपरहस्तेन विन्यस्तः ।
१२. श—†दिवौकसः ।
१३. ब —शिरसादित्य० ।
१४. ल$_1$—इतः परं ‘ ततः शक्रे ’ त्यग्रिमः ४५ शः श्लोकः पठितः ।
१५. अ च परे पारे समुद्रस्य ।
कै ल$_1$ म श रा—पारं समुद्रस्य गिरिर् ।
ब—०द्रस्य गिरेर् ।

तत्र भुक्त्वा वरान्नानि मूलानि च फलानि च ।
४५] बहूनि च महाऽर्हाणि गच्छेयुर्[2] वानराः परम्[1] ॥४१॥ [३४
ततः सागरमुत्तीर्य विद्युत्वान्[3] नाम पर्वतः ।
४४] सर्वकामफलैर् वृक्षैर् निर्मितो विश्वकर्मणा [4] ॥४२॥ [३३
तस्य पर्वतशृङ्गेषु वनेषूपवनेषु च ।
४९] रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥[5]४३[6]॥ [N
तमतिक्रम्य दुर्धर्षं[7] माल्यवान् नाम पर्वतः[8] ।
N] अध्वानं दुर्विषहं च योजनानि चतुर्दश ॥४४॥ [N
ततः शंक्रध्वजाकारः[10] कुंजरो नाम पर्वतः ।
५०] अगस्त्यभवनं चात्र निर्मितं विश्वकर्मणा ॥४५॥ [३५
सरिद् तत्राञ्जना नाम तामुवाच मुनिस्ततः ।
५५] अगस्त्यो ह्यभिषेकार्थं कुञ्जरागमनं प्रति ॥४६॥ [N
सा समूलौषधिवना[11] सपर्वतवनाकुला[12] ।
५६] कुञ्जरं पर्वतं गत्वा महर्षिं तमुपस्थिता ॥[13]४७॥ [N
रक्तचन्दनसंरक्ता मणिविद्रुमशर्करा ।
५७] देवर्षिचरिता पुण्या पवित्रेव सरस्वती ॥४८॥ [N

---

१. अ भ च—मधूनि ।
२. कै ल१ ल२ ब भ श रा—गच्छेयुरथ वानराः ।
३. भ—†विदित्वान् ।
४. ल२—नास्ति ।
५. रा—नास्ति ।
६. ल२—नास्ति ।
७. भ—दुर्वर्शं ।
८. भ—नामतः । प्रान्तेऽपरहस्तेन 'पर्वते' इति शोधितम् ।
९. ब—अतःपरमधिकः पाठः ।
सर्वकामफलैर्वृक्षैर्निर्मितो विश्वकर्मणा ।
४२ शपद्यार्धस्य अभ्यासः ।
१०. अ—तत्र शक्र० ।
भ—†ततश्चक्र० ।
११. अ—†समूलोषधि० ।
१२. अ भ च—०वनाकरा ।
१३. कै ल२—नास्ति ।

तत्र योजनविस्तारमायतं शतयोजनम् ।
५१] तोरणं काञ्चनं दिव्यं पन्नगैरुपसेवितम् ॥४९॥ [३६
तत्र भोगवती नाम सर्पाणां निलयः पुरी ।
५२] विशालरथ्या दुर्धर्षा तप्तकाञ्चनतोरणा ॥५०॥ [३७पू
रक्षिता पन्नगैर् दिव्यैस् तीक्ष्णदंष्ट्रैर् महाविषैः [३७ उ
५३] सर्पराजो महातेजा यस्यां वसति वासुकिः ॥५१॥ [३८पू
तच्छोभयति निर्माणं तोरणं दक्षिणां दिशम् ।
N] पर्वतं तां पुरीं चैव मार्गध्वं वानरोत्तमाः ॥५२॥ [N
तमतिक्रम्य शैलेन्द्रो महानृषभसंज्ञितः ।
५४] सर्वरत्नमयः श्रीमान् नानाधातुविभूषितः ॥५३॥ [४०
गोशीर्षं चन्दनं पद्मं हरिश्यामं च चन्दनम् ।
५५] दिव्यमुत्पद्यते यत्र चन्दनं चाग्निसन्निभम् ॥५४॥ [४१
न च तच्चन्दनं दिव्यं स्प्रष्टव्यं वनगोचरैः ।
५६] रोहिता नाम गन्धर्वा गोपायन्ति च तद्वनम् ॥५५॥ [४२
तत्र गन्धर्वपतयश् चत्वारः सूर्यवर्चसः ।
५७] शैलूषो ग्रामणीर् भिक्षुः शुवल्गुश्चैव वानराः ॥५६॥ [४३

---

१. ल₁ ल₂ श भ—
तत् त्रियो० ।
अ च—†तं त्रियो० ।
कै—तस्त्रियोजनविस्तीर्णमा० ।
ब म—तत् त्रियोजन विस्तारामा०
२. अ—†०गैरुपशोभितः ।
च—अत्रत्य "पन्नगै"रित्यादिः ५१ शपूर्वार्धस्य 'पन्नगै' रितिपर्यन्तः पाठो नास्ति ।
३. अ ल₂ ब म भ च—†निलया ।
४. कै रा—सपर्वतीं ।
ल₁ ल₂ ब म श—सपर्वतां ।
५. म—† वानरोत्तम ।
६. म—महावृषभसं० ।
७. कै ल१ ब म रा—‡ स्प्रष्टव्यं ।
अ श च—‡ स्पृष्टव्यं ।
८. ल₂—नागगन्ध० ।
९. अ ल₂ च—शैलखो ।
१०. कै ब म—ग्रामणी० ।
श—ग्रामणीर्भि० ।
११. कै अ च—स्ववल्गु० । भ—स्ववभ्रु० ।

अभिगच्छन्ति तं[1] देशं दिव्याश्चाप्सरसां गणाः ।

N] तथा चैवं[2] विचेतव्यम्[3] त्रिश्रृङ्गो नाम पर्वतः ॥५७॥ [N

६३ उ] तत्र[4] सौमनसा नाम श्रृङ्गात्[5] स्रवति सा नदी ।

तत्र सानुषु चित्रेषु चन्दनागुरुगन्धिषु ॥५८॥ [N

६४] शिलातलविनिष्पिष्टाः[6] क्रीडन्तीवं[7] महोर्मयः ।

तस्याः पुलिनशालिन्यास्तीरे रम्ये मनोहरे ॥५९॥ [N

६५] उत्तरे पर्वतश्रेष्ठे[8] रोध्रनीवारसंवृते[9] ।

विहङ्गा मधुराभाषा नानावर्णोपशोभिताः॥[10] ६०॥ [N

N] देवारण्यनिवासाश्च कोकिला मधुरस्वनाः ।[11][12]

अन्ये च विहगा मुख्या मृगसङ्घा[13] मनोहराः॥६१॥ [N

N] दृश्यन्ते[14] तत्र भूमौ वा पर्वतेषु गुहासु च । [N

अतः परमनाधृष्यो[15] यमलोकः सुदारुणः ॥६२॥ [४५पू

६६] संकुला राजधानी च कृष्णेन तमसा वृता । [४५ उ

तामतिक्रम्य[16] शैलेन्द्रस्तत्र पारिप्लवः[17] प्रभुः ॥६३॥ [N

६७] प्रासादः[18] काञ्चनैः स्तम्भैर् वज्रवैडूर्यवेदिकैः ।

---

१. अ च—तान् देशान् ।
२. ल$_1$ ल$_2$ म श—तथैव च ।
३. ब—| विचेतव्यं ।
४. ब—तत्रासौमन० ।
५. अ च—श्रृङ्गाग्रात् स्रवते नदी ।
 भ—श्रृंगे वसति सा नदी ।
६. कै ल$_1$ ब म रा भ च—विनिविष्टाः ।
७. श—क्रीडंत्येव ।
८. ब श—पर्वते श्रेष्ठे ।
 म—|पर्वते श्रेष्ठो ।
९. अ—| रोद्रनीवार० ।
१०. भ—प्रान्तेऽपरहस्तेन ।
११. अ भ च—मधुरस्वराः ।
१२. भ—प्रान्तेऽपरहस्तेन ।
१३. ल$_1$—|मृगसंगा म० ।
 म—|मृगसंगमनोहरः ।
१४. म—|दृश्यन्त ।
१५. ल$_1$—०मनाधृष्टो ।
१६. श—तमतिक्र० ।
१७. म—पारीप्लवः ।
१८. कै अ ल$_1$ ल$_2$ ब म श रा च—प्रासादकां० ।

नानावृक्षलतागुल्मैः पर्वतैः[1] समलङ्कृतः ॥६४॥ [N

६८] तत्र वैवस्वतो राजा धर्मासनगतः प्रभुः ।

६९पू ] बिभर्ति[2] सर्वभूतानामुभे सुकृतदुष्कृते[3] ॥६५॥ [N

तं तु देशमतिक्रम्य दिव्यैः कनकपर्वतैः[4] ।

N] मुक्तामणिफलैर् वृक्षैः प्रवालांकुरकोमलैः ॥६६॥ [N

६९ उ] तृणांगेरा[5]श्रमस्तत्र महर्षेः[6] पुण्यकर्मणः ।

अन्ते[7] पृथिव्या दुर्धर्षः स्वर्गे च वसति[8] स्वयम् ॥६७॥ [४४

७०] एतावदेव युष्माभिः[9] शक्यं वानरपुंगवाः ।

७१पू ] अभिगन्तुं विचेतुं[10] वा दक्षिणां ककुभं[11] प्रति॥६८॥ [४६

तृणांगेराश्रमं[12] गत्वा तत्र विज्ञाय मैथिलीम् ।

७२] शीघ्रमेव निवर्तध्वं कृतकृत्या वनौकसः ॥६९॥ [N

७१ उ] अभास्करममर्यादं[13] नातः परतरं भवेद् । [N

N] सर्वमेतद् विचेतव्यं यच्चान्यदपि दृश्यते ।[14] [४७पू

N] निखिलेन विचेतव्यं[15] यत्नवद्भिर् विहङ्गमैः[16] ॥७०॥[17] [N

---

१. अ ब भ च—पर्वत: ।
   श—|पर्वतं ।
२. ब—†बिभ्रति ।
   म—‡विभंति ।
३. अ भ च—०‡तद्दु:कृते ।
४. कै अ ल१ ब रा भ च—
   दिव्या: कनकपर्वता: ।
५. अ च—‡त्रिणंगेरा० ।
   म—‡ तृणांगोरा० ।
   भ—त्रिणांगोरा० ।
६. भ—आस्ते ।
७. ल२ म श—नास्ति ।
८. भ—चावसति ।
९. ल२ म श—नास्ति ।
१०. ल२—‡ विचरुर् ।
११. ब—†०ककुभां । भ—दक्षिणागमं ।
१२. कै अ च—‡ त्रिणंकेरा० ।
१३. कै—आभास्करमाम० ।
    रा—हरितालेन शोधितोऽकार: ।
    ल१ ब म—आभास्करममर्यादं ।
१४. भ—प्रान्तेऽपरहस्तेन ।
१५. कै अ ल१ म श रा भ च—
    प्रचेतव्यं ।
१६. अ—† ध्वजंगमै: ।
१७. भ—प्रान्तेऽपरहस्तेन ।

योमां निवृत्तो युष्माकं सीतां दृष्टेति वक्ष्यति । [४८

७३] स मे तुल्यफलो राज्ये मानार्हश्च भविष्यति ॥७१॥

७४पू] निखिलेन विचेतव्यं यथाऽऽदिष्टं वनौकसः । [N

७७उ] ऊर्ध्वं मासान्न वस्तव्यं वसन् वध्यो भवेन्मम ॥७२॥

यथोक्तं चैव कर्तव्यमेवं स्यां प्रीतिमानहम् । [N

७८] अन्यथा संशयो वः स्याद्दाराणां जीवितस्य च ॥७३॥ [N

अमितबलपराक्रमा भवन्तो

गुणविपुलेषु कुलेषु च प्रसूताः ।

मनुजपतिसुतां यथा लभध्वं

७९] तदधिगुणं पुरुषार्थमारभध्वम् ॥७४॥ [५०

---

१. भ—†युष्मभ्यः ।

२ कै ब रा—सीतां ।

३. कै ल१ ब म शा—तुल्यबलो ।

४. ल१—निखिलैश्च ।

५. कै अ ब रा म च—यथादृष्टं ।

६. कै—† क्रुद्धैर्मासं ।

ल१ ल२ म शा—ऊर्ध्वं मासं ।

ब—† क्रुध्यैर्मासं ।

रा—† क्रुद्धेमासं ।

७. ल१ ल२ शा—अतोऽन्यथा संशयो वो ह्यरीणां ।

म—अतोन्यथा संशयो वो † व्याह्यरीणां ।

कै ब—०योवः स्याद्दरीणां ।

रा—† ०योवः स्याद्भरीणां ।

८. च—नास्ति ।

९. म—तदधिगुणपुरु० ।

१०. रा—नास्ति ।

अतिबल बलमाश्रितस्तवाहं
तव मतिविक्रमपौरुषस्य कालः ।
अनिलसुत यथाऽधिगम्यते सा
N] जनकसुता हनुमंस्तथा कुरुष्व ॥ ७५ ॥ [N

इत्यार्षे रामायणे किष्किन्धाकाण्डे दक्षिणदिग्वर्णनं नाम
त्रयस्त्रिंशः सर्गः ॥३३॥

---

१. अ भ च—अतिबलं ।
रा—अमितबलमा० ।
२. ब—+ हनुमांस्तथा० ।
३. ल२—नास्ति । म—०र्षे किष्कि० ।
४. ल१ ब म—किष्किन्दाका० ।
भ—नास्ति ।
५. अ च—दिग्विजये दक्षिण० ।
भ—दिग्विजये दक्षिणादिशावं० ।
ब—दक्षिणदिशि वर्णनं ।

## [ चतुस्त्रिंशः सर्गः ]



ततः प्रस्थाप्य सुग्रीवो हनुमत्प्रमुखान् हरीन् ।
N] बुद्धिविक्रमसंपन्नान् वायुवेगसमाञ् जवे ॥ [3] १॥ [N
विशेषेण तु सुग्रीवो हनुमन्तमुवाच ह ।
१] स हि तस्मिन् हरिश्रेष्ठे संभावयति विक्रमम् ॥२॥ [१
न भूमौ नान्तरिक्षे च नाम्बरे नामरालये ।
२] अप्सु वा गतिभङ्गं ते पश्यामि हरिपुङ्गव ॥३॥ [२
सामराः सहगन्धर्वाः सनागासुरदानवाः ।
३] विदिता वीर लोकास्ते ससागरधराधराः ॥४॥ [४
गतिर्वेगश्च तेजश्च लाघवं च महाकपे ।
४] पितुस्ते सदृशं वीर्यं मारुतस्य महात्मनः ॥५॥ [५
तेजसाऽपि बलेनापि न समो विद्यते भुवि [8]।
५] यथाऽद्य दृश्यते सीता तथा त्वं कर्तुमर्हसि ॥ [9] ६॥ [६
वीर्यं शक्तिस्तथोत्साहो गतिश्चैव पराक्रमः ।
६] देशकालानुवृत्तिश्च नयश्चात्र समाहितः ॥७॥ [७

---

१. ब—प्रभृति ।
२. म—हनूमान् प्रमुखान् ।
३. भ—नास्ति ।
४. कै अ भ च—हनूमंतमु० ।
५. कै ल१—सनगासुर० ।
अ च—सनागाः सुर० ।
म—सनागः सुर० ।
६. श— गतिवेगश्च ।
७. ब—लाघवश्च ।
रा—राघवं च ।
८. अ भ च—
तेजसा च भूतं ते न समं भुवि विद्यते।
९. भ—
यथाद्य दृश्यते तात कर्तुमर्हसि चानघ ।
१०. कै ल१ ल२ ब म श रा भ—
०स्तथा नित्यं ।
११. ल१ रा च—देशकालोऽनुवृत्तिश्च ।
१२. कै अ ल१ ल२ ब म श रा च—
०नयश्चार्थसमा० ।

ततः कार्यसमा[1]सक्तिमवगम्य हनूमतः[2] ।
८] विदित्वा च हनूमन्तं चिन्तयामास राघवः ॥८॥ [८
[3]सर्वथा निश्चितार्थो[4]ऽयं हनूमति कपीश्वरः[5] ।
९] निश्चितार्थतरश्चापि हनूमान् कार्यसाधने ॥९॥ [९
[6]तदेवं [7]प्रस्थितो वाग्भिः [8]परिज्ञातश्च कर्मभिः ।
१०] अयं मामनुगृह्णीयात् [9]साधयेत फलोदयम् ॥१०॥ [१०
स समीक्ष्य महातेजा व्यवसायेन वानरम् ।
११] कृतार्थ इति निर्वृत्तः [10]प्रहृष्टेन्द्रियमानसः ॥११॥ [११
ददौ तस्य ततः [11]प्रीतः स्वनामाङ्कोपशोभितम् ।
१२] [12]अङ्गुलीयमभिज्ञाने राजपुत्र्याः परंतपः ॥१२[13]॥ [१२
एतद् दृष्ट्वा [14]हरे प्रीता दर्शनेन जनकात्मजा ।
१३] [15]मंस्यते मन्नियुक्तं त्वां न चोद्वेगं गमिष्यति ॥१३॥ [१३
व्यवसायो हि ते वीर प्रभावश्चैव कर्मणाम् ।
१४] सुग्रीवस्य च संदेशः [16]सिद्धिं कथयतीव मे ॥१४॥ [१४

---

१. कै अ ल₂ ब रा—०समासक्तम०। म श—समासक्तमवगाह्य । भ—०मायुक्तमवग० ।
२. कै अ ल₂ ब रा च—हनूमता।
३. श—सर्वश्च ।
४. म श—०तार्थोऽहं ।
५. ल₂—नास्ति ।
६. कै अ ल₂ रा भ च—तदेव ।
७. कै अ ल₁ ल₂ ब म श रा च—प्रस्थितं ।
८. कै अ ल₁ ल₂ ब म श रा च—परं ज्ञानं च ।
९. म—†सादयेत् ।
१०. च—नास्ति ।
११. ब—†प्रातः ।
१२. अ ब भ—०अभिज्ञानं ।
१३. च—नास्ति ।
१४. कै ल₁ भ च—हरेः ।
१५. कै ल₂ रा—पश्यते । अ ब म श—पश्यन्ती । ल₁—पश्यती ।
१६. अ—सिद्धं ।

तद् गृहीत्वा हरिश्रेष्ठो मूर्ध्नि कृत्वा कृताञ्जलिः ।
१९पू] पादौ स्पृष्ट्वा च रामस्य सुग्रीवस्य महात्मनः । [१९
१९उ] सहायैः सहितः सौम्यः पुप्लुवे वानरर्षभः ॥१९॥ [N
प्रहर्षयन् वानरसैन्यमार्यतं
हरिप्रवीरः श्वसनात्मजः कपिः ।
गताम्बुदः व्योम्नि विशुद्धमण्डलः
१६] शशीव नक्षत्रगणैः समावृतः ॥१६॥ [१६

इत्यार्षे रामायणे किष्किन्धाकाण्डे अंगुलीयप्रदानं नाम
चतुस्त्रिंश: सर्गः ॥ ३४ ॥

---

१. कै अ ल1 ल2 म श रा भ च— † सहायः सहितः ।
२. भ—०सै न्यमागतं ।
३. अ ब च—†गतांबुदो ।
रा—‡गतांबुदौ ।
४. रा—विशुद्धमंडले ।
५. च—नास्ति ।
६. ल1 ब म श रा—किष्किन्दाका० ।
भ—नास्ति ।
७. भ च अंगुरीयकप्र० ।
म—०लीयप्रदर्शनं ।

[वं-४१]=[ पञ्चत्रिंशः सर्गः ]=[ दा-४२ ]

ततः प्रस्थाप्य सुग्रीवो हनुमत्प्रमुखान् हरीन्। [१पू
१] बुद्धिविक्रमसंपन्नान् वायुवेगसमान् जवे ॥१॥ [N
अथाहूय महातेजाः सुषेणं नाम वानरम्। [१उ
२] तारायाः पितरं वीरं श्वशुरं भीमविक्रमम् ॥२॥ [२पू
३पू] कपिं सेनापतिं वाक्यमभिवाद्य प्रसाद्य च। [२उ
N] उवाच वानरं तत्र प्रहस्य हरिपुंगवः ॥३॥ [N
३उ] साहाय्यं कुरु रामस्य कृत्येऽस्मिन् समुपस्थिते। [N
द्वाभ्यां शतसहस्राभ्यां कपीनां कपिसत्तमः ॥४॥ [५पू
४] वृतः शीघ्रं प्रयाहि त्वं विशालां पश्चिमां पुरीम्। [N
N] मार्गध्वं तत्र वैदेहीं निलयं रावणस्य च ॥५॥ [१२पू
सुराष्ट्रान् सहबाह्लीकान् शूद्राभीरांस्तथैव च।
५] स्फीतान् जनपदांश्चैवं विशालानि पुराणि च ॥६॥ [६
१०पू ] घोषवत्यो विशालाश्च नद्यः शीतजलाः शिवाः। [८पू
७उ] पुन्नागनागगहनं बकुलैरधिवासितम् ॥ ७ ॥
N] तथा केतकखण्डांश्च मार्गध्वं हरिपुङ्गवाः। [७
६उ] तत्र केतकषण्डेषु शङ्कतालीवनेषु च ॥८॥

---

१. ल२ ब म श—कपीन्।
२. कै ल१ ल२ ब म श रा—आह्वयन्।
३. ल१ ल२ ब म श—कृते।
४. भ—प्रान्तेऽपरहस्तेन।
५. ल२—पंचमां।
६. कै अ ल१—वाल्मीकान्। ल२ ब म श रा च—वल्मीकान्।
७. म—॰पदांश्चान्यान्।
८. भ—हि।
९. ल१ श—घोषवंत्यो।
१०. रा—+॰गगहनां।
११. रा—+॰वासितां।
१२. कै—तेषां।
१३. कै ल१ ल२ ब म—केतकषंडैश्च। श रा—केतकखंडैश्च।
१४. कै—अन्यैश्च। (अपरहस्तेन) ल१ ल२ ब म श रा—+केतकैः।
१५. अ रा भ च—॰खंडेषु।

७पू ] कपयो विहरिष्यन्ति नारिकेल[1]वनेषु च । [११
N] तत्र तत्र च गच्छध्वं नदीः शीतजलाः शुभाः ॥९॥ [N
१० उ] तापसानामरण्यानि कान्तार[2]गिरय(?)स्तथा । [८उ
११पू ] केकयान्[3] सिन्धुसौवीरान् मालवांश्चारुदर्शनान् ॥१०॥ [N
११ उ] गिरिजाला[4]वृतं चैव[5] नानासत्त्वसमाकुलम् ।
N] महाग्राहसमाकीर्णं सागरं चापि पश्चिमम् ॥११॥ [N
१२ उ] द्वीपांश्च विविधांस्तत्र चित्रपादपशोभितान् । [N
८पू ] मरीचि[6]पत्तनं रम्यं पुण्यं चैव बृहद्वन[7]म् ॥१२॥ [१३पू
N] सरितः सागरान् शैलान् मृगयध्वं वनौकसः । [N
पुराणि च विशा[8]लानि प्रतीच्यां यानि कानिचित् ॥१३॥
N] रत्नवन्ति च मुख्यानि पत्तनानि ततस्ततः । [१३ उ
१३ उ] सिन्धुसा[9]गरयोश्चापि सङ्गमे तत्र पर्वतः ॥१४॥
महाहेमगिरिर्नाम[10] शतशृङ्गो महाद्रुमः ।
१४] तस्य प्रस्थेषु रम्येषु सिंहाः क्रीडन्ति सर्वशः ॥१५॥ [१५पू
हस्तांश्च मत्तमातङ्गाम् तोयदस्वननिस्वनाः । [१६पू
१५ उ] तत्र पक्षि[11]समाः सिंहा[12] बहवो नीडवासिनः ॥१६॥ [N

---

१. कै अ च —नाखिकेरव० ।
२. कै ल$_1$ ल$_2$ ब म थ रा-।कांतारा गिर०
३. कै अ रा च—कैकयान् ।
म—। कैकीयान् ।
ल$_1$ ब श भ—कैकेयान् ।
४. कै अ ल$_1$ ल$_2$ ब म श रा च—
०जालावृतां श्चैव ।
५. कै ल$_1$ ल$_2$ ब म श रा भ—
।०कुलान् ।
६. ल$_2$ रा—मरीचितपनं ।
च—०पतनं ।
७. कै अ ल$_1$ ल$_2$ ब म श रा च—
बृहद्दलं ।
८. ल$_1$—विचित्राणि ।
९. म—०सागरयोश्चैव ।
श—०सागरयोस्तत्र ।
१०. ल$_1$—०गिरिस्तत्र ।
११. अ—।पक्षसमान् सिंहान् ।
ल$_1$—।पक्षिसमां सिं० ।
ल$_2$ म—। पक्षसमाः सिं० ।
च—।०माः सिंहान् ।
१२. अ ल$_1$ ल$_2$ ब म श रा च—
नीलवासिनः ।
कै–प्रान्तेऽपरहस्तेन मूल पाठोऽपि ।

न त्वासादयितव्या हि पुरा दत्तवरा हि ते [1] । [N

१६] तिमिमत्स्यान्[2] गजांश्चैव नीडेष्वारोपयन्ति ते ॥१७॥ [१९पू

सरस्तत्र सुविस्तीर्णं नलिनी च मनोहरा । [N

१७] तानि नीडानि [3]यैनेन गिरिशृङ्गशतं च [4]तत्र ॥१८॥ [१६पू

सर्वमाशु विचेतव्यं कपिभिः कामरूपिभिः ।

१८] विस्तरेण च[5] तीर्थानि विचेतव्यानि [6]वानराः ॥१९॥ [N

N] तापसानामरण्यानि कान्तार[7]गिरयश्च ये ।

मरुधन्वा[8] मरुश्चैव शूद्राभीराल[9]यास्तथा ।

१९] गिरयश्च विचेतव्या वनान्युपवनानि च ॥२०॥ [N

स्त्रीराज्यं[10] च सदा व्यस्तं[11] दत्तचक्रं मरुत्पतिम् ।

२०] पुराणि यवनानां[12] च विचिन्वन्तु वनौकसः ॥२१॥ [N

२१उ] ततः पञ्चनदं रम्यं[13] विचेतव्यं समन्ततः [14] ॥२२॥

[15]काश्मीरमण्डलं चैव [16]शमीपीलुवनानि च । [N

---

१. भ—प्रान्तेऽपरहस्तेन ।
२. कै ल१ ल२ ब म श रा—०मत्स्याण्डजांश्चैव ।
३. अ भ—सिंहानां । ल१—तीर्थानि ।
४. अ—†तः । ब—यत् ।
५. कै—नास्ति ।
६. ल१—यत्नतः ।
७. ल१ ल२ ब म श—कांतारा गिर० ।
८. कै ब श—०धन्वा मरुचैव । अ रा भ च—०धन्वमरुश्चैव ।
९. ल१ ल२ म श रा—†०लयस्तथा । ब—†शुद्धाभीरा० ।
१०. च—स्वराज्यं ।
११. म—न्यस्तं ।
१२. अ च—यवनानि ।
१३. भ—कृत्स्नं ।
१४. कै ल१ ल२ ब म श रा—नास्ति ।
१५. कै ल१ ल२ ब म श रा—कश्मीरमं० ।
१६. भ—वानरैर्वारणोपमैः ।

२२] पुराणि [1]पारदानां च विचेतव्यानि [2]वानरैः ॥ [3]२३॥ [N

२३पू] ततस्त[4]क्षशिलां नाम शा[5]कलं [6]पुष्करावतीम् । [N

N] [7]आरट्टं कपि[8]संवाहा मार्गध्वं [9]वनविस्तरं ॥२४॥ [N

तथा [10]गान्धारदेशं च [11]मरुभूमिं च सर्वशः ।

२४] विचेयं रमणीयं च केकयानां निवेशनम् ॥२५॥ [N

अन्ये चापि विचेतव्या देशाः सागरकाननाः ।

N] [12]अन्विष्यद्भिः पदं तस्य(?ाः)सीताया रावणस्य च ॥२६॥ [N

ततः पश्चिममासाद्य समुद्रं भीमदर्शनम् । [13]

२६] मार्गध्वं वानरास्तत्र [14]भीमं [15]सागरमुत्तमम् ॥ [16]२७॥ [N

[17]ततः [18]शृङ्गं गिरेस्तस्य [19]चित्रकाञ्चनमालिनः ।

२७] [20]पारियात्रस्य शैलस्य विचेयम[21]कुतोभयैः ॥२८॥ [N

---

१. ल२ म श—पादपानां ।
 कै ल१ अ रा भ च—पारदानां।

२. कै ल१ म श रा—पारदैः ।
 ल१ ब—दारदैः । भ—पादपैः ।

३. भ—( प्रान्तेऽपरहस्तेन )

४. ल१ ल२ ब रा भ—तक्षशिला नाम ।

५. कै ल१ ल२ ब म—शाकलां ।

६. अ भ—†पुष्करावतां ।
 च—†पुष्करावतं ।

७. कै ल१ ल२ ब म श रा च—
 आरटं ।

८. अ भ च—† सवाह्निं ।

९. कै ल१ ल२ ब म श रा—
 वनविस्तरे ।

१०. अ—गन्धार० ।

११. कै ल२ ब म रा—मरुत्तस्य ।
 ल१ श—मरुत्तस्य ।
 भ—हरिभूमिं ।

१२. अ भ च—अन्विच्छद्भिः ।
 रा—† अन्विषद्भिः ।

१३. च—नास्ति ।

१४. ल२ ब म श—देवं ।

१५. रा—सागररूपिणं ।
 भ—सागरपत्तनं ।

१६. च—नास्ति ।

१७. च—नास्ति ।

१८. अ—शृङ्गगिरेस्त० ।
 च—नास्ति ।

१९. अ भ च—०नपादपं ।

२०. कै ल१ ल२ ब म श रा—
 पारिजातस्य ।

२१. ब—विचेतव्यमकु० ।
 म—†०तो भयाः ।

चतस्रो विंशतिश्चात्र गन्धर्वाणां महात्मनाम् ।
२८] वसन्त्यग्निनिकाशानां कोट्यो वानरपुंगवाः ॥२९॥ [१९
दूरतो वर्जनीयास्ते वानरैर् भीमविक्रमैः । [२०उ
२९] नादेयं फलमूलं च तस्मिन् देशे प्लवंगमैः ॥३०॥
अप्रधृष्या हि ते वीराः सत्त्ववन्तो विशेषतः । [२१
३०] रक्षन्ति फलमूलं च गन्धर्वा भीमविक्रमाः ॥३१॥
तत्र यत्नश्च कर्तव्यो मार्गितव्या च जानकी । [२२पू
३१] न हि वोऽस्ति भयं किंचित् तत् सर्वमनुवर्तताम् ॥३२॥[२३उ
चतुर्भागे समुद्रस्य चक्रवान् नाम पर्वतः । २५पू
३२] सर्वरत्नमयैः शृङ्गैर्नित्यकालफलद्रुमैः ॥३३॥ [N
तत्र तु चक्रं सहस्रारं वज्रनाभमयस्मयम् ।
३३] सुरारिमथनं दिव्यं निर्मितं विश्वकर्मणा ॥३४॥ [२५उ
तत्र मेघौघनिर्घोषः पाञ्चजन्यो ह्यरिंदमः । [N
N] गत्वा दशशतावर्तं देशं स मधुसूदनः ॥३५॥ [N
ततः पाञ्चजनं हत्वा हयग्रीवं च दानवम् ।
३४] आजहार पुरा शङ्खं चक्रं च पुरुषोत्तमः ॥३६॥ [२६
३८पू] ततो मेघनिभोऽत्युच्चैः स वज्राशनिनिस्वनः । [N

---

१. कै ल२ ब म—नादेये फलमूले ।
ल१ रा—नादेयफलमूले ।
श—न देये फलमूले ।
२. च—तच्च ।
३. रा—सहस्रार्धं० ।
४. अ भ च—०नाभमयं स्वयं ।
५. म श—सुरारिम० ।
६. भ—स ह । च—स च ।
७. ल१—†०निर्दोषः ।
८. भ—तं ।
९. कै अ ल१ ल२ ब श रा भ च—पाचजन्यं ।
१०. भ—मेघ इवात्यु० ।
११. श भ—०शनिनिस्वनं ।
म—‡०निनिःसुनः ।

योजनानि चतुःषष्टिर् वैराहो नाम पर्वतः ।
३६] सुवर्णशृङ्गः श्रीमांश्च ह्यगाधे वरुणालये ॥३७॥ [२८
तस्य चित्रेषु पार्श्वेषु नितम्बेषु गुहासु च ।
N] रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥३८॥ [N
प्राग्ज्योतिषं नाम ततो जातरूपमयं पुरम् ।
N] यस्मिन् वसति दुष्टात्मा नरको नाम दानवः ॥३९॥ [२९
तस्य सानुषु चित्रेषु विशालासु गुहासु च ।
३५] रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ४०॥ [३०
३७पू ] तमतिक्रम्य शैलेन्द्रं महेन्द्रप्रतिपालितम् ।
३८ उ] द्रक्ष्यन्ति कपयः शैलमुल्लिखन्तमिवाम्बरम् ॥४१॥ [N
N] स हि देवर्षिसंघैश्च काञ्चनैस्तरुभिर्वृतः । [N
३७ उ] शिखराग्रैस्य धाराणां सहस्रं परिवर्तते ॥४२॥ [N
तं गजाश्च मयूराश्च सिंहव्याघ्राश्च पर्वतम् ।
३९] अभिगच्छन्ति संहृष्टा धाराशब्दकृतोत्सवाः ॥४३॥ [३२
स हि शब्दो महानासीद् भयाच्छब्दस्य तं गिरिम् ।
N] समन्तादभिगच्छन्ति देव-दानव-राक्षसाः ॥४४॥ [N

---

१. कै ल₁ ब रा—०वाराहो ।
२. अ च—०मांश्चागाधे ।
भ—‡ श्च ष्यगाधे ।
३. कै—नगमिति प्रान्तेऽपरहस्तेन ।
४. कै अ ल₁ ल₂ ब म थ रा च—चित्रासु दिशासु च ।
५. ल₁—नास्ति ।
६. कै ल₁ ल₂ ब म थ रा—†शिखरौघस्य ।
७. ल₁—†वाराणां ।
रा—†दाराणां ।
८. ल₂—†पालितं ।
९. अ च—‡ ०कृतोद्वराः ।
रा—कृतोद्भवाः ।
भ—०कृतोद्धताः ।
१०. ब—भयाच्छब्दस्य ।

तस्मिन् हरिहयः श्रीमान् महेन्द्रः पाकशासनः ।
४०] अभिषिक्तस्तदा राज्ये सुषेणो नाम्नि पर्वते ॥४५॥ [३३
तस्य सानुषु चित्रेषु विशालासु गुहासु च ।
N] रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥४६॥ [N
तमतिक्रम्य शैलेन्द्रं महेन्द्रप्रतिपालितम् ।
४१] षष्टिगिरिसहस्राणि काञ्चनानि गमिष्यथ ॥४७॥ [३४
तरुणादित्यवर्णानि भ्राजमानानि सर्वतः ।
४२] जातरूपमयैः शृङ्गैः पुष्पितैरुपशोभितैः ॥४८॥ [३५
प्रभया तेषु शैलेषु ये तत्र मृगपक्षिणः ।
N] ओषध्यश्च प्रकाशन्ते पादपाश्च हिरण्मयाः ॥४९॥ [N
तेषां मध्ये स्थितो राजा मेरुः कनकपर्वतः ।
४३] आदित्येन प्रसन्नेन तस्मै दत्तो वरः पुरा ॥५०॥ [३६
४४ उ] प्रभावात् तव शैलेन्द्र प्रभया ये त्वया श्रिताः ।
त्वत्प्रसादाद् भविष्यन्ति दिवारात्रं च काञ्चनाः॥५१॥ [३७
४५] त्वयि ये चाभिवत्स्यन्ति देवदानवराक्षसाः ।
ते भविष्यन्ति रक्ताङ्गाः काञ्चनाः प्रभया तव ॥५२॥ [३८
४६] आदित्या वसवो रुद्रा मरुतश्च सहाश्विभिः ।
आगम्य पश्चिमां संध्यां मेरावुत्तमपर्वते ॥ ५३॥ [३९
४७] आदित्यमुपतिष्ठन्ति तैश्च सूर्योऽभिपूजितः ।

---

१. ब—पर्वणि ।
रा—पर्वणे ।
कै—ते इति प्रान्तेऽपरहस्तेन ।
२. च—समतिक्रम्य ।
३. कै ल१—षष्टिगिरि० ।
भ—षष्टिं गिरि० ।
४. अ च—०तै रूपशोभितैः ।
५. कै अ ल१ ल२ ब म श रा च—औषध्यश्च ।
६. कै ल१ ल२ ब म श रा—पार्श्वगा ।
७. श—मेरावेतमुपासते' इति परिशोधितम् ।
८. रा—नास्ति ।

अदृश्यः[1] सर्वभूतानामस्तं गच्छति[2] पर्वतम् ॥५४॥ [४१

४८] योजनानां सहस्राणि दृश्य(?श)तानि[3] दिवाकरः ।

४९पू] निमेषान्तरमात्रेण तं गच्छति शिलोच्चयम् ॥५५॥ [४१

५६ उ] शृङ्गे तस्य महद्दिव्यं[4] भवनं सूर्यसन्निभम् ।

प्रासादतलसंबाधं निर्मितं विश्वकर्मणा ॥५६॥ [४२

५७] शोभितं तरुभिश्चित्रैर्[5] नानापक्षिसमाकुलम् ।

५८पू] निकेतं पाशहस्तस्य वरुणस्य महात्मनः ॥५७॥ [४३

४९ उ] आश्रमो ह्यभितो[6] मेरोर् यत्रासौ[7] द्युतिमानृषिः ।

प्रकाशयति तं[8] देशं द्वितीय इव भास्करः ॥५८॥ [N

५०] प्रष्टव्यो[9] मेरुसावर्णिर् महर्षिः सूर्यसन्निभः ।

५१पू] प्रणम्य शिरसा भूमौ प्रवृत्तिर् मैथिलीं प्रति ॥५९॥ [४७

५१ उ] अंतस्य मेरोर्[10] मध्ये तु गिरिर्[11] दशशिरा महान् ।

जातरूपमयः[12] श्रीमान् राजते चित्रवेदिकः ॥६०॥ [४४

---

१. श—अदृश्याः ।

२. श—†गच्छन्ति ।

३. कै ल₁, ल₂ ब म श रा भ—द्वे शतानि ।

४. कै ल₁, ल₂ ब म श रा—महारम्यं ।

५. श—नानावृक्षस० ।

६. कै —†आश्रमे ह्यभिरतो ।

ल₁—†आश्रमेऽभिरते ।

अ च—आश्रमोऽभिरतो ।

ल₂ म श—आश्रमेऽभिरतो ।

ब —आश्रमे ह्यभितो ।

७. कै ब श रा—यत्रास्ति ।

ल₁ ल₂ म—यत्रासीत् ।

८. कै अ ल₁ ल₂ ब म श रा—†तद् ।

९. कै ल₁, ल₂ ब म श रा—†प्रष्टव्यो ।

१०. कै अ ल₁, ल₂ ब म श रा च—अन्तरा मेरु० ।

११. भ—तलो दशशिरो महां ।

अ च—बलो दशशिरो महां ।

१२. कै ल₁ ब म रा—जातरूपमयैः ।

५२] तेषु सर्वेषु देशेषु निर्झरेषु गुहासु च ।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥६१॥ [४५

५३] तप्तकाञ्चनवर्णाभं लोहितार्कसमप्रभम् ।
अस्तं[1]मालोकयिष्यन्ति कपयः कपियूथपाः ॥६२[2]॥ [N

५४] स[3] शैलो यो न[4] गन्तव्यो वानरैर् [5]वानरर्षभाः ।
तत्र वैश्वानरीभूत(?ता)स्तेजसोत्तमतेजसः ॥[6]६३॥ [N

५५] न सिंहा न च शार्दूला न मृगा न विहङ्गमाः ।
अभिगच्छन्ति तं देशं न देवा न च [7]राक्षसाः॥६४॥ [N

५६] तस्य शृङ्गे महद् दिव्यं भवनं सूर्यसन्निभम् ।
प्रासादशतसंबाधं निर्मितं विश्वकर्मणा ॥६५[8]॥ [N

५७] शोभितं पद्मिनीभिश्च काञ्चनैश्च महाद्रुमैः[9] ।
५८पू ] निलयं(?) लोकपालस्य वरुणस्य महात्मनः ॥६६॥ [N

५९ उ] प्रतीच्यां दिशि निर्माणं निर्मितं वै स्वयम्भुवा ।
६०पू ] काञ्चनो विमलः सौम्यः सोमार्चि[11]रपि वानराः ॥६७॥ [N

५८ उ] एतावज् जीवलोकस्य भास्करो [12]रजनीक्षये ।

---

१. कै अ ल१ ल२ ब म श रा च— अश्वमालो० ।
२. कै अ ल१ ल२ ब म श रा च— श्लोकोऽयमूनषष्टिश्लोकादूर्ध्वं पठितः ।
३. कै अ ल१ ल२ ब श रा च— सुशैलो ।
४. भ—नावगन्तव्यो ।
५. भ—+वानरर्षभः ।
६. अ च— वैश्वानरो भूतस्तेजसा वर्मं तेजसः ।
भ— „ „ साद्यमं तेजसा ।
७. अ भ च—पन्नगाः ।
८. भ—प्रान्तेऽपरहस्तेन ।
९. ल२—+०द्रुमम् ।
१०. भ—०लस्तालः ।
११. अ भ च—सोमार्चिनाम ।
१२. कै—+०नु जनीक्षये ।

५९पू ] कृत्वा त्रितिमिरं सर्वमस्तं गच्छति पर्वतम् ॥६८॥ [४८
६० उ] एतावद् वानरैः शक्यं गन्तुं वानरपुंगवाः ।
६१पू ] अभास्[2]करममर्यादं नाभिजानाम्यतः परम् ॥ [3]६९॥ [४९
N] सहैव शूरो युष्माभिः श्वशुरो मे गमिष्यति । [५१पू
स्वयमेको बलवतां समर्थः प्रतिपालने ॥७०॥ [N
६४] श्रोतव्यं सर्वमेतस्य भवद्भिः पृष्ठगामिभिः । [५१उ
६५पू ] योऽन्यथा स्थास्यति हरिः स मे वध्यो भविष्यति॥७१॥ [N
अङ्गभूतो मम ह्येष श्वशुरो मतिमान् भृशम् ।
N] भवन्तः सर्वविक्रान्ताः प्रमाणं सर्वकर्मसु ॥७२॥ [५२
६६ उ] प्रमाणमेतं संस्थाय सर्वतः पश्चिमां दिशम् ।
भवन्तः परिमार्गन्तां यथा दृश्येत जानकी ॥७३॥ [५३
६७पू ] रामपत्न्यां हि दृष्टायां मैथिल्यां सर्वशो वयम् ।
६७ उ] ऋणान्मुक्ता भविष्यामः कृतस्य प्रतिकारिणः ॥७४॥ [५४
६९ उ] ततोऽन्यदपि यत् किञ्चित् कार्यमांत्ययिकं(?) हितम् ।
N] सम्प्रधार्य भवद्भिश्च देशकालानुसंहितम् ॥७५॥ [५५
६१ उ] अधिगम्य तु वैदेहीं निलयं रावणस्य च ।

---

१. कै ल₂ ब म श रा—पर्वते ।
२. कै—आभास्करमामर्यादं ।
ल₁ ल₂ ब म श रा—
आभास्करममर्यादं ।
३. श—नास्ति ।
४. अ रा भ च—बलवतो ।
५. कै अ ल₁ ल₂ ब म श रा च—
वेगगामिभिः ।
६. भ—प्रान्तेऽपरहस्तेन ।
७. म रा—०विक्रान्तः ।
८. अ च—प्रमाणे ।
९. अ भ च—णमेतत् ।
१०. कै—०मार्थयिनं ।
म रा—०माभ्ययिकं ।
अ च—मान्ययिकं ।
भ—कार्यस्यास्य हितं भवेत् ।
११. श—अभिगम्य ।

६२पू ] अस्तेपर्वतमासाद्य निवर्तध्वं प्लवङ्गमाः ॥७६[2]॥ [५०पू

६३पू ] अगम्यं हि परं तस्माद् देवैरपि सवासवैः ॥[4]७७॥ [N

६२ उ] ऊर्ध्वं मासान्न वस्तव्यं वसन् वध्यो भवेन्मम । [५०उ

N] अभिगम्य निवर्तध्वं सीतां दृष्ट्वा हरीश्वराः ॥७८॥ [N

भवान् गुरुर्मे श्वशुरः पिता यथा

सुहृत् तथाऽन्यो मम नास्ति कश्चन ।

कृतेन कार्येण यथा पुरा कृतं

६८] यथा च पश्यामि तथा विधीयताम् ॥७९॥ [N

ततः सुषेणप्रमुखाः प्लवंगमाः

सुग्रीववाक्यं निपुणं निशम्य ।

आमन्त्र्य सर्वे प्लवगाधिपं ततो

६९] जग्मुर् दिशं ते वरुणाधिपालिताम् ॥८०॥ [५६

---

१. ब भ—अस्तं पर्वत० ।

२. ल१—अतः परं सपादपद्यद्वयी ८० तमस्थ'प्लवंगमाः' इत्यन्ता त्यक्ता ।

३. म—इत ऊर्ध्वं 'निवर्तध्वं' इत्यन्तः पाठो नास्ति ।

४. ल२ ब—+सवासवः ।

५. भ—नास्ति ।

६. रा—अधिगम्य ; म—नास्ति ।

७. रा—कृत्येन ।

८. ल२ ब म श—तथा ।

९. भ—+प्रणम्य ।

१०. कै ल१ ल२ ब म श रा—वरुणाभिपालिताम् ।

ततः प्रयाता द्रुमखंण्डमण्डितां
पतङ्गनानाविधसेवितद्रुमाम् ।
दिशं प्रतीचीं प्रति वानरोत्तमाः
N] तदा प्रहृष्टाः परराष्ट्रमर्दनाः ॥८१॥ [N

इत्यार्षे रामायणे किष्किन्धाकाण्डे पश्चिमदिग्वर्णनं नाम
पञ्चत्रिंशः सर्गः ॥ ३५ ॥

---

१. ल$_1$ ल$_2$ ब म श—द्रुमषण्डमं० ।

२. कै अ ल$_1$ ल$_2$ ब म श रा—वतः ।

३. अ—प्रकृष्टाः ।

४. ल$_1$—नास्ति ।

५. ल$_2$ ब म श—किष्किन्दाका० । भ—नास्ति ।

१पू ] ततः प्रस्थाप्य सुग्रीवः श्वशुरं पश्चिमां दिशम् । [१पू
N] चिन्तयामास मतिमान् मुहूर्तमिव[1] वानरः ॥१॥ [N
१उ] वीरं शतबलं[2] नाम वानरं वानरर्षभः । [१उ
उवाच हरिराजस्तं[3] सर्ववानरसंमतम् ॥२॥
२] राघवस्य शुभं वाक्यमशुभं रावणस्य[4] च । [२
वृतः कोटिसहस्रेण[5] वानराणां महौजसाम् ॥३॥
३] विवस्वतः सुतैः सार्धं प्रतिष्ठस्व मम[6] प्रिये । [३
यक्ष-राक्षस-गन्धर्व-किन्नरेशेन धीमता[7] ॥४॥ [N
४] पालितामेकपिङ्गेन धनदेन महात्मना ।
उत्तरां त्वं[8] दिशं गत्वा सशैलवनकाननाम् ॥५॥ [N
N] मार्गस्व[9] हरिभिः[10] सार्धं देशकालानुकोविदैः[11] ।
तत्र[12] सीतां च वैदेहीं निलयं रावणस्य च ॥६॥ [N
५] मृगयस्व प्रयत्नेन विक्रान्तैर् हरिभिः सह । [N
दिशमेतां[13] सुविपुलां हिमशैलावतंसकाम्[14] ॥७॥

---

१. भ—मुहूर्त्तमपि ।
२. कै अ ल१ म श भ च—शतबलिं ।
रा—इकारो हरितालितः ।
३. कै ल२ रा भ—|हरिराजा तं ।
अ च—|हरिराजानं ।
४. श—|वानरस्य ।
५. कै अ ल१ ब म श रा च—कोटीसह० ।
६. अ च—|समप्रियं ।
भ—समन्त्रिभिः ।
७. भ—प्रान्तेऽपरहस्तेन ।
८. कै अ ल१ ल२ ब म भ—तु ।
श—च ।
९. कै अ ल१ ल२ ब म श रा च—मार्गध्वं ।
१०. कै अ रा भ च—सार्धं हरिभिः ।
११. भ—०कोविदः ।
१२. ल१ ब—ततः ।
१३. भ—|दिशमेकां ।
१४. अ च—|०लवतंसकां ।

N] सर्वतः परिमार्गध्वं[1] राजपुत्रीमनिन्दिताम् । [४
दिशमेतां शुचिं[1] दिष्टां कर्तुमर्हथ वानराः । [N
६] विदेहराजदुहितुः कार्ये संसक्तमानसाः ॥८[2]॥ [N
अस्मिन् कार्ये निवृत्ते तु कृते दाशरथेः[3] प्रिये ।
७] ऋणान्मुक्ता भविष्यामः कृतार्था हरिपुङ्गवाः ॥९॥ [५
कृतं हि प्रियमस्माकं राघवेण[4] महात्मना ।
८] तस्य चेत् प्रतिकर्ताऽस्मि सफलं जीवितं मम ॥१०॥ [६
एतां बुद्धिं समास्थाय यथा लभत मैथिलीम् ।
९] तथा भवद्भिः कर्तव्यं मम प्रियहितैषिभिः ॥११॥ [८
अयं[5] हि सर्वभावेन संमान्यो[6] हरिपुङ्गवाः[7] ।
१०] अस्मासु च परां प्रीतिं गतः परबलार्दनः[8] ॥१२॥ [९
इमानि देशदुर्गाणि नदीशैलान्तराणि च ।
११] भवन्तः परिमार्गन्तु[9] बुद्धिविक्रमसंमताः[10] ॥१३॥ [१०
तत्र मत्स्यान् पुलिन्दांश्च शूरसेनांस्तथैव च ।[11]
१२] प्रस्थकान्[12] मद्रकांश्चैव[13] कुरूंश्च सह केकयैः[14] ॥१४॥ [११

---

१. कै रा भ—शुचिं धिष्टां ।
अ च—शुचिविद्दिष्टां (वंग—सुविचितां)।
ल, —शुचिदिष्टां ।
२. भ—प्रान्तेऽपरहस्तेन ।
३. अ ल, म च—|दाशरथे प्रि० ।
४. कै रा—|राघवेन ।
५. व—राघवः ।
६. अ—|स मान्ये ।
म च—स मान्यो ।
ल,—संभाव्यो ।
७. कै ल, ल, व म श—|हरिपुंगवः।
८. म—बलबलार्दनः ।
९. अ भ च—|परिमार्गध्वं ।
१०. श—०क्रमसत्कृताः ।
११. अ च—
तत्र मत्स्याः पुलिंदाश्च शूरसेनास्तथैव च।
१२. अ—|प्रसृतान् ।
च—|प्रस्तुतान् ।
भ—|प्रस्थूलान् ।
१३. ल, रा—|भद्रकांश्चैव ।
१४. श रा—कैकयैः ।

गान्धारान् यवनांश्चीनान् पौण्ड्रांश्चैव[1] समालवान्[2] ।
१३] वाह्लीकानृषिकांश्चैव तथा (?)रामठतङ्गणान्[3] ॥१५॥ [१२
चीनान् परमचीनांश्च[4] तुषारान् वर्व(?र्व)रानपि[5] । [१३पू
१४] कटकानस्खलान्[6] जालान् काम्भोजानश्वसंवृतान्[7] ॥१६॥
एतानत्यद्भुतान् देशान् सपर्वतनदीगुहान् । [N
१५] अन्विष्य[8] दरदांश्चैव हिमवन्तं गमिष्यथ ॥१७॥ [१३ उ
रोध्रपद्मकषण्डैश्च[9] देवदारुवनैस्तथा । [१४पू
१६] सालैस्तालैस्तमालैश्च भूर्जैश्च[10] बहुभिर्वृतम्[11] ॥१८॥ [N
किन्नरैश् चारणैः सिद्धैः पिशाचैर् यक्षराक्षसैः[12] ।
१७] अनुकीर्णः स्थितः शैल आवृत्य[13] दिशमुत्तराम् ॥१९॥ [N

---

१. कै ल$_1$ ल$_2$ ब म श रा—पाण्डूंश्चैव ।
च—पाण्ड्रांश्चैव ।
२. कै ल$_1$, ल$_2$ ब म श रा—॰मालकान् ।
३. कै रा—॰रुद्रणान् ।
अ च—रमठ उद्रणान् ।
ल$_2$—रमठरुद्रणान् ।
श—॰तद्गणान् ।
ल$_1$ ब म—॰तद्गुणान् ।
४. ल$_1$, ल$_2$ ब म रा—परचीनांस्तु तुरुखान् ।
कै—परमचीनांस्तुरुखान् ।
श—परिची॰ ।
च—परमचीनांश्च ।
( चीनानिति भ्रष्टः )
५. कै ल$_1$, ल$_2$ ब म श रा—खर्वरान् ।
६. ल$_1$ रा—कट्टकानस्खलान् ।
कै—कटुका॰ ।
७. अ च—
कट्वलानखकान्कालीन्कांवोजानखसंवृतान् ।
भ—
कट्वलानस्यकालीकान्कांवोजांखससंवृतान् ।
८. रा—अन्विष्यथ रदांश्चैव ।
च—॰ष्य दगरांश्चैव ।
९. अ च—॰पद्मकखंडैश्च ।
भ—लोध्रपद्मकखंडैश्च ।
श—|रंध्रपद्मक॰ ।
१०. अ च—|भूयैश्च ।
११. ल$_2$ ब—|॰वृतां ।
१२. श—पिशाचराक्षसैः ।
१३. अ च—|आवृता ।
ल$_2$—|आवृत्त ।

तापसैर् गुह्यकैः सिद्धैः किन्नरैर् मृगपक्षिभिः ।[1]
१८] अनु[2]कीर्णवनः शैल आस्थितः शतयो[3]जनम् ॥२०॥ [N
तस्य पर्वतजालेषु कन्दरेषु गुहासु च । [N
१९] रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥[4]२१॥ [१४ उ
किरातान् पह्लवान् घोरान् प[5]शुपालान् सुदारुणान्[6] [N
२०] अन्विष्य तां(तान्?)भृगोस्तुङ्ग[7]मुपान्तस्थं गमिष्यथ॥२२॥[N
ततो महाऽऽश्रमं गत्वा देवदानवसेवितम् ।
२१] कालं नाम महाघोरं पर्वतं चैव द्रक्ष्यथ ॥२३॥ [१५
तस्मिन् पर्वतशृङ्गेषु वनेषूपवनेषु च ।
२२] अन्वेष्यः सह वैदेह्या रावणो राक्षसाधिपः ॥२४॥ [१६
ताम्रा[8]गारमतिक्रम्य हि[9]मगर्भं महागिरिम् ।
२३] ततः सुदर्शनं नाम पर्वतं तं गमिष्यथ ॥२५॥ [१७
तस्य सर्वेषु शृङ्गेषु प्रियङ्गू[10]णां वनेषु च ।
२४] रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥[11]२६॥ [१९
तमतिक्रम्य चाकाशं पर्वतं शतयोजनम् ।

---

१. म श—नास्ति ।
२. कै ल$_2$ रा—† अनुपर्णवतः ।
अ—† अनुकीर्णवतः ।
ल$_1$ ब म श—अनुकीर्णः स्थितः ।
च—† अनुसवर्णतः ।
३. कै अ ल$_1$ ल$_2$ ब म श रा च—शतयोजनात् ।
४. ल$_1$—अतः परं २६श्लोकान्तः पाठो नास्ति ।
५. कै म श—† ॰पातान् ।
अ ल$_1$ ल$_2$ ब रा च—पशुघातान् ।
६. भ—अतः परमधिकः पाठः—
अन्वेष्यः सह वैदेह्या रावणो राक्षसाधिपः ।
७. अ—‡ ॰ङ्गमुपलथं ।
रा—॰ङ्गमुपस्थाने ।
भ—‡ ॰स्तुगंप्रस्थतुंगं ।
८. भ—ताम्राकार॰ ।
९. ब—हिमवन्तं ।
१०. कै अ ल$_1$ ल$_2$ ब म श रा च—प्रियङ्गूनां ।
११. भ—अतः परमधिकः पाठः—
तमतिक्रम्य शैलेन्द्रं हेमगर्भं महागिरिम् ।
ततो देवसभं नाम पर्वतं तं गमिष्यथ ॥

२५] पर्वतो हि नदीवृक्षैः सर्वसत्त्वैर् विवर्जितः[1] ॥२७॥ [२०

N] तत्र[2] घोरतमं देशं गिरिमध्यमनम्भसम् ।

२६पू ] समन्ताद् योजनशतं संतप्तं सूर्यरश्मिभिः ॥२८॥ [N

N] न तत्र सिंहा[3] व्याघ्रा वा वर्जितं मृगपक्षिभिः ।

२६ उ] त्वरमाणैः[4] कृताहारैः पीतं[5]तोयैश्च वानरैः ॥२९॥ [N

तं तु शीघ्रमतिक्रम्य काननं[6] शतयोजनम् ।

२७] अपरं पर्वतं रम्यं[7] कैलासं नाम द्रक्ष्यथ ॥३०॥ [२१

तत्र पाण्डुरमेघाभं जाम्बूनदविभूषितम् ।

२८] कुवेरभवनं दिव्यं निर्मितं विश्वकर्मणा ॥३१॥ [२२

विशाला[8] नलिनी तत्र[9] प्रभूतकमलोत्पला ।

२९] हंस-कारण्डवाकीर्णा मुक्ता-वैडूर्य-वालुका ॥[10] ३२॥ [२३

तत्र वैश्रवणो राजा सर्वभूतनमस्कृतः ।

३०] धनदो रमते[11] श्रीमान् गुह्यकैः[12] सह राजराट् ॥३३॥ [२४

तस्य चन्द्रनिकाशेषु निर्झरेषु गुहासु च ।

३१] रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥३४॥ [२५

तमतिक्रम्य शैलेन्द्रं त्रिशृङ्गं नाम पर्वतम् । [N

४६] तस्य पादे महद् दिव्यं सरः काञ्चनभूषितम् ॥३५॥

---

१. रा—† विवर्जितैः ।
२. अ—ततो ।
३. कै म—सिंहव्याघ्रा ।
४. म—† त्वरमाणकृतहारैः ।
५. ल$_2$—‡ पीतयैश्च ।
ल$_1$—पीतं तोयैश्च ।
६. कै अ ल$_1$, ल$_2$ ब म श रा च—काञ्चनं ।
७. कै ल$_1$, ल$_2$ ब म श रा—रम्यं ।
८. अ रा—विशालनलनी ।
९. भ—यत्र ।
१०. भ—प्रान्तेऽपरहस्त्वेन ।
११. श—‡ रमति ।
१२. ल$_1$, ल$_2$ ब श रा—†गुह्यकः ।
म—‡ गुह्यक ।

तस्मात् प्रवर्तते[1] दिव्या शीघ्रस्रोतास्तरङ्गिणी[2] ।
४७] नदी नागह्रदाकीर्णा सरयूर् लोकभाविनी[3] ॥३६॥ [N
तस्यैकं काञ्चनं शृङ्गं पर्वतस्याग्निसंनिभम्[4] ।
४८] वैडूर्यमयमेकं च श्वेतमेकं च राजतम् ॥३७॥ [N
अनुत्पन्नेषु भूतेषु बभूव किल भौवनः[5] ।
४९] अग्रजः सर्वभूतानां विश्वकर्मेति नामतः ॥३८॥ [N
तस्य तत् किल पौराणम्[6]अग्निहोत्रं महात्मनः ।
५०] आसीत्त्रिशिखरः[7] शैलो विहितस्तत्र योगतः[8] ॥३९॥ [N
तत्र[9] सर्वाणि भूतानि संवमेधैर्[10] महात्मनः ।
५१] उद्भूतश्च[11] महादेवः सर्वभूतमहेश्वरः ॥४०॥ [N
रुद्रस्य किल पौराणं[12] तत् सरः सुरमेधिकम्[13] ।
५२] ततः प्रसन्नसलिला प्रवृत्ता कुटिला नदी ॥४१॥ [N
देव–दानव–गन्धर्व–पिशाच–पतगोरगाः ।

---

१. ल$_1$ ब—प्रववृते ।
२. अ रा भ च—‡ शीघ्रस्रोता तरङ्गिणी ।
३. कै—०लोकविभाविनी ।
४. कै—०संभवं ।
५. कै.—‡ भौवनः । ल$_1$—† भावनः ।
६. कै ल$_1$ म श भ—पौराणा० ।
७. कै ल$_1$ ल$_2$ ब म श रा—अशीतिशिखरः । ‡ अ—आशीत्त्रिशिखरः ।
च—‡ आशीत्त्रिशिखः ।
८. अ—†० हितास्ते त्रयोऽग्नयः ।
च—०हितास्ते त्रयो ‡ गयः ।
भ—० † हितास्ते त्रयाग्नयः ।
९. कै ल$_2$ ब म श—तत्र सर्वाभिभूतानि ।
ल$_1$—† सर्वे तत्र विभूतानि ।
१०. अ—‡ सरमेधे म० ।
भ—‡ सरमेधेर्म० ।
च—† सर्वमेधा म० ।
११. भ—अनुभूतो ।
१२. कै ल$_1$ म श—पौराणी ।
१३. अ—† शरमैधिकं ।
कै च—‡ सरमैधिकं ।

५३] धर्षयन्ति न तं शैलं प्रदीप्तमिव पावकम् ॥४२॥ [N
तत्र पर्वतशृङ्गेषु नदीषु च गुहासु च ।
५८] रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥४३॥ [N
५४पू] तमतिक्रम्य शैलेन्द्रं महादेवेन पालितम् ।
N] क्रौञ्चं नाम गिरिं रम्यं गता द्रक्ष्यथ वानराः ॥४४॥ [N
[1]क्रौञ्चं तु गिरिमासाद्य[2] बिलं[3] तस्य गिरेर्महत् ।
३२] दुष्प्रवेशं दुराधर्षं सिद्धचारणसेवितम् ॥४५॥ [२६
वसन्ति हि महात्मानस्तत्र सूर्यसमप्रभाः ।
३३] देवैरभ्यर्चिताः शश्वद् देवतुल्या[4] महर्षयः ॥४६॥ [२७
ताश्च[5] सानुगुहाः सर्वाः[6] सानवः शिखराणि च ।
३४] निर्झराश्च नितम्बाश्च मार्गितव्यास्ततस्ततः ॥४७॥ [२८
क्रौञ्चस्य शिखरं[7] चापि निरीक्षध्वं समन्ततः ।
३५] सवृक्षकं[8] सशैलं च मानसं विहगालयम् ॥४८॥ [२९
न गतिस्तत्र[9] भूतानां देवदानवरक्षसाम् ।
३६] तस्मान्निरीक्षितव्यः स पर्वतश्च[10] समानसः ॥४९॥ [३०

---

१. रा—कौंवं ।
२. ब—बिलमासाद्य ।
३. कै—† बलिं ।
४. अ —‡ ० तुल्यः महर्षयन् ।
म—०महर्षिभिः ।
ल₁—‡ महर्षयत् ।
५. कै—ते च सानु० ।
भ—क्रौंचसानुगु० ।
ल₁—‡ ताश्च सानुमहाः ।
अ च—ते च सानुगुहां ।
म—ताश्चसाधुगु० ।
६. अ च—† सर्वां ।
७. भ—क्रौंचं सशिखरं ।
८. अ भ च—सवृक्षं कामशैलं ।
९. कै ल₂ ब म श रा—†ग्लानिस्त० ।
ल₁—‡ ग्लाम्निस्त० ।
च—‡ गानिस्त० ।
१०. कै अ रा भ च—
पर्वतश्चैव मानसः ।

५९पू ] तमतिक्रम्य शैलेन्द्रं सिद्धचारणसेवितम् ।[1]
५४ उ] योजनानि चतुःषष्टिः पर्वतो गन्धमादनः ॥[2]५०॥ [N
तालिशैश्च[3] वराङ्गैश्च[4] तमालैश्चोपशोभितः[5] ॥५१॥ [N
५५] पुष्पितोपवनः श्रीमान् सिद्धचारणसेवितः ।
N] योजनानि चतुःषष्टिरसितागुरुभूषितः[7] ॥५२॥ [N
शृङ्गे[8] तस्य स्थिता जम्बूः[9] दिव्यनाम्ना सुदर्शना ।
५६] जातरूपमयी दिव्या विराजति सवेदिका ॥५३[10]॥ [N
जम्बूद्वीपस्य सा जम्बूर्[11] ध्वजो वानरपुंगवाः ।
५७] अर्चिता चोपगीता च नित्यमप्सरसां गणैः ॥५४॥ [N
तत्र चित्रेषु रम्येषु वनेषु[12] च[12] सुगन्धिषु ।
N] रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥५५॥ [N
मैनाकस्य[13] विचेतव्यः सानुप्रस्थः सकन्दरः[14] ।
३८] स्त्रीणामश्वमुखीनां[15] च निकेतास्तत्र तत्र वै ॥५६॥ [३२

---

१. भ—
तमतिक्रम्य शैलेन्द्रं मैनाको नाम पर्वतः ।
मयस्य भवनं तत्र दानवस्य स्वयं कृतं ॥
२. श रा—नास्ति ।
३. कै ल२ ब म श रा भ च—
तोलिशैश्च ।
ल१—तौलिशैश्च ।
४. ल२—+ वरांगश्च ।
५. कै ल१ ल२ ब म श रा—
०श्चोपशोभितम् ।
६. अ—'सिद्ध' इत्यारभ्य '०सिता' 'गु०'
इत्यन्तः पाठो नास्ति ।
ल१—सिद्धवानरसेवितः ।
७. ल१—०गुरुभूषिता ।
८. रा—+ श्रृंगं ।
९. कै अ ल२ ब म श रा च—
जंबूर्दिव्य० ।
१०. भ—नास्ति ।
११. कै—+ जंबू० जो ।
म—+ जंबू वजो ।
च—+ जम्बू ध्वजो ।
१२. भ—काननेषु ।
च—+ वानरेषु ।
१३. कै अ ल१ ल२ म श रा भ च—
मैनाकश्च ।
१४. कै ल१ ल२ ब म श—सकंधरः ।
१५. श - ० णामश्वमु० ।

तत्राश्रमपदं[1] रम्यमृषीणामूर्ध्वरेतसाम् ।
३९] दीप्तं सप्तर्षिचरितं धर्मैकैकृतनिश्चयम्[2] ॥५७॥ [N
आश्रमं तमतिक्रम्य शैलं बहुफलोदकम् ।
४०] सिद्धा[3] वैखानसा यत्र[4] बालखिल्याश्च तापसाः ॥५८॥ [३३
वन्द्यास्ते तापसाः सिद्धास्तपसा निस्तमोरजाः[5] ।
४१] प्रष्टव्या[6] चैव सीतायाः प्रवृत्तिर् विजयोत्तरैः ॥५९॥ [३४
हेमपुष्करसंच्छन्नं नानापक्षिगणायुतम् ।
४२] तरुणादित्यसंकाशैर् हेमहंसैः समाकुलम् ॥६०॥ [३५
औपवाह्यं कुवेरस्य सार्वभौम[7] इति श्रुतः[8] ।
४३] गजैः[9] पर्यास्थितं[10] दिव्यैः[11] सदा सह करेणुभिः ॥६१॥ [३६
तत् सरः समतिक्रम्य नष्टचन्द्रदिवाकरम् ।
४४] अनक्षत्रग्रहं[12] व्योम[12] निर्मेघघनराजितम्[13] ॥६२॥ [३७
गभस्तय इवार्कस्य स तु देशः प्रकाशते ।
४५] शाम्यद्भिस्तापसैः सिद्धैर् देवकल्पैः स्वयम्प्रभैः[14] ॥६३॥ [३८
तमतिक्रम्य शैलेन्द्रं देवदानवसेवितम्[15] ।

---

१. अ रा भ च—तदाश्रम० ।
२. अ च—† धर्मैकाकृत० ।
३. रा—सिद्धवैखा० ।
४. कै ल₁ ल₂ ब म श—नाम ।
५. ल₁—‡ तिस्तमोरजः ।
ल₂—‡ निस्तमोरजा ।
म—† निस्तमोरुजः ।
रा—निस्तमीमयाः ।
६. ल₁—† प्रवृत्ता ।
७. कै अ रा—‡ सर्वभौम० ।
८. ल₁ ब—† श्रुतैः ।
९. भ—गजाः ।
१०. भ—‡ पर्यन्ति ।
११. अ रा भ च—दिव्यं ।
१२. कै भ—० गृहव्योम ।
अ श च—० ग्रहव्योम ।
१३. कै ल₂ ल₁ ब म श रा—निर्मेघवनरा० ।
१४. ब—स्वयंप्रभोः ।
१५. भ—अतः परमधिकः पाठः—
योजनानि चतुःषष्टिः पर्वतो गंधमादनः ।
शालैस्तालैस्तमालैश्च सरलैश्चोपशोभितः ॥
शृंगे तस्य स्थिता जम्बू नाम्ना दिव्या सुदर्शना
तमतिक्रम्य शैलेंद्रं देवदानवसेवितं ॥
पुनः पाठः तु० ३६, ५०-५३

५९] तुषारचयसंकाशो मन्दरो नाम पर्वतः ॥६४॥ [N

६०पू] शृङ्गे तस्य ह्रदो दिव्यः प्रसन्नसलिलाशयः ।

N] पुष्पितोपवनः श्रीमांश्च चामीकरविभूषितः ॥६५॥ [N

६० उ] विश्रुतो धृतमण्डोदः पितामहनिषेवितः ।

तस्मिन् पतति सा दिव्या रम्या त्रिपथगा नदी ॥६६॥ [N

६१] आकाशगङ्गा दुर्धर्षा नभः शब्देन पूरयन् (?) ।

सा धारा पाण्डुरा दिव्या सलिलस्य नभश्च्युता ॥६७॥ [N

६२] तस्मिन् परमदुर्धर्षा सा चातिसरसा नदी ।

६४ उ] तामिन्द्रमार्गां दुर्धर्षां प्रवदन्ति महर्षयः ॥६८॥ [N

सा नदी कौशिकी पुण्या सा च वैतरणी नदी ।

६५] लोहितोदा महावेगा केशमज्जाऽऽदिवालुका ॥६९॥ [N

तत्र यक्षाः सगन्धर्वाः पिशाचपतगोरगाः ।

६६] विमुञ्चन्त्यवशा देहं कालस्य वशमागताः ॥७०॥ [N

तस्मिंस्तेषां शरीराणि दृश्यन्ते न तथा क्षितौ ।

६७] यथा मृतानां दृश्यन्ते मानुषाणां प्लवंगमाः ॥७१॥ [N

---

१. म—‡ तुषारचलसं० ।

२. रा—'दुर्धर्षा' इत्यारभ्य 'इन्द्रमार्गां' इत्यन्तः पाठो नास्ति ।

३. ल$_1$—पूरयत् ।
च—पूरवान् ।

४. कै ल$_1$ ल$_2$ ब म श रा च—धीरा।

५. ल$_1$ ल$_2$ ब म श—दिव्यसलिला ।

६. अ—० तिसुरसा ।

७. म—
तस्मिन् परमदुर्धर्षा महानादा महाह्रदे ।
तस्मिन्निपतिता गंगा गौरीकांचनसंचया ॥
प्रवहत्यतिवेगा सा शिलाश्च समनःशिकाः ।
सा गंगा सा च दुर्धर्षा सा भाति सुरसानकी॥

८. म—नास्ति ।

९. कै ल$_2$ ब म श रा—लोलोदका ।
ल$_1$—लोकोदका ।
च—‡ लोकोदना ।

१०. ल$_1$—‡ ०पतगोरथाः ।
म भ श—पिशाचाः पतगोरगाः ।

११. म—तस्मिन्नेव ।

तमतिक्रम्य शैलेन्द्रं मन्दरं मुनिभिर्वृतम् ।[1]
६८] उत्तरं तीरमासाद्य समाश्वसितुमर्हथ ॥७२॥ [N
तीरे तस्य महाशैलः[2] सहस्र[3]शिखरावृतः ।
७०] काञ्चनः सूर्यसंकाशो बहुकेतुरिति श्रुतः ॥७३॥ [N
तस्योपरि शुचिर् दिव्यः प्रसन्नसलिलो ह्रदः ।
७१] महच्छर[4]वणं चैव काञ्चनं संगमिष्यथ ॥७४॥ [N
तस्मिन् शरव[5]णे दि[6]व्ये नित्यं[7]दीप्ते च[7] काञ्चने ।
७२] जातो यत्र महासेनः कार्तिकेय इति श्रुतः ॥७५॥ [N
अनन्तः कपिलो यत्र समीपे सलि[8]लायुते ।
७३] उ[9]न्मज्जति महाघोरो यस्मिन् हयशि[10]रा महान् ॥७६॥ [N
तस्य पर्वतपृष्ठेषु निर्झरेषु गुहासु च ।
७४] सिद्धचार[11]णजुष्टेषु पुष्पितेषु वनेषु च ॥७७॥ [N
आश्रमेषु च रम्येषु लतानां गहनेषु च ।
७५] रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥७८॥ [N
तं तु शैलमतिक्रम्य शैलोदा[12] नाम निम्नगा । [३९
७६] उभयोस्तीरयोर् यस्याः के(?कै)चैं[13]का नाम वेणवः ॥७९॥
७९पू] ते[14] नयन्ति[14] परं पारं शीघ्रं प्रत्यानयन्ति च । [४०

---

१. भ—अतः परमधिकः पाठः—
उत्तरं रत्नसंपूर्णं समुद्रं द्रष्टुमर्हथ ।
तं काञ्चनमप्रतिमं महोरगनिषेवितम् ॥
२. अ—महाञ्छैलः ।
३. ल१—सहस्रशिरसावृतः ।
४. कै अ ल१ ल२ ब म श च—शरवनं ।
५. कै अ ल१ ल२ ब म श रा च—शरवने ।
६. कै म ल१ ल२ ब रा भ च—चैव ।
७. भ—नित्यं दीप्ते च ।
रा—०नित्यदीप्तेऽथ ।
८. भ—¦स्यरमंततः ।
९. श—¦तन्मजति ।
१०. अ—¦हयशिरो महान् ।
११. अ च—०रणसंघेषु ।
१२. ल१—शैलूषा ।
१३. अ ल१ ल२ ब म श रा भ च—कीचका ।
१४. अ च—तेन यान्ति ।

सा न शक्या नदी तर्तुं पुरुषा परमदुर्गमा ॥८०॥
७७] तस्याः स्पृष्ट्वा तु सलिलं सर्वः शैलोऽभिजायते ।
ते तु तीरगतास्तस्या महाकीचकवेणवः ॥८१॥ [N
७८] समागच्छन्त्यसङ्गेन नै संगत्यां परस्परम् ।
N] ते नयन्ति परं पारं पुनः प्रत्यानयन्ति च ॥८२॥ [N
७९ उ] तां नदीं दूरपर्यन्तां तैः सन्तरणवेणुभिः ।
N] लङ्घयित्वा ततस्तां तु नदीं कीचकवेणुभिः॥८३॥ [N
नदीं शीतां महावेगां द्रक्ष्यथाद्भुतदर्शनाम् ।
८०] तस्यां स्नात्वा शुचिर् भूत्वा ततो यान्तु समाप्लुताः ॥८४॥[N
N] उत्तराः कुरवो यत्र नानागुणसमावृताः । [४१
८२ उ] तान् गच्छथ हरिश्रेष्ठा विशालानुत्तरान् कुरून् ॥८५॥ [N
दानशीलान् महावेगान् नित्यहृष्टान् गतज्वरान् ।
८३] न तत्र शीतमुष्णं वा न जरा नामयोऽपि च ॥८६॥ [N
८४पू] न शोको न रुजा किंचिन् न भयं नै च तस्कराः ।
८५ उ] भूमिः ससिकता पाण्डुः समा निस्तृणकण्टका ॥८७॥ [N
८६पू] निरुद्वेगा गताबाधा क्वचिच्च मृदुशाद्वला ।
८४ उ] सर्वकामफलैर् वृक्षैः पुष्पितैरुपशोभिता ॥८८॥ [N

---

१. कै—महाकेचक० ।
२. ल२ ब—†नमस्कृत्वा ।
म—व संगत्वा ।
रा†—संगत्वा ।
३. अ च—वेन यांति ।
४. कै—†केचकवेणु० ।
अ म च—कांचनवेणु० ।
५. ल१ ल२ ब म श—नास्ति ।
६. अ ब रा भ च—सलिलेन ।
७. रा—†गतध्वरान् ।
८. अ म च—†रुजं ।
९. कै ल१ ल२ ब म श रा—तस्व ।
१०. कै—†निरुद्वेषा ।
११. कै—†शाड्वला ।

८५ पू ] शोभिता काञ्चनैश्चापि पक्षिसंघैः समन्ततः ।
८७ उ ] तप्तकाञ्चनपद्माभिः पद्मिनीभिः कृतोदका ॥८९॥
नीलवैडूर्यपर्यन्ता नीलोत्पलवनानि च । [४२
८९ ] रक्तोत्पलमयैश्चापि मणिदण्डैर् हिरण्मयैः ॥९०॥ [४३ पू
८८ उ ] हेमकिंजल्कवर्णानि सुगन्धीनि क्वचित् क्वचित् ।
शोभनास्तत्र गन्धाढ्या नलिन्यः फुल्लपङ्कजाः ॥९१॥ [N
९० ] महार्हमणिपत्रैश्च काञ्चनप्रभकेसरैः । [४० उ
९१ पू ] नीलोत्पलवनैर् दिव्यैः सदृशैः सर्वतो वृताः॥९२॥ [४४
८६ उ ] मणिरत्नावकीर्णाश्च नद्यः काञ्चनवालुकाः ॥९३॥ [N
८७ पू ] तत्र हेमह्रदाश्छन्ना विविधा मणिपर्वतैः ॥९४॥ [N
९२ उ ] सुवर्णगिरयश्चात्र मणिरत्नशिलोच्चयाः ।
९३ पू ] सर्वरत्नमया भान्ति काञ्चनैस्तरुभिर्वृताः ॥९५ [N
९१ उ ] निर्मलाभिश्च मुक्ताभिर् मणिभिश्च महाधनैः ।
९२ पू ] उद्धृता निर्मलास्तत्र निम्नगाः पुलिनोपगाः ॥९६॥ [४५
N ] सर्वरत्नमयैः शृङ्गैरवगाढैः शिलोच्चयैः ।
९६ उ ] जातरूपमयैश्चापि हुताशनसमप्रभैः ॥९७॥ [४६

१. कै ल१ ल२ ब म श—काञ्चनै राजतैश्चापि ।
रा—,, रजतैश्चापि ।
२. कै ल१ ल२ ब म—†कृतोदकाः ।
३. म—‡ सुरभीनि ।
४. रा—नास्ति ।
५. अ च—†वृतः ।
६. ल१—नास्ति ।
७. ल१—वालुकाः ।
८. ल२—नास्ति ।
९. ल१ म श—ते तु ।
१० कै ल१ म श रा भ च—†हेमह्रदच्छन्ना ।
ब रा—‡हेमह्रदा छन्ना ।
११. अ—०विविधा ।
च—‡ विविधा ।
१२. अ भ च—सर्वरत्नमयैर् ।
१३. अ च—†०वृतः ।
१४. अ भ च—उद्भूता ।
१५. श—पुलिनापगाः ।



९३ उ] नित्यपुष्पफलाश्चात्र पादपा वै मधुश्च्युतः[1] । [४७पू
९७पू ] नानावर्णानि वासांसि फलन्त्यन्ये[2] नगोत्तमाः ॥९८॥ [४८
N] मुक्तावैडूर्यचित्राणि भूषणानि च पादपाः । [४९पू
दिव्यगन्धसमस्पर्शाः सर्वकामफलप्रदाः ॥९९॥ [४७ उ
९४] सप्तर्षीणां[3] स्थितिर्[4]यत्र यत्र मन्दाकिनी नदी ।
देवर्षिचरितं रम्यं यत्र चैत्ररथं वनम् ॥१००॥ [N
९५] तत्र क्षीरवहा नद्यः सदा पायसकर्दमाः ।
९६पू ] ब्रह्मणा[5] विहितास् तत्र नगाः पुष्पफलान्विताः ॥१०१॥ [N
चित्रसान्तानिकैर्[6] माल्यैः पङ्कजैश्च कुशेशयैः[7] ।
N] काञ्चनैर् मणिदण्डैश्च शोभिताश्च[8] नलैः शुभैः ॥१०२॥ [N
१००उ] पानानि च महाऽर्हाणि भक्ष्याणि विविधानि च । [५१ उ
१०१उ] स्त्रियः सुरूप[9]संपन्नास् तथा यौवन[10]दर्पिताः ॥१०३॥
गन्धर्वाः किन्नराः सर्पा नागा[11] विद्याधरास्तथा । [५२पू
१०२] रमन्ते सहितास्ताभिर् नारीभिस्तत्र तत्र वै ॥१०४॥ [५३ उ
वियोगेन न युज्यन्ते संक्त[12]चित्ताः परस्पर ।
N] ताः स्त्रियः पुरुषाश्चैव विधिं पश्यत[13] यादृशम् ॥[14] १०५॥ [N

१. कै अ रा च —+मधुश्च्युताः ।
ल$_2$ —+ मधुः च्युतैः ।
२. ल$_2$ —+फलन्त्येव नगोत्तमैः ।
ब म श च —फलन्त्येव न° ।
३. ब —महर्षीणां ।
४. कै ल$_1$, ल$_2$ ब म श रा —
+स्थिता ।
५. भ —+ब्राह्मणा ।
६. कै रा —+ संतानिकैः ।
७. अ च —कुशेशयः ।

८. अ भ च —शोभिता वनजैः ।
९. कै अ ल$_1$, ल$_2$ ब रा भ च —
स्वरूपसं° ।
ब —स्वेति प्रमाज्यं 'सु' इति
पश्चान्निवेशितः ।
१०. अ च —यौवनदर्शिताः ।
११. ब म श —+नाना ।
१२. ल$_1$ रा —+शक्तचित्ताः ।
१३. कै —पश्येत ।
१४. ल$_2$ —नास्ति ।

तत्र पादपशाखासु प्रभवन्ति परस्परम्[1] ।
१०३] कान्तिमत्यः शुभा नार्यः सर्वाभरणभूषिताः ॥१०६॥ [N
पुरुषाश्चोत्तमाकारा रूपवन्तो महौजसः ।
१०४] न द्रक्ष्यन्ति[2] भयं तत्र मधुराः प्रियवादिनः ॥१०७॥ [N
सर्वे सुकृतकर्माणः[3] सर्वे रतिपरायणाः ।
१०५] सर्वे कामसमृद्धार्था[4] वसन्ति सहयोषितः ॥१०८॥ [५३
१०६पू] गीतवादित्रनिर्घोषाः सोत्कृष्टनिनदस्वनाः[5] ।
N] श्रूयन्ते सततं तत्र सर्वभूतमनोहराः ॥१०९॥ [५४
N] न तत्र क्षुधितः कश्चिन्न च कश्चिदसत्क्रियः[6] ।
N] अहन्यहनि कुर्वन्ति गुणांस्तत्र मनोहरान् ॥११०॥ [५५
अह्ना तासां तु सर्वासां यौवनं व्यतिवर्तते ।
१०२] अह्ना सूर्योदये[7] जाताः[8] पतन्ति दिवसक्षये ॥१११॥ [N
अभिशप्ता महेन्द्रेण ताः किलाप्सरसस्तथा ।
११५] अहन्यहनि जायन्ते म्रियन्ते च पुनः पुनः ॥११२॥ [N
तत्रानुरूपाः कल्याण्यो[9] रूपयौवनचेष्टितैः ।
१०७] स्त्रियः परमरूपाढ्या[10] रुचिराननलोचनाः ॥११३॥ [N

---

१. ल₂—नास्ति ।
२. भ—‡तं द्रक्ष्यव् ।
३. ब रा च—‡ सुकृतक० ।
ल₁ ल₂ ब म श-च कृतक० ।
४. अ च—सर्वकामस० ।
रा—०सुवृद्धार्था ।
५. म—‡सत्कृष्ट० ।
६. अ भ च-कश्चिन्नास्ति ।
७. ब—‡सुरोदये ।
८. अ भ च—जीर्णा ।
कै रा—क्षीणा ।
९. अ—कल्याणा ।
रा—कल्याण्या ।
१०. कै ल₁ ल₂ ब म श रा—
परुचाढ्यास्ता ।

१०८पू] सर्वाभरणसंपन्नाः सर्वा मधुरनिस्वनाः ।
११०उ] अचिन्तयित्वा देवेशं तत्र क्रीडन्ति[1] संघशः॥११४॥ [N
तस्य देशस्य रम्यत्वाच् छक्रोपस्थानविस्मृताः ।
१११] ताः शशाप महातेजा महेन्द्रः पाकशासनः ॥११५॥ [N
जरामरणदुःखार्ताः कौ(?क)ल्पं कौ(?क)ल्पमतन्द्रिताः[2] ।
११२] सर्वा भवन्तु[3] दुर्मेधा[4] अस्मिन्नेव गुहामुखे ॥११६॥ [N
इति शापहतास्तास्तु शक्रस्य परमाः[5] स्त्रियः ।
११३ ] अशून्यां कुर्वते[6] नित्यं तां गुहां तिमिरावतीम् ॥११७॥ [N
गुहायां तिमिरावत्यां गुहाः सन्ति सहस्रशः ।
११५ ] पार्श्वे त्वन्यगुहा भीमाः शिलागृह[7]गणास्तथा ॥११८॥ [N
११६पू] सीता तत्र विचेतव्या यत्नवद्भिः समाहितैः । [५६
११७पू] कुरूंस्तान् समतिक्रम्य भीमगम्भीरनिस्वनाः ॥११९॥[N
१०६उ] अपावृत्ता[8] बृहद्वृक्षैर्[9] गुहाः पन्नगसेविताः[10] ।
N] अतीत्य[11] च महान् यत्नैः[12] कर्तव्यो मार्गणो पुनः ॥१२०॥[N
N] समतिक्रम्य देशं[13] तमुत्तरं तोयसेवितम् ।
११७उ] तत्र सोमगिरिर् नाम मध्ये सोममयो[14] महान् ॥१२१॥

---

१. ल२— तत्राक्रीडन्ति ।
ब—† तत्राक्रीडन्त ।
२. भ—कल्पं कल्पम० ।
३. भ—भवत ।
४. भ—दुर्मेधास्त्वा अस्मिन् ।
५. भ—शक्रस्यावज्ञया ।
६. ल२ ब म श रा—† कुरुते ।
७. कै—शिवागृह० ।
८. ल१ ल२ ब म श—अपावृत्तैर् ।
९. कै—महद्वृक्षैर् ।
ल१ ल२ ब म श—महावृक्षैर् ।
१०. अ भ च रा—पतगसे० ।
कै—† पनग० ।
११. कै ल१ ल२ ब म श—अतीव ।
१२. अ ल१ श—महायत्नः ।
१३. ल१—तं देशमुत्त० ।
कै—† तां देशमु० ।
१४. कै ल१ ल२ ब म श रा—मणिसोममयो ।

इन्द्रलोकगताः पुण्या ब्रह्मलोकगताश्च ये । [५७पू

११८ ] देवास् तमभिरक्षन्ति गिरिराजं दिवङ्गमम् ॥१२२॥ [५७ उ

स तु देशो विसूर्योऽपि[2] तस्य भासा प्रकाशते ।

११९ ] एषामङ्गस्य लक्ष्म्या च तेजसा च विवस्वतः ॥१२३॥ [५८

भगवांस्तत्र भूतात्मा स्थाणुरेकादशात्मकः । [५९पू

१२० ] वसते ब्रह्मणः पुत्रो मनुश्च परमोऽव्ययः ॥१२४॥ [N

आदौ सृजति भूतानि कालं चैवं चतुर्विधम् ।

N] सर्वलोकनिमित्तं च मनोहारि तदाश्रमम् ॥१२५॥ [N

N] स तु सोमगिरिर् दिव्यो न त्वासाद्यः कथंचन । [N

न कथंचन गन्तव्यं कुरूणामुत्तरेण च ॥[10] १२६॥

१२१ ] अन्येषामपि भूतानां न तत्र क्रमते गतिः । [६०

स हि सोमगिरिर् नाम देवदानवदुर्गमः ॥१२७॥

१२२ ] तमालोक्य ततः क्षिप्रं रावणश्चानुमृग्यताम् । [६१

१२३पू ] तस्य शैलस्य पार्श्वेषु नोपविश्येयात् कथंचन ॥१२८॥ [N

उद्यानेषु च रम्येषु गन्धर्वभवनेषु च ।

१२४ ] रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥१२९॥ [N

---

१. अ रा भ च—समभिरक्षन्ति ।
ल१ ल२ ब म श—तं च प्ररक्षन्ति ।
२. ल१—०र्यो हि ।
३. ल१—† एषा सङ्गस्य ।
४. रा—स्थाणुरेव दशा० ।
५. अ च—सृजन्ति ।
भ—वसति ।
६. म—दैवचतुर्वि० ।
७. म—सह ।
८. कै म—नत्यासाद्य ।
अ ल१ च—†नन्यासाद्य ।
ल२ श रा—नत्वासाद्य ।
भ—†नन्यासाद्यः ।
९. कै—कथं न च ।
१०. ब—नास्ति ।
११. कै—क्रमतो ।
१२. रा—रावणश्चात्र सृ० ।
१३. म—ततस्तस्य च ।
१४. अ—नोपरिष्ठा ।
भ—नोपविष्टात् ।
च—नोपविष्टात् ।

शि[1]खास्थानं त[2]तो गत्वा सर्वकामसमान्वितम् ।
N] राक्षसीं तां समालोक्य सहो[3]लूखलमेखलाम् ॥१३०॥ [N
१२५पू] अधि[4]गम्य तु वैदेहीं निलयं रावणस्य च[5] ।
N] एकरा[6]त्रमुषित्वा तु[7] मासेनैवागमिष्यथ ॥१३१॥ [N
१२७पू] सर्वमेतद् विचेतव्यं मया य[8]द् यत् प्रकीर्तितम् । [६३पू
१२३ उ] कान्तारेषु च दु[9]र्गेषु वनेषु गहनेषु च ।
१२७ उ] यदन्यदपि नैवोक्तं तत्रापि क्रि[10]यतां मतिः ॥१३२॥ [N
N] मासं कृत्वा ह्वदिस्थं तु शीघ्रमागन्तुमर्हथ । [N
१२५ उ] ऊर्ध्वं मासान्न वस्तव्यं वसन् वध्यो भवेन्मम॥१३३॥
एतावद् वानरैः शक्यं गन्तुं वानरपुंगवाः ।
१२६] अ[11]भास्करममर्यादं नाभिजानाम्यतः परम् ॥१३४॥ [६२
ततः कृते दाशरथेर् महत्प्रिये
महत्तरं चा[12]पि ततो म[13]म प्रियम् ।
कृतं भविष्यत्यनलानिलोप[14]मा
१२८ ] विदेहजादर्शनजेन कर्मणा ॥१३५॥ [६४

---

१. अ भ च—शशिस्थानं ।
२. कै ल$_1$—गतं । च—गतां ।
ल$_2$ ब म श रा—च तं ।
३. ल$_1$ भ—महोलूखल० ।
कै—०मेखला । म—०मेखलं ।
४. ल$_1$—अभिगम्य ।
५. कै ल$_2$ ब म श रा—तु ।
६. श—एकरात्रिमु० ।
७. अ म च—च ।
८. अ च—बो यत् ।
भ—वो यत् ।
९. अ ल$_2$ ब रा भ च—घोरेषु ।
१०. कै अ ल$_3$ ल$_2$ ब म श रा ब—क्रियते ।
११. रा—आभास्करसम० ।
१२. भ—वापि ।
१३. म श—महत् ।
१४. म—०स्यनलाविलोपमा० ।
भ—† ०स्यनिलोनिलोपमा० ।

ततः कृतार्थाः सहिताः सबान्धवा
मयाऽर्चिताः सर्वगुणैर् मनोहराः[1] ।
चरिष्यथेह प्रतिशान्तशत्रवः
१२९ ] सपुत्रदारा धरणीं सनिम्नगाम् ॥१३६॥ [६९

तथेति चोक्त्वा[2] हरिपुंगवास्ते
रामं ससुग्रीवमनन्तवीर्यम् ।
शिरोभिरानम्य गुणान् प्रशंस्य
१३० ] जग्मुर्दिशं वैश्रवणाभिरक्षिताम् ॥१३७॥ [N

इत्यार्षे रामायणे किष्किन्धाकाण्डे[3] उत्तरदिग्वर्णनं[4] नाम
षट्त्रिंशः सर्गः ॥३६॥

---

१. कै अ ल$_1$, ल$_2$ ब म श रा च—मनोहरैः ।
२. कै अ ल$_1$, ल$_2$ व श रा च—चोक्ता । म—‡ चेत्त्वा ।
३. ल$_2$ ब म श—किष्किंदा । ल$_1$ भ च—नास्ति ।
४. अ भ च—दिग्विजये उत्तर० ।

अनुशिष्टास्तु ते सर्वे राज्ञा वानरयूथपाः ।
७] स्वां स्वां दिशमभिप्रेत्य संहिताः[1] संप्रतस्थिरे ॥१॥ [८
नदन्तश्चोन्नदन्तश्च[2] प्लवन्तश्च[3] प्लवंगमाः ।
८] क्ष्वेडन्तो धावमानाश्च प्रथयुस्ते महाजवाः[4] ॥२॥ [९
९पू] आनेष्यामो[5] वयं सीतामपि मृत्युमुखाद्[6] द्रुतम् ।
प्रतिज्ञां चक्रिरे वीराः प्लवमाना महौजसः ॥३॥ [N
१०] अहमेको हनिष्यामि[7] रावणं रणमाहवे ।
तं तथोन्मथ्य तरसाऽऽहरिष्ये[8] जनकात्मजाम् ॥४॥ [१०
११] किं वा श्रमेण महता[9] भवद्भिः श्रूयतामिदम् ।
अहमेवानयिष्यामि पातालादपि मैथिलीम् ॥५॥ [११
१२] विदलिष्याम्यहं[10] वृक्षांश्चूर्णयिष्यामि[11] पर्वतान् ।
वसुधां दारयिष्यामि[12] क्षोभयिष्यामि[13] सागरम्[14] ॥६॥ [१२
१३] योजनानां विंशतिभिः[15] प्लवित्वा[16] नात्र[17] संशयः ।
N] अहमद्य गमिष्यामि योजनानां शतं द्रुतम्[18] ॥७॥ [१३

---

१. कै अ ल₂ ब म श रा च—सहिताः।
२. श—० श्चानदंतश्च ।
३. अ भ च—गर्जन्तश्च ।
४. श—महामदाः (इत्यपरहस्तेन)
५. कै—†आनिष्यामो ।
६. भ—मृत्युपथोद्धृतां ।
७. कै ब म—† हनिष्ये ।
८. म—सहसा ।
९. कै—† श्रेयता० ।
श—श्रूयतां शुभं ।
१०. कै अ रा भ च—विध्वमिष्यामि।
११. अ भ च—चालयिष्यामि ।
१२. कै अ रा भ च—धारयिष्यामि
१३. रा भ—शोषयिष्यामि ।
च—क्षोभयामि च ।
१४. अ भ—सागरान् ।
ल₁—नास्ति ।
१५. भ—विंशतीनां ।
१६. कै अ रा च—प्लवत्वाथात्र ।
भ—†प्लावित्वा ।
१७. ल₂—नास्ति ।
१८. कै ल₁ ल₂ ब म श रा—शतं । च—नास्ति ।

अबुद्धिर् वानरपतिर् यः प्रेषयति वानरान् ।
१४] अहमेको गमिष्यामि कार्यस्यैतस्य साधकः ॥ ८ ॥ [N
भूतले सर्पवच्चैव शैलेषु च सरःसु च ।
१५] पातालस्यापि मध्ये तु गतिर्मे न विहन्यते ॥ ९ ॥ [१४
इति चैकैकशस्ते वै वानरा बलदर्पिताः ।
१६] ऊचुस्ते वचनं तस्य हरिराजस्य संगताः ॥ १० ॥ [१५
एवमुक्ता तु हरयः स्वां स्वां दिशमुपागताः ।
१७] तदा जग्मुर् महात्मानो गन्तुकामा दिशो दश ॥११॥ [N
तदुग्रं शासनं भर्तुर् विज्ञाय हरिपुंगवाः ।
१८] शलभा इव संच्छन्द्या मेदिनीं संप्रतस्थिरे ॥ १२ ॥ [२
रामः प्रस्रवणे तस्मिन् न्यवसत् सहलक्ष्मणः ।
१९] प्रतीक्षमाणस्तं मासं सीताऽधिगमने धृतः ॥१३॥ [३
गतेषु तेषु सर्वेषु रामः सुग्रीवमब्रवीत् ।
४६.१] कथं भवान् विजानीते पृथिव्या मण्डलं महत्॥[१२] १४॥ [४६.१
सुग्रीवस्तु ततो राममिदं वचनमब्रवीत् ।
३] श्रूयतां सर्वमाख्यास्ये विस्तरेण रघूत्तम ॥१५॥ [२

१. अ ल१ ल२ ब म श भ च— दुर्बुद्धिश्च ।
२. रा—वानरमतिः ।
३. श—† कार्यं ते तस्य ।
४. अ भ च—सर्वतश्चापि ।
ल२ म—शर्वतश्चापि ।
श—सर्वशश्चापि ।
कै—सर्ववच्चैव ।
५. म ल१ श—नास्ति ।
६. कै ब ल१ श रा च— एवमुक्तास्तु हर० ।
भ—० स्वा हरिवराः ।
७. अ च—† ०मुपागताः ।
८. ल१—तदग्रं ।
९. ल१—संसाद्य ।
१०. कै—† मासं ।
११. भ—०भिगमने ।
१२. ल१—नास्ति ।
१३. श—श्रूयतामिदमा० ।
१४. ल१—रघूद्वह ।

स यदा मायिनं[1] नाम दानवं बलिनं नृप ।
N] परितापयते वाली मलयं पर्वतं प्रति ॥१६॥ [३
तदा विवेश[2] दैत्योऽसौ मलयस्य महागुहाम् ।
N] अन्तः प्रविश्य तं वाली मायिनं[3] प्रतिजग्मिवान् ॥१७॥ [४
ततोऽहं तेन निक्षिप्तो गुहाद्वारे विनीतवत्[4] ।
N] न च निष्क्रान्तवान् वाली तदा संवत्सरे गते ॥१८॥ [५
तदा क्षतजवेगेन संपुपूरे[5] बिलं तदा ।
N] तदाऽहं रुधिरं दृष्ट्वा भ्रातृशोक-विषादितः ॥१९॥ [६ पू
अथ मे बुद्धिरुत्पन्ना व्यक्तं[6] मे निहतो गुरुः । [६ उ
N] शिला पर्वतसंकाशा तस्य[7] द्वारे मया कृता[8] ॥२०॥
अशक्नुवन् निष्क्रमितुमसुरो हि मरिष्यति[9] । [७
N] ततोऽहमायां नगरीं निराशो भ्रातृजीवितांव्[10] ॥२१॥
राज्यमादाय[11] सुमहत् तारां च रुमया सह । [८
N] मित्रैः परिवृतः[12] सर्वैर् विहरामि[13] गतज्वरः ॥२२॥ [९
आजगाम ततो वाली हत्वा तमसुरं मृधे ।
N] ततोऽस्मै राज्यमदद्(?दां)गौरवाद् भयशङ्कितः॥२३॥ [१०

---

१. कै ल१ ल२ ब म श—† मालिनं।
२. कै ल१ ल२ ब म श रा—रोषेण।
३. म—इतः प्रभृति १८ शस्थ 'वाली' तिपदान्तं अष्टम् ।
४. कै अ ल१ श रा भ च— विनीतवान् ।
५. कै ल१ अ रा भ च—‡संपुपुरे।
६. अ भ च—सुव्यक्तं ।
७. म—‡त्वद्वारे च ।
८. भ—भृता ।
९. कै—विमरिष्यति ।
अ च—‡ विनसिष्यति ।
भ—‡ विनशिष्यति ।
१०. म—† ०जीवितं ।
११. कै रा—राज्यं वादा० ।
अ भ च—राज्यं चादा० ।
१२. श—परिवृतैः ।
१३. अ भ च—वसामि विगत० ।

स मां जिघांसुर्दुष्टात्मा वाली विचलितेन्द्रियः ।
N] परिकालयते रोषाद् धावन्तं सचिवैः सह ॥२४॥ [११
नदीश्च विविधाः पश्यन् पुराणि विविधानि च । [१२उ
१०] ततः पूर्वामहं गत्वा दक्षिणामहमाश्रितः ॥२५॥ [१४पू
दिशं च पश्चिमां भूयो गतोऽस्मि भयशङ्कितः । [१८पू
११] उत्तरां तु दिशं यान्तं हनूमान् मामथाब्रवीत् ॥२६॥ [२०उ
१३ उ] इदानीं मे स्मृतं राजन्नृष्यमूकं गिरिं प्रति ।
N] मतङ्गेन पुरा शप्तस्तदाश्रमपदं प्रति ॥२७॥ [२१
१३पू ] गच्छतो वानरेन्द्रस्य मूर्धा ते शतधा स्फुटेत् ॥२८॥ [२२पू
ततः पर्वतमागम्य ऋष्यमूकं नृपात्मज ।
न चिन्तितस् तदा वाली मतङ्गभयमोहितः ॥२९॥
एवं तदा मया राम प्रत्यक्षमुपलक्षितम् ।
१८पू ] पृथिवीमण्डलं कृत्स्नं गुहामस्यां(ऽस्म्या)गतस्तदा॥३०॥[३४

इत्यार्षे रामायणे किष्किन्धाकाण्डे पृथिवीवर्णनं नाम
सप्तत्रिंशः सर्गः ॥३७॥

---

१. कै ल१ म श रा—मा ।
२. कै ल१ ल२ ब म श रा—
जिह्मः सुदुष्टा० ।
३. ब म श—द्वाराणि ।
४. कै ल१ म श—तु ।
५. म—†०तं...नृष्य । (त्रुटितःपाठः)
श—तात ऋ० ।
६. भ—शप्तं ।
७. म—स्फुटत् । अ—पतेत् ।
८. कै ल१ ल२ ब म श रा—
इत ऊर्ध्वमध्यर्धश्लोकमात्रं नास्ति ।
९. अ—चिंतेत् तदा ।
च—०चिंते तदा ।
१०. कै अ ल१,ल२ ब म श रा च—
गुहामध्यग० ।
११. ल१—नास्ति ।
१२. ल२ ब म—किष्किन्दाका० ।
भ च—नास्ति ।

¹पूर्वां तु दिशमास्थाय विनतः प्लवगर्षभः । [४७
N] प्रतस्थे हरिशार्दूलो वानरैर् बहुभिर्वृतः ॥१॥
ताराङ्गदाभ्यां सहितः प्लवगः पवनात्मजः ।
N] अगस्त्यसेवितामाशां प्रतस्थे हनुमान् कपिः ॥२॥ [५
पश्चिमां तु दिशं घोरां सुषेणः प्लवगैः सह ।
N] प्रतस्थे कपिशार्दूलो दिशं वरुणपालिताम् ॥३॥ [६
उत्तरां तु दिशं दिव्यां गिरिजालसमावृताम् ।
N] वीरः ²शतबलो नाम प्रययौ सपदानुगः ॥४॥
सरांसि सागरान् मुख्यान् सरितः पर्वतान³पि ।
N] सर्वाणि कपयो जग्मुर् विनदन्तः प्लवंगमाः ॥५॥ [N
इति राजा दिशः सर्वाः संप्रस्थाप्य विचारकान् ।
N] कपिसेनापतीन् सर्वानन्वशासदुपस्थितान् ॥६॥ [N
नाम्ना विनतमेकाग्रं प्राचीं दिशमनुव्रज ।
N] तथा ⁴शतबलं चैव कुबेरचरितां दिशम् ॥७॥ [N
¹दिशं वरुणगुप्तां च सुषेणमपि वानरम् ।
N] शशास दक्षिणामाशां हनूमन्तं च⁵ साङ्गदम् ॥८॥ [N
हरीणां बलमेकाग्रं पृथिव्यां समुपस्थितम् ।
N] दृष्ट्वा प्रहृष्टः सुग्रीवो राजा वचनमब्रवीत् ॥९॥ [N

---

१. आसर्गारम्भाद् आ १०मश्लोकान्तात् कोष्ठान्तर्गतमनपेक्षितं पुनरुक्तमिव भवति। विरोधोऽपि कश्चित् स्पष्ट एव । न हि सकृत् प्रस्थिता वानराः पुनराहूय निर्देष्टव्या भवेयुरिति दिक् ।

१. अ—दिशां ।

२. अ भ च—शतबलिर् ।
अ—‡ शतबले नाम ।
च—शतबली नाम ।

३. म रा—‡ पर्वतानि च ।

४. कै अ भ च—शतबलिं ।

५. रा—नास्ति ।

सर्वमेवं[1] विदित्वा[2] तु दृष्ट्वा सीतां च[3] जानकीम् ।
N] यथेहायात शीघ्रेण तथा वै[4] परिधावत ॥१०॥ [N
अनुशिष्टास्तु ते सर्वे राज्ञा वानरयूथपाः[5] । [N
२] व्यादिष्टाः कपिराजेन यथोक्तं[6] जग्मुरेव ते ॥११॥ [स.४७,१उ
सरांसि सरितो वृक्षान्[7] संकटानि वनानि च ।
३] दुर्गाणि सर्वतः[8] शैलान्[9] व्यचिन्वन् प्लवंगर्षभाः[10] ॥१२॥ [२
४उ] सुग्रीवेणाभिसंख्याता[11] दिशस्ते वानरोत्तमाः ।
व्यचिन्वंश्चात्र[12] बहुला[13] अनुक्ताः प्रश्नकोविदाः[14] ॥१३॥ [३
५] सर्वे च सर्वदिवसान् सीताऽनुगमने[15] गताः ।
समागच्छन्त[16] मेदिन्यां दिग्भागेषु च वानराः ॥१४॥ [४
६] सर्वर्तुकेषु[17] देशेषु वानरास्तान् फलद्रुमान् ।

---

१. म श—सर्वमेव ।
२. ल$_1$ ल$_2$ ब—‡विचित्वा ।
३. कै ल$_1$ ल$_2$ ब म श रा—तु ।
४. ल$_1$ल$_2$ब म श रा भ—तथैव ।
५. भ—अतः परमधिकः पाठः—
स्वां स्वां दिशमभिप्रेत्य त्वरिताः संप्रतस्थिरे ।
दर्शनार्थं तु वैदेह्याः सबलाः कपियूथपाः ॥
६. कै ल$_1$ल$_2$ब म श रा—यथेष्टं ।
७. अ च—कक्षान् । भ—कच्छान् ।
८. अ ल$_1$ ल$_2$ ब म श रा भ च—सरितः ।
९. कै रा—† शैला विचेतव्याः ।
ल$_1$ल$_2$ब म श—शैलाश्चेतव्याः ।
भ च—‡शैलान् विचेतव्यं ।
१०. रा—प्लवंगमाः ।
११. ल$_1$—०णाभिविख्याता ।
म—० णातिसंख्याता ।
भ—० णाभिसंज्ञाता ।
१२. कै ल$_1$ ल$_2$ म श रा—विचिंत्य चात्र । ब—विचित्यचात्र ।
अ च—विचिंत्यश्चात्र ।
१३. भ—बहुलान् ।
१४. कै ल$_1$ ल$_2$ ब म श—अनुक्तप्रश्न० ।
भ—अनुक्तान् प्रश्न० ।
रा—अनुक्तः प्र० ।
१५. ल$_1$ल$_2$ब श—० गमनोचिताः ।
म—०मनोचितः । भ—०मने वृताः ।
१६. ल$_1$ ल$_2$ ब म—०गच्छतु ।
भ—०गच्छंस्तु ।
१७. अ—सर्वकक्षेषु ।
भ—सर्ववृक्षेषु ।

N] आसाद्य रजनीवासं चक्रुः[1] सर्वे क्षपासु ते ॥ १५ ॥ [५
कृतं[2] तु मासं समयं सीतायाः परिमार्गणे ।
N] कपिराजेन सम्मान्य[3] प्रेमुस्ते कपिकुञ्जराः ॥१६॥ [६
संचिन्त्य[4] (°त्य) दिशं पूर्वां[5] विनतः[6] प्लवगैः[7] सह ।
८] अदृष्ट्वैव ततः सीतामागच्छद्[8] वानरैः सह ॥१७[9]॥ [७
उत्तरां तु दिशं सर्वां प्रविचित्य[10] महाबलः[11] ।
९] अदृष्ट्वैव ततः सीतां वीरः शतबलः[12] कपिः ॥१८[13]॥ [८
सुषेणः पश्चिमां गत्वा प्राप्तः प्रस्रवणं गिरिम् ।
१०] समेत्य मासे संपूर्णे सुग्रीवमुपचक्रमे ॥१९॥ [९
११पू] तं प्रस्रवणपृष्ठस्थमभिगम्याभिवाद्य च । [१०पू
N] सुग्रीवं प्लवगाः सर्वे सुषेणप्रमुखा[14] ब्रुवन् ॥२०॥ [१०उ
११ उ] निम्नगाः सागरान्ताश्च सर्वे जनपदास्तथा । [११उ
N] पत्तनानि च रम्याणि दीर्घा वाप्यश्च दारुणाः ।
१२पू] विचिताः पर्वताः सर्वे वनानि नगराणि च ॥२१॥

---

१. कै अ ल₁ल₂ ब म श रा—
शक्ताः सर्वेष्वहःसु ।
च—शक्त्या सर्वेष्व० ।
२. ल₁ ल₂ ब म श—कृत्वा ।
३. अ च—संस्मृत्य त्रेसुस्ते ।
भ—संस्मृत्य ।
४. कै ल₁ ल₂ ब श—विगतास्तु ।
म—विगता तु । रा—धिगता तु ।
५. कै ल₁ल₂ब म श रा—सर्वां ।
६. कै ल₁ ल₂ श—विगताः ।
ब—संचित्य ।
७. कै ल₁ ल₂ ब—प्लवगाः ।
म—इत ऊर्ध्वं 'सर्वां' मित्यन्तः
पाठो नास्ति ।
८. ल₂ ब—० मागच्छन् ।
९. ल₂ ब—
अस्य श्लोकस्य पूर्वार्द्धपरार्द्धव्यत्यासेन पाठः ।
१०. कै अ म श रा भ च—
प्रविचित्य ।
११. ल₁ ल₂ ब रा—महाबलाः ।
१२. कै अ रा भ च—शतबलिः ।
१३. कै ल₁ ल₂ ब म श रा—
इत ऊर्ध्वं सार्द्धश्लोकपाठो नास्ति ।
१४. कै—०मुखो ब्रुवन् ।
ल₂ ब—०मुखे ब्रुवन् ।

गुहाश्च विविधाः सर्वाः संचयाः परिवर्तिताः ।
१३] उद्धताश्च महागुल्मा लताविटपसंभवाः ॥२२॥ [१२
१४ उ] सत्त्वान्यतिप्रवृद्धानि त्रासितान्याहतानि च । [१३उ
१५पू ] राक्षसान् मन्यमानैश्च तत्र तत्र प्लवंगमैः ॥२३॥ [N
१६ उ] ये चैव गहना देशा विचितास्ते पुनः पुनः ।
१७ उ] प्रवृत्तिं चैव वैदेह्या नानुविन्दामहे प्रभो ॥२४॥ [N
हनूमतः प्रयुक्तस्य रामार्थे भृशमार्गिणः ।
१८] आगतिं प्रतिकाङ्क्षामो न चिरादागमिष्यति ॥२५॥
N] विक्रमेण च शौर्येण प्रज्ञाबलसमन्वितः ॥२६॥ [N
उदारसत्त्वाभिजनो हनूमान्
स मैथिलीं ज्ञास्यति वानरेन्द्रः ।
दिशं तु तामेव हृता तु मैथिली
१९] यामास्थितो वायुसुतो महात्मा ॥२७॥ [१४

इत्यार्षे रामायणे किष्किन्धाकाण्डे वानरप्रत्यागमनं नाम
अष्टात्रिंशः सर्गः ॥३८॥

---

१. म भ—उद्वृताश्च ।
२. ल१ ल२ ब म श रा—लताविटपिसं० ।
३. भ—सत्वान्यपि प्र० ।
४. अ ल१,ल२ ब म श—प्रवृत्तिश्चैव।
५. कै—ं०मृग्विणः । च—ं०मृग्विनः ।
अ भ—०मृच्छतः ।
६. अ भ च—आगतं ।
७. भ—विक्रमेणैव ।
८. कै ल१,ल२ ब म श—०समावृतः
९. ल१—इति ।
१०. ल१ म श—किष्किन्दाका० ।
ब भ च—नास्ति ।
११. अ—अत्यागमनं ।

सह ताराङ्गदाभ्यां तु प्रस्थितो हनुमान् कपिः ।
१] सुग्रीवेण यथोद्दिष्टं तं तु देशं दुरासदम् ॥१॥ [१
स तद् वनमुपागम्य सह तैर्हरिभिर्हरिः ।
२] विचिनोति स्म विन्ध्यस्य गुहाश्च गहनानि च ॥२॥ [२
दुर्गाणि सरितः शैलान् कन्दरान् विषमान् ह्रदान् ।
३] चित्रखण्डांश्च विपुलान् सर्वतो वनपादपान् ॥३॥ [३
अन्वेषमाणाश्च तदा सर्वे ते हरियूथपाः ।
४] न सीतां ददृशुर् वीरा मैथिलीं जनकात्मजाम् ॥४॥ [४
५पू] ते मूलानि फलान्येवं भक्षयन्तो वनेचराः ।
N] अन्वेषमाणा दुर्धर्षा अवसंस्तत्र ते सुखम् ॥५॥ [५पू
तेषां तत्रैव वसतां कालश्चाभिगतो महान् । [N
६] स हि देशो दुराधर्षो गुहागहनवान् महान् ॥६॥ [५उ
विचीय तु तमुद्देशं सर्वे ते हरियूथपाः । [६उ
७] देशमन्यं दुराधर्षं विचेरुर्बहुपर्वतम् ॥७॥ [७उ
यत्र वै निष्फला वृक्षा निष्पत्राः पुष्पवर्जिताः ।

---

१. कै ल१ल२ब म श—यथादिष्टं ।
रा—यदादिष्टं ।
२. म श—स ।
३. रा भ—† कन्धरान् ।
४. अ—घनपादपान् ।
५. कै ल१ ल२ ब म श रा—
अन्विष्य० ।
६. कै ल१ ल२ ब म श रा—
तद् वीरयू० ।
७. भ—नास्ति ।

८. ल१ म—फलान्येव ।
९. भ—नास्ति ।
१०. अ—सुखे ।
११. कै—विचेय तु । रा—विचेय तं ।
ल१ ल२ब म श—व्यचीयंत ।
१२. कै म श रा—विचेतुं महा० ।
ल१ल२ ब—† विचित्तं महा ।
च—विचेतुं बहु० ।
१३. कै ल१म श—वृक्षाः पुष्पिताः ।

८] निस्तोयाः सरितो यत्र यत्र मूलं सुदुर्लभम् ॥८॥ [८
न सन्ति महिषा यत्र न मृगा न च हस्तिनः ।
९] शार्दूलाः पक्षिणो वाऽपि ये चान्ये वनगोचराः ॥९॥ [९पू
स्निग्धपत्रा न सन्त्यत्र पद्मिन्यः फुल्लपङ्कजाः ।
१०] सुगन्धयः प्रेक्षणीया भ्रमरैः परिवर्जिताः ॥१०॥ [१०
तण्डुर्नाम महाभागः सत्यवादी तपोधनः ।
११] महर्षिः परमामर्षी नियमैर्दुष्प्रधर्षणः ॥११॥ [११
तस्य तस्मिन् वने पुत्रो बालको दशवार्षिकः ।
१२] प्रनष्टो जीवितान्ताय क्रुद्धस्तत्र महामुनिः ॥१२॥ [१२
तेन वै मुनिना शप्तं कृत्स्नं तच्च महावनम् ।
१३] अशरण्यं दुराधर्षमपि देवगणैः सह ॥१३॥ [१३
तस्य ते काननान्तानि गिरीणां निर्झराणि च ।
१४] प्रभवांश्च नदीनां च व्यचिन्वन् सहिताः समम् ॥१४॥ [१४
तत्रापि ते महात्मानो नापश्यन् जनकात्मजाम् ।
१५] हर्तारं रावणं चापि रामस्याप्रियकारिणम् ॥१५॥ [१५
अवगीतं तु तं दृष्ट्वा पर्वतं काञ्चनं तु तत् ।
१६] अन्यमेव परं घोरं विविशुर् गिरिगह्वरम् ॥१६॥ [२२

---

१. कै ल$_1$ ल$_2$ ब म श—
०पत्रानुसंपन्नाः ।
रा—०पत्रा न संपन्नाः ।
२. ल$_1$—भ्रामरैः ।
३. कै ल$_2$ म भ—तडिन्नाम ।
श— तडिन्नाम ।
४. ल$_2$ ल$_1$ ब म श—इलनतः ।
५. रा—नियमैर्दु० ।
६. म ल$_1$ ल$_2$ ब म श रा भ च—
प्रणष्टः ।
७. ल$_1$ ल$_2$ ब म श रा भ—तेनैव ।
८. ल$_1$—देवैर्महर्षिभिः ।
९. कै भ—विचिन्वन् ।
१०. कै—महिताः ।
११. भ—वापि ।
१२. कै अ ल$_1$ ब म श रा च—
अन्यमेवापरं ।
भ—अन्यमेवं परं ।

ते[1] प्रविश्य द्रुतं भीमं लतागुल्मसमावृतम् ।
१७] ददृशुः सुमहाकायमसुरं भीमं[2]विक्रमम् ॥१७॥ [१६
तं दृष्ट्वा वानरा भीमं स्थितं शैलमिवाग्रतः[3] ।
१८] गाढं परिदधुः सर्वे तस्मिन् पतितचक्षुषः ॥१८॥ [१७
स हि तान् वानरान् सर्वांस्तिष्ठ तिष्ठेति चाब्रवीत् ।
२०] समभ्यधावत् संक्रुद्धो मुष्टिमुद्यम्य संमुखम् ॥१९॥ [१८
तमापतन्तं सहसा वालिपुत्रोऽङ्गदस्तथा ।
२१] रावणोऽयमिति ज्ञात्वा तलेनाभिजघान ह ॥२०॥ [१९
स वालिपुत्राभिहतो मुखाच्छोणितमुद्वमन् ।
२२] असुरो न्यपतद् भूमौ पर्यस्त इव पर्वतः ॥२१॥ [२०
हते तस्मिन् निरुच्छ्वासे वानरा जितकाशिनः ।
२३] विचेरुः प्रयतास्तत्र सर्वे ते वनगह्वरम् ॥२२॥ [२१
तद् वि[4]चीय पुनः खिन्ना विनि[5]वृत्य समागताः ।
२४] एकान्ते वृक्षमूलस्था निषेदुर् दीनमानसाः । [२३
N] वृथापरिश्रमात् खिन्नाः[6] कार्यव्या[7]क्षेपतश्च ते ॥२३॥ [N

इत्यार्षे[8] रामायणे किष्किन्धा[9]काण्डे दिग्विजयो[10] नाम
एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

---

१. अ—संप्रविश्याद्भुतं ।
च—ते संप्रविश्याद्भुतं ।
भ—ते प्रविश्या० ।
२. अ रा भ च—सुरनिर्भयं ।
३. कै ळ$_1$ ळ$_2$ ब म श—नास्ति ।
४. कै ळ$_2$ ब रा—१. विचेय ।
५. ळ$_2$ म—विनिर्वृत्य ।
६. ळ$_2$ ब म—खिन्नास् ।
७. अ कै ळ$_1$ ळ$_2$ ब म श भ—
न्यापेक्षतश्च ।
( भ—हरितालेन शोधितः )
८. ळ$_1$—इति रामाय० ।
९. ळ$_2$ ब म रा—किष्किन्दाका० ।
कै भ च—नास्ति ।
१०. भ—नास्ति ।

[वं०-४९]= [ चत्वारिंशः सर्गः ] =[दा०-४९]

ततो वायुसुतः श्रीमानङ्गदप्रमुखान् हरीन् ।
१] आसीनानब्रवीत् सर्वान् वाक्यं वाक्यविशारदः ॥१॥ [N
४उ] विचितं वै वनं सर्वं तृणं नो विदलीकृतम् ।
न च(?चा)पश्याम वैदेहीं रावणं [1]चापि राक्षसम् ॥२॥ [N
५] सुग्रीवेण यथोदिष्टा देशास्ते विचि[2]तास्तथा ।
६पू] अनुदिष्टाश्च [3]ये देशास्ते चापि विचिताः पृथक् ॥३॥ [N
८उ] तदुच्यतां यथाप्राप्तं किं वै[4] क्ष[5]मंमतः परम् ।
न च सा दृश्यते सीता भ्रमामो येन हेतुना ॥४॥ [N
९] तस्यैवं ब्रुवतो वाक्यमङ्गदः पवनात्मजम् ।
उवाच वचनं वीरो [6]वानरस्तं सुखावहम् ॥५॥ [N
१०] सर्वं एव समर्थाश्च श्रुतवन्तश्च वानराः ।
११पू] वैक्लव्यमत्र मा [7]गास्त्वं सीताऽधिगमने वृथा ॥६॥ [N
१३उ] य[8]द्यप्येतद् वनं सर्वं विचितं वै[9] समाहितैः ।
१४पू] खेदं त्यक्त्वा हरिवरैः पुनरेव विची[10]यंताम् ॥७॥ [७
१३पू] [11]अवश्यं क्रियमाणस्य कर्मणो दृश्यते फलम् ।
१४उ] [12]विक्लवत्वं न गन्तव्यं न हि नो [13]धर्षणं क्षमम् ॥८॥ [८

---

१. भ—वापि ।
२. अ भ च—विचितास्त्वमी ।
३. कै ल१ श रा च—ते ।
म—नास्ति ।
४. कै ल१ ल२ ब म श रा—च ।
५. कै ल१ ल२ ब म श रा—क्षेमम० ।
६. अ भ च—वानराणां ।
७. अ भ—‡ गास्थ । च—‡ गास्व ।
रा—गास्तु ।
८. कै ल१—यदप्येतद् ।
९. कै अ ल२ ब म श रा भ च—चः ।
१०. अ ल१ ल२ ब म श रा—
विधीयतां ।
११. म—अवाच्यं ।
१२. ल१—† विक्लवं ते ।
श—† विक्लवं तं ।
रा—‡ विक्लव्यत्वं ।
भ—† विक्लवं त्वं ।
१३. भ—मर्षणं ।

सुग्रीवः क्रोधनो राजा तीक्ष्णदण्डः स वानरः।
१८] भेतव्यं तस्य शूरस्य रामस्य च महात्मनः ॥९॥ [९
गतेषु कृतकृत्येषु मुक्तलज्जाभयेषु च।
N] किं च कुर्यात् स नो राजा सुहृत्कार्ये निवेदिते॥१०॥ [N
हितार्थमिदमुक्तं हि क्रियतां यदि रोचते।
१६] उच्यतां वा क्षमं किञ्चित् सर्वेषामेव वानराः ॥११॥ १०
अङ्गदस्य वचः श्रुत्वा वचनं गन्धमादनः।
१७] उवाचाव्यक्तया वाचा पिपासाश्रमखिन्नया ॥१२॥ [११
सदृशं खल्विदं वाक्यमङ्गदो यदुवाच ह।
१८] हितं चैवानुकूलं च क्रियतामस्य भाषितम् ॥१३॥ [१२
पुनर् मार्गामहे सर्वान् कन्दरांश्च वनानि च।
१९] काननानि च दिव्यानि नदीः प्रस्रवणानि च॥१४॥ [१३
यथोपदिष्टमस्माकं सुग्रीवेण महात्मना।
२०] वयं विचिनुमः सर्वे गिरिदुर्गाणि सर्वशः ॥१५॥ [१४
ततः पुनः समुत्तस्थुर् वानरास्ते महाबलाः।
२१] विन्ध्यकाननसंच्छन्नां व्यचिन्वन् दक्षिणां दिशम्॥१६॥[१५
ते शारदाभ्रप्रतिमं महारजतपर्वतम्।
२२] शीघ्रमारुरुहुः सर्वे दरीमन्तं च पर्वतम् ॥१७॥ [१६

---

१. कै ल१ ल२ ब म रा—युक्तलज्जाभ०।
२. म—०कार्यं।
३. ल२ म—† गंदमादनः।
४. अ ल१ म रा च—उवाच व्यक्तया।
५. ल२ ब म श—† अङ्गदं।
६. श—०यतामपि।
७. ल१ ल२ ब म श भ—नदीप्रस्रवणा०।
८. कै अ रा भ च—† विचिन्वन्। ल२ ब म श—व्याचिन्वन्।
९. अ ल२ भ च—महाराजत०।
१०. ल२—नास्ति।

तत्र लोध्र[1]वनं चैव सप्तपर्णवनानि च ।
२३] विचिन्वन्तो हरिवराः सीतादर्शनकाङ्क्षिणः ॥१८॥ [१७
तं[2] ते[2] स[3]मधिरूढा वै विक्रान्ता लघुविक्रमाः ।
२४] न चापश्यन्त वैदेहीं रामस्य महिषीं प्रियाम् ॥१९॥[१८
ते तु दृ[4]ष्टिहतं कृत्वा तं शैलं बहुकन्दरम् ।
२५] अव[5]चेरुरसम्भ्रान्ता वी[6]क्षमाणाः समन्ततः ॥२०॥ [१९
अवतीर्य च ते भूमिं श्रान्ता विगतचेतसः ।
२६] स्थिता मुहूर्तं तत्रापि वृक्षमूलमुपाश्रिताः ॥२१॥ [२०
ते मुहूर्तं समाश्वस्ताः किञ्चिद्भ्रष्टपरिश्रमाः ।
२७] पुनरेवोद्यताः कृत्स्नां विचेरुर् दक्षिणां दि[7]शम् ॥२२॥ [२१

इत्यार्षे रामायणे किष्कि[8]न्धाकाण्डे पर्वतारो[9]हणं नाम

चत्वारिंशः सर्गः ॥ ४० ॥

———

१. ल$_{2}$ ब म श—रोध्रवनं ।
ल$_{1}$—लोध्रवणं ।
२. ल$_{2}$ ब—ततो ।
३. कै ल$_{1}$ ल$_{2}$ ब म श रा—
समरुचिं ।
४. ल$_{1}$—दृष्टिहितं ।
५. म—‡ अवचेतुर् ।
६. कै ल$_{1}$ ल$_{2}$ ब म श रा—
† वीक्ष्यमाणाः ।
७. अ—दिशां ।
८. अ च—० काण्डे दिग्विजये ।
भ—०यणे दिग्विजये ।
कै—नास्ति ।
९. कै म—‡ ०रोहनं । अ—०रोहतां ।

## [वं-५०]= [एकचत्वारिंशः सर्गः] =[ दा०-५० ]

ताराङ्गदाभ्यां सहितः ससैन्यो हनुमान् कपिः ।
१] विचिनोति स्म[1] विन्ध्यस्य[2] गुहाश्चैव वनानि च ॥१॥ [१
ते मार्गमाणाः संरब्धा रामार्थे त्यक्तजीविताः ।
२] घोराणि गिरिदुर्गाणि प्राविशन्त[3] प्लवङ्गमाः ॥२॥ [N
३ उ] स हि देशो दुराधर्षो गुहागहनगोचरः । [४उ
N] तत्र वायुसुतः श्रीमान् विन्ध्यमार्गानमार्गत[4] ॥३॥
N] सर्वमावेक्ष्य[5] हनुमानन्योन्यस्याविदूरतः[6] । [५
५ उ] गजो गवाक्षो गवयः शरभो[7] गन्धमादनः ॥४॥
मैन्दश्च द्विविदश्चैव[8] हनुमाञ् जाम्बवान् नलः । [६
६] अङ्गदो युवराजश्च तारश्च वनगोचरः[10] ॥५॥ [७पू
८उ] समागम्य ततः सर्वे विचिन्वन्ति स्म तद्वनम्[9] ।
N] ते विचिन्त्य (?त्य) ततः सर्वे तं गिरिं वानरर्षभाः[11] । [N
विषादमगमन् भूयः सुग्रीवाद् वानरर्षभात्[12] ॥६॥ [N
९] सुविषण्णमुखा दीनाः सुग्रीवभयमोहिताः ।
अपश्यमानास्ते सीतां रावणं च सुदुःखिताः ॥७॥ [N
१०] बुभुक्षिताः परिश्रान्तास्तृषिताः सलिलार्थिनः ।

---

१. अ म भ च—स ।
२. श—विंध्यस्थः ।
३. रा—प्रविशन्तः ।
४. कै ल$_{1}$ ल$_{2}$ ब म—
दिव्यमार्गः स मार्गते ।
श—? दिव्यमार्गस मार्गते ।
अ च—दिव्यमार्गान् स्म मार्गते ।
५. ब—०मावीक्ष्य ।
६. ल$_{1}$—०न्योन्यस्य विदूर० ।
७. कै अ ल$_{2}$ ब म रा च—सरभो ।
८. कै ल$_{1}$, ल$_{2}$ ब म रा—
द्विविधश्चैव ।
९. कै ल$_{1}$ ल$_{2}$ ब म श—नास्ति ।
१०. अ रा च—वनगोचराः ।
११. रा च—अतः परमधिकः पाठः—
समागम्य ततः सर्वे तं गिरिं वानरर्षभाः ।
१२. भ—वानरर्षभाः ।

११पू ] निरीक्षमाणा[1] ददृशुर्वृक्षैः संछादितं बिलम् । [८
ततः क्रौञ्चाश्च हंसाश्च निपतन्ति सहस्रशः ॥८[2]॥
१२] बलाकाश्चक्रवाकाश्च रक्ताङ्गाः पद्मरेणुभिः । [९
१३पू ] कुररा[3]ः सारसाश्चैव वञ्जुलाश्च विहङ्गमाः ।
१४पू ] जलकुक्कुटकाश्चैव ये चान्ये जलवासिनः ॥९[4]॥ [N
१४ उ] ततो दृष्ट्वा बिलं सर्वे विस्मयाकुलचेत[5]सः ।
अभवन् वानराः सर्वे पश्यन्तः स्थिरचक्षुषा[6] ॥१०॥ [१०
१५] ततः पर्वतसंकाशो हनू[7]मान् वानरर्षभः ।
१६पू ] अब्रवीद् वा[8]नरान् सर्वान् विषण्णमनसा[9] स्थितान् ॥११।[10] [११
N] विचितोऽयं गिरिः सर्वः शतशो वा[11]नरर्षभाः [12]। [N
यदर्थं च वयं प्राप्ताः सा च[13] सीता[13] न[14] दृश्यते ॥१२॥ [१४ उ
१७] बिलादस्मात् तु सहसा हंससारसवञ्जुला[15]ः ।
जलार्द्राश्चक्रवाकाश्च निष्क्रामन्ति सहस्रशः ॥१३॥ [१५
१८] नूनं[16] सलिलवानत्र कूपो वा यदि वा ह्रदः । [१६पू
भविष्यति[17] यथा ह्येते निपतन्ति जलेचराः १४॥ [N

---

१. रा च—† निरीक्ष्यमा० ।
२. कै ल$_1$ ल$_2$ ब म श—नास्ति ।
३. श—कुरराः ।
४. ल$_1$ ल$_2$ ब म श रा—
अतः परमधिकः पाठः—
दृष्ट्वा तैर्वानरैः सर्वैः शङ्का चैषामजायत ।
कुत्रास्ति वै सरो नूनं दृश्यन्ते जलचारिणः॥
५. ल$_1$ ल$_2$ ब म श—० चेतनाः ।
६. म भ—स्थिरचक्षुषः ।
अ ल$_1$—‡ स्थिरचक्षुषाः ।
७. ल$_1$ल$_2$ब श रा भ—हनुमान् ।
८. रा—वानरः ।
९. कै ल$_2$ ब म श रा भ च—०मनसः ।
१०. म—नास्ति ।
११. भ—वानरर्षभैः ।
१२. म—नास्ति ।
१३. भ—वैदेही ।
१४. कै ल$_1$ ल$_2$ ब म श रा—
† मदृश्यते । भ—न चाप्यते ।
१५. ल$_2$—† वंजलाः ।
१६. ल$_1$ ल$_2$ ब म श रा—
सलिलं तत्र वा नूनं ।
१७. ल$_1$—‡ विचिष्यन्ति ।
रा—† भविष्यन्ति ।

१९] प्रविश्यात्र विचेष्यामो रावणं पापचेतसम् ।

२०पू] तां च सीतां महाभागां सर्व एव महद्बिलम् ॥१५॥ [N

इत्युक्त्वा तद् बिलं सर्वे प्रविष्टास्तिमिरावृतम् ।

२१] अचन्द्रसूर्यं हरयो ददृशुर् लोमहर्षणम् ॥१६॥ [१७

२२पू] ततस्तस्मिन् बिले दुर्गे[3] शिलानिर्झरसंवृते[4] ।

२३पू] अन्योन्यं संपरिष्वज्य जग्मुर् योजनमुत्तरम् ॥१७॥ [२१

ते नष्टसंज्ञाः संभ्रान्तास्तृषिताः सलिलार्थिनः ।

२४] परिपेतुर् बिले तस्मिन् मासमेकं बुभुक्षिताः ॥१८॥ [२२

ते कृशा दीनवदनाः परिश्रान्ताः पिपासिताः ।

२५] आलोकं ददृशुर् वीरा निराशा जीवितं प्रति ॥१९॥ [२३

ततस्तं[5] देशमासाद्य सौम्यं वितिमिरं शुभम् ।

२६] ददृशुः काञ्चनान् वृक्षान् दीप्तानग्निशिखोपमान्[6] ॥२०॥ [२४

सालान् प्रियकतालांश्च[7] पूर्णकांश्च द्रुमांस्तथा ।

२७] चम्पकान्[8] नागपुष्पांश्च नानाशकुनिनादितान् ॥२१॥ [२५

२८पू] तरुणादित्यसंकाशान् रक्तैः किसलयैर्वृतान् । [२७पू

N] नीलवैडूर्यवर्णाश्च पद्मिनीर्[9] विहगैर् युताः ॥२२॥

N] महद्भिः काञ्चनैः पुष्पैर्वृता बालार्कसन्निभाः । [२८

२८ उ] जातरूपमयै मत्स्यै विचरद्भिः सकच्छपैः ॥२३॥

---

१. ल₂—'प्रविष्टा' इत्यारभ्य 'दुर्गे' इत्यन्तः पाठो नास्ति ।

२. रा—ततस्तेऽस्मिन् । शा—तत्र तस्मिन् ।

३. कै ल₁ ब म शा रा—सर्वे ।

४. कै ल₁ ल₂ ब म शा रा च—०निर्वृते ।

५. ल₂ ब—ततस्ते ।

६. भ—प्रदीप्ता विशिखा इव ।

७. ल₂ ब—प्रियालतां० ।

८. कै ब म—‡ चम्पकान् । शा—‡ चाहाकान् ।

९. कै अ ल₁ च—† पद्मिनी वि० ।

नलिनीस्तत्र ददृशुः प्रसन्नसलिलाः शुभाः । [२९
२९] काञ्चनानि विमानानि राजतानि गृहाणि च ॥२४॥
तपनीयगवाक्षाणि मुक्ताजालान्तराणि च । [३०
३०] हैमराजतभौमानि दिव्यमाल्ययुतानि च ॥२५॥ [३१पू
प्रभया भ्राजमानानि काञ्चनानि बृहन्ति च । [N
३१] ददृशुस्तत्र हरयो गृहमुख्यानि सर्वशः ॥२६॥ [३२उ
तप्तकाञ्चनचित्राणि शयनान्यासनानि च ।
३२] स्वास्तीर्णानि विशालानि ददृशुस्ते वनौकसः । [३३
३३पू] हैमराजतमुख्यानां भाजनानां च संचयान् ॥२७॥ [३४पू
पुष्पितान् फलिनश्चैव प्रवालमणिसंचयान् ।[10]
N] पादपांस्तत्र ददृशुर् वानरा हरितच्छदान् ॥२८॥ [N
विद्युत्संपातवर्णांश्च सामवेदसमस्वनान् ।
N] ददृशुर् वृक्षशाखासु भ्रमरान् काञ्चनप्रभान् ॥२९॥ [N
N] मनोरमाणि रम्याणि ददृशुस्तत्र तत्र वै ॥३०॥ [N
३३ उ] शुचीन्यभ्यवहार्याणि मूलानि च फलानि च ।
महार्हाणि च वस्त्राणि धान्यानि च धनानि च॥[15] ३१॥[३५

---

१. कै—‡दिव्यामाल्ययुतानि ।
ल१ ल२ ब—दिव्यमाल्ययुतानि ।
श—दिव्यमाल्यायुतानि ।
२. श—मुक्ताजालोत्तराणि ।
३. कै अ ल२ ब म श रा च—हेमराजत० ।
४. ल१—नास्ति ।
५. म—† मुक्तजालांतराणि ।
६. ल१—नास्ति ।
७. ल१ ल२ म—हेमराजत० ।
८. म भ—संचयं ।
९. म—†० संशयं ।
१०. रा—नास्ति ।
११. कै—†भ्रमराः ।
१२. अ श—मनोरम्याणि ।
ल१ रा—‡मनोरमानि ।
१३. कै—वन्यानि ।
१४. कै ल१ ल२ ब म श—फलानि ।
१५. रा—नास्ति ।



३४] दिव्यानामङ्गरागाणां महाऽर्हाणां च वाससाम्।[2]

३५ उ] कम्बलानां विचित्राणामजिनानां च संचयान् ॥३२॥ [३६

तत्र तत्र च दिव्यानि दीप्तानि रुचिराणि च।

३६] ददृशुर् वानराः सर्वे गृहमुख्यानि सर्वशः ॥३३॥ [३७

तानि दृष्ट्वा च ददृशुर् चीरकृष्णाजिनाम्बराम्।

३७] तापसीं नियताहारां ज्वलन्तीमिव तेजसा ॥३४॥ [३९

ततो हनूमान् गिरिसन्निकाशः

कृताञ्जलिस्तामभिवाद्य तस्थौ।

पप्रच्छ का त्वं भवनं बिलं च

३८] रत्नानि चैतानि वराणि कस्य ॥३५॥ [४१

इत्यार्षे रामायणे किष्किन्धाकाण्डे दिग्विजये बिलप्रवेशो नाम

एकचत्वारिंशः सर्गः ॥ ४१ ॥

---

१. कै—०रागानां।

२. कै ल१ ल२ ब म श—

अतः परमधिकः पाठः—

कम्बलानि महार्हाणि मूलानि च फलानि च।

श—नास्ति।

३. कै ल१ ल२ ब म श—महार्हाणां।

४. कै ल१ ल२—हनुमान्।

५. ब भ च—नास्ति।

६. ल२ म श—किष्किन्द्या०।

७. ल२—दिग्विजयो।

इत्युक्त्वा हनुमान् वीरश् चीरकृष्णाजिनाम्बराम् ।
१] अब्रवीत् तां महाभागां तापसीं संशितव्रताम् ॥१॥ [१
वानराः स्मो महाभागे मतङ्गवनगोचराः । [N
२] इदं प्रविष्टाः सहसा बिलं तिमिरसंवृतम् ॥२[1]॥ [२पू
बुभुक्षिताः परिश्रान्ता हरयो न पराजिताः ।
३] इदं धरण्यां विवरं[2] प्रविष्टाः स्म पिपासिताः ॥३[3]॥ [२उ
ईमं चेहँ विधिं दृष्ट्वा विहितं चाद्भुतोपमम् ।
४] भूयो वयं प्रव्यँथिताः सम्भ्रान्ता नष्टचेतसः ॥४॥ [३पू
५पू] कस्येमे काञ्चना वृक्षास् तरुणादित्यसन्निभाः ।
शुचीन्यभ्यवहार्याणि मूलानि च फलानि च ॥५॥ [४
६] काञ्चनानि विमानानि राजतांनि गृहाणि च ।
७पू] तपनीयगवाक्षाणि मुक्ताजालान्तराणि च ॥६॥ [५
५उ] पुष्पिताः फलवन्तश्च पुण्याः सुरभिगन्धिनः ।
७उ] इमे जाम्बूनदमयाः पादपाः कस्य तैजसाः ॥७॥ [६
काञ्चना विविधाः पद्मा राजता विमले जले ।
८] कथं मत्स्याश्च सौवर्णा विचरन्ति सकच्छपाः ॥८॥ [७

---

१. श—नास्ति ।
२. कै म श रा—विदितं ।
अ भ च—विवृतं ।
३. ल₂—नास्ति ।
४. कै ल₁ ल₂ ब म श रा—
इहैव च ।
५. श—[प्रविशताः ।
६. अ—[शुचीनामव० ।
७. श—राजितानि ।
८. ल₁—मुक्ताजालोत्तराणि ।
९. कै ल₁ ल₂ ब श रा—
पुष्पिताः फलगांधिनः ।
म—सुपुष्पाः फलगं० ।
१०. ल₁—[तेजसाः ।
अ भ च—तेजसा ।
श—तेजसः ।
११. कै रा—फले ।

आत्मानं च तमाचक्ष्व यस्य चेदं महद् बिलम्।
९] अभ्यागतानामस्माकं तत्त्वं व्याख्यातुमर्हसि ॥९॥ [८
एवमुक्ता हनुमता तापसी ब्रह्मचारिणी।
१०] प्रत्युवाच हनूमन्तं सर्वभूतहिते रता ॥१०॥ [९
मयो नाम महातेजा मायावी दानवर्षभः।
११] तेनेदं निर्मितं सर्वं मायया काञ्चनं वनम् ॥११॥ [१०
पुरा दानवमुख्यानां विश्वकर्मा बभूव सः।
१२] तेनेदं काञ्चनं सर्वं निर्मितं भवनोत्तमम् ॥१२॥ [११
स तु वर्षसहस्राणि तपस्तप्त्वा महावने।
१३] पितामहाद् वरं लेभे सर्वशत्रुनिबर्हणम् ॥१३॥ [१२
वञ्चयानस्ततो मृत्युं सर्वकामेश्वरः सुखी।
१४] एवं स उषितः कालं कञ्चिदस्मिन् महाबिले ॥१४॥ [१३
ततोऽप्सरसि हेमायां सक्तं दानवपुङ्गवम्।
१५] शनैर्निष्क्रान्तमालोक्य निजघान पुरन्दरः ॥१५॥ [१४
तदिदं ब्रह्मणा दत्तं बिलं तुष्टेन भो मयि।
१६] एवमेतच्च भवनं गृहं चेदं हिरण्मयम् ॥१६॥ [१५

---

१. कै—|आत्मानमनुमा...च।
म श—|आत्मानमनमायक्ष्व।
रा—|आत्मानमनुमानं।
ल१—|आत्मानमनुरूपं च।
अ भ च—आत्मानमनुभावं च।
२. म—हनूमता।
३. रा—वरं।
४. ल२ ब—|सा।
५. श—सर्वशक्तिनि०।
६. अ भ—उषितं।
७. अ भ च—तमप्सरसि।
८. ब—बलिना।
९. भ—
तदयं ब्रह्मणा दत्तो वरो हृष्टेन हेमया।
१०. अ भ च—एवमेतत्तु।

दुहिता मेरुसावर्णेरहं नाम्ना स्वयंप्रभा ।
१७] इदं रक्षामि भवनं हेमाया वानरर्षभाः ॥[2]१७॥ [१६
सा[3] मे प्रियसखी हेमा नृत्यगीतविशारदा ।
१८] गृहं दत्तवरा चेदं रक्षामि भवनोत्तमम् ॥१८॥ [१७
किं कार्यं कस्य वा हेतोः कान्ताराणि च गच्छथ ।
२६] कथं चेदं बिलं दुर्गं युष्माभिरुपलक्षितम् ॥१९॥ [१८
इमान्यभ्यवहार्याणि मूलानि च फलानि च ।
N] भुक्त्वा पीत्वा[4] च पानीयं सर्वं मे वक्तुमर्हथ ॥२०॥ [१९
एतच्छ्रुत्वा शुभं वाक्यं तापस्या धर्मसंहितम् ।
१९] हनूमान्[5] हरिशार्दूलः प्रत्युवाच स्वयंप्रभाम् ॥२१॥ [२०
अर्थिनां[6] संप्रपन्नानां कुरु धर्ममनुत्तमम् ।
२०] म्रियमाणान् निराहारान् संजीवय तपोधने ॥२२॥ [२१
तस्य सा तु वचः श्रुत्वा तापसी धर्मचारिणी ।
२१] आदाय फलमूलानि विधिनोपानयत्[7] तदा ॥२३॥ [२२
प्रतिगृह्य तु तस्यास्ते तदातिथ्यं वनेचराः ।
२२] विधिवद् भक्षयन्ति स्म पूजयन्तः स्वयंप्रभाम् ॥२४॥ [२३
भक्षयित्वा च सर्वे[8] ते पीत्वा च विमलं जलम् ।
२३] अपश्यन् सर्व एवैते[9] दिशो वानरपुंगवाः ॥२५॥ [२४

---

१. ल$_1$—मरुसावर्णेर् ।
२. ल$_1$—नास्ति ।
३. ल$_1$ सखे ।
म—मम ।
४. ल$_2$—†पीता ।
५. ल$_2$ ब श—हनुमान् ।
६. म—आर्थिनः स्म प्रयच्छार्यै चर ।
च—आर्थिनां संप्रच्छार्यै चर ।
७. श—विधिनोपायनं ।
अ भ च—विधिनोपाहरत् ।
८. अ ल$_1$ श भ च—ते सर्वे ।
९. ल$_2$—‡ सर्वेदैवेते ।
ब † सर्वेदैवते ।
म श—सर्वेदैवैते ।

प्रसन्नवदनाः सर्वे सर्वे सन्तुष्टमानसाः ।
२४] संजातबलवीर्याश्च तत्रासन् हरिपुङ्गवाः[1] ।
N] तर्पिता विविधैर्मूलैः फलैः स्वच्छेन[2] वारिणा[3] ॥२६॥ [२५

इत्यार्षे रामायणे किष्किन्धाकाण्डे[4] स्वयंप्रभादर्शनं नाम
द्विचत्वारिंशः सर्गः ॥ ४२ ॥

---

१. भ—वानरयूथपाः ।
२. अ भ च—शीतेन ।
३. ल१—श्लोकार्धोऽयं २५शश्लोकानन्तरं वर्तते ।
४. ल२ व भ श—किष्किन्दा । भ च—नास्ति ।

अथ तानब्रवीत् सर्वान् वि[1]श्रान्तान् हरिपुङ्गवान् ।
२५] इदं वचनमेकैव तापसी [2]धर्मचारिणी ॥१॥ [१
वानरा यदि वः खेदः [3]प्रनष्टो मूलभक्षणात् [4]।
२७] यदि वेदं[5] मया [6]श्राव्यं श्रोतव्यं साधु कथ्यताम् ॥२॥ [२
तस्यास्तद् वचनं श्रुत्वा हनूमान् मारुतात्मजः ।
२८] [7]आर्जवेन यथातत्त्वमाख्यातुमुपचक्रमे ॥३॥ [३
राजा सर्वस्य लोकस्य महेन्द्रवरुणोपमः ।
२९] रामो दाशरथिः श्रीमान् प्रविष्टो दण्डकं वनम्[8] ॥४॥ [४पू
लक्ष्मणेन सह भ्रात्रा वैदेह्या चापि सीतया । [४उ
३०] तस्य भार्या जनस्थानाद् रावणेन हृता बलात् ॥५॥ [५
तस्य वीरः सखा प्राज्ञः सुग्रीवो नाम वानरः ।
३१] राजा वानरमुख्यानां येन प्रस्थापिता वयम् ॥६॥ [६
रावणं सहितं[12] सर्वे रा[11]क्षसं कामरूपिणम् ।
३३] सीतया सह वैदेह्या मार्गध्वमिति चागताः ॥७॥ [८
विचीय[13] तु[14] वयं सर्वे समग्रां दक्षिणां दिशम् । [९पू
३४] नाधिगच्छाम वैदेहीं रावणं नापि तं रिपुम् ॥८॥ [N

---

१. कै $ल_2$—|विशांतान् ।
२. $ल_1$ रा—ब्रह्मचारिणी ।
३. अ $ल_1$ $ल_2$ ब श रा च—|प्रणष्टो ।
४. भ—
इत ऊर्ध्वं ३यश्लोकान्तः पाठः प्रान्ते ।
५. अ श च—चेदं ।
६. म—| द्रव्यं ।
७. कै $ल_1$ $ल_2$ ब म श रा भ—आर्यवृत्तं ।
८. श—| दंडकावनं ।
९. $ल_1$—सह ।
१०. श—| रावणस् ।
११. $ल_1$ $ल_2$ ब म श—राक्षसं ।
१२. $ल_1$ $ल_2$ ब म श—सहिताः ।
१३. $ल_2$—|विचीयत ।
ब—|विचेय तु ।
रा—|विचेयत ।

बुभुक्षिताः परिश्रान्ता वृक्षमूलमुपाश्रिताः । [९उ

३५] विवर्णवदनाः सर्वे सुग्रीवभयदर्शिनः ॥९॥ [१०पू

तृषया चार्दिताः सर्वे सर्वे ध्यानपरायणाः । [N

३६] न गच्छामो वयं पारं मग्नाः शोकमहाऽर्णवे ॥१०॥ [१० उ

चारयन्तस्ततश्चक्षुः पश्यामो विवृतं बिलम् ।

३७] लतापादपसंच्छन्नं महदास्यमिव क्षितेः ॥११॥ [११

ततो हंसाः समुत्पेतुः पक्षैः सलिलरोधिभिः ।

३८] कुरराः सारसाश्चैव वञ्जुलाश्चैव पक्षिणः ॥१२॥ [१२पू

३९ उ] ततो मे बुद्धिरुत्पन्ना तान् दृष्ट्वा जलचारिणः । [N

अत्र प्रवेक्ष्याम इति मया प्रोक्ताः प्लवंगमाः ॥१३॥ [१२उ

४०] अमीषामपि सर्वेषामेषा बुद्धिरुपस्थिता[2] ।

गच्छामः प्रविशामोऽत्र[3] भर्तृकार्यत्वराऽन्विताः ॥१४॥ [१३

४१] परिगृह्य ततो गाढं वयं हस्तं परस्परम् ।

इदं प्रविष्टाः सहसा बिलं सतिमिरं महत् ॥१५॥ [१४

४२] एतन् नः कार्यमेतेन कार्येण वयमागताः ।

४३पू] त्वां चैवोपगताः सर्वे म्रियमाणा बुभुक्षया ॥१६॥ [१५

४४ उ] ब्रूहि प्रत्युपकारार्थं किं ते कुर्वन्तु वानराः । [१७उ

एवमुक्त्वा[4] तु धर्मज्ञा वानरैस्तैः स्वयंप्रभा ॥१७॥ ।

---

१. कै ल$_1$ ल$_2$ ब म श रा—०स्ततः सर्वे ।

२. अ ल$_2$ब श रा भ च—मतिरु०

३. कै ल$_1$ ल$_2$ ब म श रा—प्रविशामश्च ।

४. अ रा—०मुक्त्वा ।

४५] प्रत्युवाच ततः सर्वानिदं तान् हरिपुङ्गवान् । [१८
सर्वेषां परितुष्टाऽस्मि वानराणां महौजसाम् ॥१८॥

४६] चरन्त्यांश्च[1] इमं धर्मं न कार्यं मम केनचित् । [१९
N] एतेनैव कृतं मह्यं यद्[2] विश्रान्तं श्रमातुरैः ॥१९॥ [N

इत्यार्षे रामायणे किष्किन्धाकाण्डे[3] स्वयंप्रभावाक्यं नाम
त्रिचत्वारिंशः सर्गः ॥४३॥

---

१. कै अ ल१,ल२ ब म श रा च—चरतां रामकार्यार्थं ।
२. श—यदि श्रांतं ।
३. ल१,ल२ब म श—किष्किंधाका० भ च—नास्ति ।

१पू ] एवं श्रुत्वा शुभं वाक्यं तापस्या धर्मसंहितम् । [१ पू
९उ] ऊचुः प्राञ्जलयः सर्वे परितुष्टाः स्वयंप्रभाम् ॥ १ ॥ [N
लोलस्वभावैरस्माभिर् यदिदं व्याहृतं वचः ।
१०] तत् सर्वं मर्षणीयं ते सर्वैरेष[1] कृतोऽञ्जलिः ॥ २ ॥ [N
[2]एकं तु वयमिच्छामस्त्वत्प्रसादं[3] तपोधने ।
११] श्रूयतामभिधास्यामस्तच्छ्रुत्वा कर्तुमर्हसि ॥[4] ३ ॥ [N
कृत्स्नो मासः परिगतो बिले[5]ऽस्मिंस्तु तपोधने ।[6]
१२] न च जानीम तं देशं प्रविष्टा येन वानराः ॥ ४ ॥ [N
तदिच्छामो वयं भद्रे बिलात् तस्मात् तपोधने ।
१३] त्वत्तेजसा विनिर्गन्तुं त्वं हि नः परमा गतिः ॥५॥ [N
कृतश्च समयोऽस्माकं सुग्रीवेण महात्मना । [२उ
१४] स च कालो व्यतिक्रान्तो बिलेऽस्मिन् परिधावताम् ॥६॥[३पू
महच्च कर्म कर्तव्यमस्माभिर् धर्मचारिणि ।
१६] तच्चापि न कृतं कार्यमिहास्माकं प्रवेशनाद् ।[7] [५
१७पू ] तद् राजभयभीतान् नः प्रीत्याजीव(?यि)तुमर्हसि ॥७॥[४उ
इति ब्रुवाणांस्तान् सर्वान् सर्वभूतहिते रतौ । [N

---

१. कै अ ब म ल$_{2}$ श भ—
०रेव ।
रा ल$_{1}$ च—०ष कृतांजलिः ।
ब—[?] ०ष कृतेञ्जलिः ।
श – ०व कृतांजलिः ।
२. अ भ—एवं ।
३. अ—०त्प्रसादात् ।
४. ल$_{1}$ ब म ल$_{2}$ श—नास्ति ।
५. कै रा ल$_{1}$ ब म ल$_{2}$ श—
वनेस्मि० ।
६. ल$_{1}$ ब म ल$_{2}$ श—नास्ति ।
७. भ—
सा त्वमस्माद् बिलाद्दुर्गादुत्तारयितुमर्हसि ।
८. रा ल$_{1}$ ब म ल$_{2}$ श भ—
० जीवितु० ।
९. कै रा ल$_{1}$ अ ब म ल$_{1}$ श—
०तेरतान् ।
च—०तेरतो ।

१८] इदं मधुरया वाचा तापसी वाक्यमब्रवीत् ॥८॥ [६
इदं तु सुरराजेन बिलं शक्रेण संयुगे ।
१९] असुरार्थं[1] विसृष्टेन पुरा वज्रेण दारितम् ॥९॥ [७
दुराधर्षं दुरावापं नानारत्नविभूषितम् ।
२०] महाप्राज्ञेन भूतार्थं निर्मितं विश्वकर्मणा ॥१०॥ [८
एवं देवविसृष्टेन[2] बिलेऽस्मिन् वज्रदारिते[3] ।
२१] जीवता[4] दुष्करं मन्ये प्रविष्टेन निवर्तितुम् ॥११॥ [९
तपसश्च प्रभावेन[5] नियमोपार्जनेन[6] च ।
२२] सर्वे एव बिलादस्मान्निष्क्रमिष्यथ वानराः ॥१२॥ [१०
सम्मीलयत नेत्राणि सर्वे वानरपुङ्गवाः[7] ।
२३उ] न हि निष्क्रामितुं शक्यं चक्षुषि ह्यनिमीलिते ॥१३॥ [११ उ
ततस्ते हरयः सर्वे सुकुमाराङ्गुलैः[8] करैः ।
२४] समावृण्वत[9] नेत्राणि तुष्टा गमनकाङ्क्षिणः ॥१४॥ [१२
N] ततस्तान् वानरान् सर्वांस्तापसी धर्मचारिणी[10] ।
उत्तार्य विषमात् तस्मात् समाश्वास्येदमब्रवीत् ॥१५॥ [१४
२६] एष विन्ध्यो[11] गिरिः श्रीमानेष सह्यो[12] महाऽचलः ।

१. भ—पुत्रार्थं ।
२. भ—दैववि० ।
३. रा अ—† ०धारिते ।
४. ल₂—† जीविता ।
५. रा ल₁ ब—प्रभावेण ।
६. कै ल₂—० मैर्मार्ज० ।
ब ल₁ श—०मैर्मार्गणेन ।
अ—‡ ० मैर्मार्ज० ।
म—‡ ० मैर्मार्ग० ।
७. कै रा ल₁ब म ल₂श—नास्ति ।
८. ल₂—† सुकुमाराङ्गुलैः ।
९. कै—‡ समावृणंतु ।
अ भ—समावृण्वंश्च ।
म—समावृण्वंतु ।
च—‡ समावृण्वं स्व० ।
ल₂—समावृण्वंति ।
१०. ल₁ ब—ब्रह्मचारिणी ।
११. ल₂—† विधिः ।
१२. अ च—† ०ह्योमहाबलाः ।
ल₂—सर्वो महबलः ।



एष प्रस्रवणः शैलं एष पार्श्वे महोदधिः ॥१६॥ [१९

२७] स्वस्ति वोऽस्तु गमिष्यामि भवनं वानरोत्तमाः ।

२८पू] इत्युक्त्वा तद् बिलं श्रीमत् प्रविवेश यशस्विनी ॥१७॥ [१६

बिलं तु तद् वै तपसा स्वयंप्रभा

प्रविश्य धर्मेण तथा तपस्विनी ।

N] स्थले तु तस्मिन् हरयो व्यवस्थिता:

कराग्ररुद्धैर् वदनैः समागताः ॥१८॥ [N

इत्यार्षे रामायणे किष्किन्धाकाण्डे बिलनिष्क्रमणं नाम

चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

---

१. कै रा अ च—श्रीमानेष ।

२. रा –† श्रीमान् ।

३. $ल_2$—† बिले ।

४. कै—† स्थली ।

५. $ल_2$—इति ।

६. $ल_1$ ब म $ल_2$श—किष्किन्दा० ।

भ च—नास्ति ।

७. कै—अ च—० निष्क्रमणो ।

म—‡ बिल्व० ।

$ल_2$—विनिष्क्रामणो ।

बानरास्तु महावीर्या हस्तरुद्धमुखाः स्थिताः ।
१] मुहूर्तेन कालेन चक्षूंष्युन्मील्य सङ्गताः ॥१॥ [१३
ततस्ते ददृशुर् घोरं समुद्रं वरुणालयम् ।
२] अपारमिव गर्जन्तं महोरगनिषेवितम् ॥२॥ [१७
३पू] ततस्तं देशमागम्य सौम्यं वितिमिरं शुभम् ।
N] अवगच्छन्त निष्क्रान्तं सुग्रीवस्य प्रतिश्रुतम् ॥३॥ [N
N] मयस्य मायाविहितं गिरिदुर्गं विचिन्वताम् ।
४उ] स नो मासो व्यतिक्रान्तो यो राज्ञा समयः कृतः ॥४॥ [१८
ते विन्ध्यस्य गिरेः पादे चित्रपुष्पितकानने ।
५] उपविश्य महाकायाश् चिन्तामापेदिरे तदा ॥५॥ [१९
ततः पुष्पातिभारांस् तान् लता-शतसमावृतान् ।
N] दृष्ट्वा वासन्तिकान् वृक्षान् बभूवुर् भयविक्लवाः ॥६॥ [२०
ते वसन्तमनुप्राप्तं प्रतिवेद्य परस्परम् ।
N] नष्टसन्देशकालार्था निपेतुर्वसुधातले ॥[13]७॥ [२१
ततः पीनायतस्कन्धः सिंहर्षभभुजो बली ।
६] युवराजोऽङ्गदो नाम ततो वचनमब्रवीत् ॥[13]८॥ [२२

१. ल१ ब ल२—† स मुहूर्तेन ।
२. अ ल२—‡ चक्षुंष्यु० ।
३. भ—ततस्ते ।
४. ल१ ब म श—० मागत्य ।
५. कै अ ब म ल२ श भ—
‡ अवगच्छतं । च—† अवगच्छतु ।
६. म—† यमस्य ।
७. कै रा ल१ अ ब म ल२ श—
० यामिह० । च—निहितं ।
८. म—राज्ञः ।
९. भ—ततः ।
१०. कै रा ल१ ब म ल२ भ च—
०तिभारातान् ।
११. कै रा ल१ ब म ल२ अ—
लतावृतिस० ।
अ च—०लतावृतस० ।
श—०लतावृत्तिस० ।
१२. भ—प्रतिपद्य ।
१३. कै रा ल१ अ ब म ल२ श—
ते वसन्तमहं दृष्ट्वा राजभीतिवशा भवन् ।
अथाङ्गदो महाप्राज्ञस्ततो वचनमब्रवीत् ॥

१—ब—वसन्तोत्सवं । श—वसन्तमहो ।

शासनं कपिराजस्य पूर्णे मासि निवर्तितुम्[1] ।
७] स च[2] पूर्णो बिलेऽस्माकं निबोधध्वं प्लवङ्गमाः ॥[3]९॥[२४

९पू] तीक्ष्णः प्रकृत्या सुग्रीवः पितृव्यो मम वानराः ।[4] [३०पू
N] राघवार्थे स्वकान् प्राणांस् त्यजेच्चैवं[5] न संशयः । [N
९उ] क्षमिष्यति स नाऽस्माकं[6] व्यतिक्रममिमं प्रभुः ॥१०॥ [३०उ
न हि ज्ञास्यति सुग्रीवः कर्म घोरमिदं कृतम् । [N
१०] सीताऽधिगमनेऽस्माभिः[7] पापमेवागमिष्यति ॥११॥ [॥३१पू
प्राप्तदोषा वयं सर्वे साधु प्रायमुपास्महे । [N
११] त्यक्त्वा दारांश्च मित्राणि धनानि च गृहाणि च ॥१२॥[३१उ
स चास्मान् घातयेद् राजा पश्चाद् प्रतिगतानितः ।
१२] वधेनाप्रतिरूपेण मृत्युः श्रेयानिहैव नः ॥१३॥ [३२
न चाहं यौवराज्येन[8] मंते[9] तस्याभिषेचितः ।
१३] सुग्रीवो यदि नोक्तः स्याद् रामेणाक्लिष्टकर्मणा । [३३
N] अङ्गदः परिपाल्यस्ते हतेऽस्मिन् स्यामहं हतः[10]॥१४॥ [N
स पूर्वबद्धवैरो मामिमं दृष्ट्वा व्यतिक्रमम् ।
१४] घातयिष्यति दण्डेन तीव्रेण ससुहृज्जनम् ॥१५॥ [३४
किं मे सुहृद्भिश्च समं पश्यतो जीवितान्तकम् ।

---

१. भ—०ततां ।
२. ल२—तु ।
३. भ—अतः परमधिकः पाठ—
सोऽहं व्यतीतसमये सुग्रीवस्य महात्मनमः
इह प्रायोपवेशं नः पथ्यं मन्येऽद्य वानराः॥
४. कै रा ल१ अ ब म ल२ श च—नास्ति ।
५. रा—त्यजंश्चैव । ब—त्यजे चैव ।
६. अ भ च—नोऽस्माकं ।
७. ल२—०नेऽस्माकं पापमेव गमि० ।
८. ल२—† यौवराजेन ।
९. ल१ ब म—†सते ।
१०. कै ल१—† मतः । ब—† गतः । ल२—ततः ।

१५] इहैव प्राय[1]मासिष्ये रम्ये सागररोधसि ॥१६॥ [१५
एतच्छ्रुत्वा तु वचनमङ्गदस्य मुखाच्च्युतम् ।
१६] सर्वे ते वानरश्रेष्ठाः करुणं वाक्यम[2]ब्रुवन् ॥१७॥ [१६
तीक्ष्णः प्रकृत्या सुग्रीवः प्रियार्थं राघवस्य तु[3] ।
१७] अस्मानकृतकार्यां[4]श्च सम्पूर्णे समयागमे[5] ॥१८॥ [१७पू
अदृष्टायां च[6] सीतायां दृष्ट्वाऽस्मांश्चागतान्[7] पुनः । [१७उ
१८] राघवप्रियकार्यार्थं[8] वधिष्यति न संशयः ॥१९॥
न क्षमन्त्यपराधानां[9] प्रधानानां नराधिपाः । [१८
१९] प्रधानभूताश्च वयं[10] सुग्रीवस्य मताः सदा ॥२०॥ [१९पू
२०उ] भयार्दितानां तेषां तु प्लवगानां महात्मनाम् ।
उवाच वाक्यं तारेयस्तत्कालसदृशं वचः ॥२१॥ [४०पू
२१] विषादस्त्यज्यतामेष सर्वैरेव प्लवङ्गमैः[11] ।
प्रविशामे[12] बिलं दुर्गं यस्मादद्य विनिःसृताः ॥२२॥ [४०उ
२२] यदि वा रोचते वाक्यं ममेह हरिपुङ्गवाः ।
क्रियतां[13] किं विमृष्टेन[14] श्रेयो[15] ह्युपदिशाम्यहम् ॥२३॥ [N
२३] दुर्धर्षं च महच्चैव बहुभक्ष्यं च वानराः ।

---

१. ल$_2$ भ च—१ ॰ मासिष्ये ।
२. रा ल$_2$—१ ॰ मब्रवीत् ।
३. भ च—च ।
४. कै रा ल$_1$ अ ब म ल$_2$ रा—॰ तकार्यांस्तु ।
५. भ—समये कृते ।
६. ल$_2$—च ?
७. रा ल$_2$—॰ स्मांश्च गतान् ।
ल$_2$—१स्मां तु गतान् ।
८. ल$_1$ ब म—॰कार्यार्थं ।
कै रा ल$_1$अ ल$_2$—॰ कामार्थं ।
९. कै रा ल$_1$अ ब म ल थ च—॰ पराधानि ।
१०. म—वरं ।
११. कै रा ल$_1$ ब म ल$_2$ श—प्लवङ्गमाः ।
१२. अ भ च—१ प्रविशामि ।
१३. श—क्रियते ।
१४. कै रा ल$_1$ अ ब म ल$_2$रा—विसृष्टेन ।
१५. कै—श्रेयोप्यु॰ । रा—श्रियो ह्यु॰ ।

तत्रस्थान् नो न शक्ता हि[1] द्रष्टुं सेन्द्रा अपि देवताः ॥२४॥ [४१पू

२४पू ] किं पुनो[2] राघवो राजा लक्ष्मणो वाऽपि वीर्यवान् ।

२४उ] सुग्रीवो वानरेन्द्रो वा [3]नो वा सर्वे वनौ[4]कसः ॥४५॥ [४१ उ

संश्रुत्य वाक्यं हि[5] तदाऽङ्गदस्य

प्रोचुश्च सर्वे हरयः समेताः ।

यथा न हन्येम तथा विधानं

२६] विधीयतां संशयिताः [6]स्म(?)सर्वे ॥२६॥ [४२

इ[7]त्यार्षे रामाय[8]णे किष्किन्धाकांडे अंगदवा[9]क्यं नाम

पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

---

१. कै ल$_1$ ब म—शक्नोति ।
अ—शक्ता देवता ।
रा ल$_2$ श—‡ ०न्द्रापि देवताः ।
२. ल$_1$—पुनः । ल$_2$—पुरा ।
३. ल$_2$—† नौ ।
४. कै—‡ वनौकसाः ।
५. कै ल$_2$—च ।
६. म—स ।
७. ल$_2$—इति ।
८. ल$_1$ ब म श—किष्किंदा० ।
अ—०धाकाण्डे दिग्विजये ।
भ च—नास्ति ।
९. ल$_2$—वानरवाक्यं ।

[वं-५४] = [ षट्चत्वारिंशः सर्गः ] = [दा-५४]

१पू ] तथा वदति तारेये ताराऽधिपतिवर्चसि । [१पू
N] अवमन्य तु तद्वाक्यं यदुक्तं तेन संसदि ॥१॥ [N
५उ ] अभिसन्धातुमारेभे हनुमानङ्गदं ततः । [५उ
१उ ] अथ मेने हृतं राज्यं हनुमानङ्गदेन तु ॥२॥ [१उ
N] अयुक्तं व्याहृतं तेन श्रुत्वा तत् पवनात्मजः । [N
बुद्धया चाष्टाङ्गया युक्तं नयतेजःसमन्वितम् ।
२] चतुर्दशगुणं मेने[10] हनुमान् वालिनः सुतम् ॥३॥ [२
आपूर्यमाणं यशसा तेजोबुद्धया समन्वितम् ।[12]
३] शशिनं शुक्लपक्षादौ वर्धमानमिव श्रिया ॥४॥ [३
बृहस्पतिसमं बुद्धया विक्रमेण समं पितुः ।
४] शुश्रूषमाणं तारेयं गुरोरिव पुरन्दरम् ॥५॥ [४
५पू ] भर्तुरर्थे[15] पराक्रान्तैः सर्वशास्त्रविशारदैः । [५पू
N] आवभाषे दृढमतिर् नयाय नयकोविदः ॥[17] ६ ॥ [N
स चतुर्णामुपायानां तृतीयमुपदर्शयन् ।

---

१. कै रा ल१ ब म ल२ शा—वदा।
२. रा—‡ ०सांधातु० ।
३. अ ल२ च—हनूमा० ।
४. म—वचः ।
५. शा—कृतं ।
६. ल२—हनू० ।
७. ल२—नास्ति ।
८. म च—ष्टा० ।
९. शा—नयेन च सम० ।
१०. ल२—नास्ति ।
११. च—हनू० ।
१२—म—नास्ति ।
१३. कै—‡ वरमा० ।
१४. कै रा ल१ अ ब म ल२—‡शुश्रूयमा० ।
१५. ल२—† ०र्तुरर्थपरा० ।
शा—† ०र्थे पराक्रांता ।
१६. शा—† ० विशारदा ।
१७. म—
अभिसंधातुमारेभे हनुमानङ्गदं ततः ।

६] भेदयामास सर्वांस्तान् वानरान् वाक्यसंपदा ॥७॥ [६
तेषु सर्वेषु भिन्नेषु ततोऽभीषयदङ्गदम् ।
७] भीषणैर्बहुभिर्हृष्टैश्च शिक्षापदसमन्वितैः ॥ ८ ॥ [७
त्वं समो वानरः पित्रा युधि तारेय विक्रमैः ।
८] दृढं धारयितुं शक्तः कपिराज्यं यथा पिता ॥९॥ [८
नित्यमस्थिरचित्तत्वात कपयः कपिकुञ्जर ।
९] नाज्ञां ते प्रसहिष्यन्ति पुत्रदारैर्विनाकृताः ॥१०॥ [९
त्वय्येते नानुरक्षे(?ज्ये)युः प्रत्यक्षं प्रवदामि ते ।
१०] यथाऽहं तारनीलौ च सम्मतौ न पितुस्तव ॥११॥ [१०
न ह्यहं न च ते सर्वे सामदानार्थभेदनैः ।
११] दण्डेन वा त्वया शक्याः सुग्रीवादपकर्षितुम् ॥१२॥ [११
नं विग्रहं समं प्राहुर् दुर्बलस्य बलीयसा ।
१२] आत्मरक्षाकरीं तस्माद् बुद्धिं गृह्णाति दुर्बलः ॥१३॥ [१२
यच्चात्र मन्यसे स्थातुं बिले मयविनिर्मिते ।
१३] तत्र लक्ष्मणबाणानां सुकरं प्रविदारणम् ॥१४॥ [१३
१४पू] स्तोकं हि कृतमिन्द्रेण वज्रेणात्र विदारणम् ॥१५॥ [१४पू

---

१. ल₂—सर्वसंपदा ।
२. कै रा म ल₁ श—०भाषयदङ्गदं ।
३. ल अ ब भ च—भीषणैर् ।
४. कै रा ल₁ ब म ल₂ श भ—०हृष्टैः ।
५. कै ल₁ ब ल₂—+ सेक्षाप० ।
श—+ सेनाप० ।
म—+ साक्षेपा० ।
६. ब म—सर्वौ ।
७. कै—+ विक्रमः । श—सर्वौ ।
८. कै ल₁—+ ० भेदने ।
९. अ भ च—चायुधैः ।
१०. कै ल₂—०पि कर्षि० ।
११. च—नहि ।
१२. कै रा ल₁ अ ब म ल₂—यश्चात्र । श—+ पश्चात्तं ।
१३. कै रा ल₁ अ ब म ल₂ श—मन्यते ।
१४. भ—०नामीषत्कार्यं ।
अ च—+ ०नां सुकरः ।
१५. श—प्रविचा० ।
भ च—विदारणे ।





N] वस्त्वेकसारमिन्द्रस्य पुरं सुरगणैर् वृतम् । [N
१४ उ] लक्ष्मणो निशितैर् बाणैर् भिन्द्यात् पत्रपुटं यथा ॥१६॥ [१४ उ
वज्रमेकं सुरेशस्य सर्वशत्रुनिबर्हणम् । [N
१५] लक्ष्मणस्य तु नाराचा बहवः सन्ति तद्विधाः ॥१७॥ [१५पू
अधः स्थातुं महाबाहो यदैवात्र त्वमेष्यसि ।
१६] तदैव बहवः सर्वे त्यक्ष्यन्ति कृतनिश्चयाः ॥१८॥ [१६
स्मरन्तः पुत्रदाराणां नित्योद्विग्ना भयातुराः ।
१७] खेदिताँ दुःखशय्याभिः त्वां करिष्यन्ति पृष्ठतः ॥१९॥ [१७
स विहीनः सुहृद्भिश्च हितकामैश्च बन्धुभिः ।
१८] तृणादपि भयोद्विग्नः स्पन्दमानो भविष्यसि ॥२०॥ [१८
न हि जातु न हन्युस् त्वां रामलक्ष्मणसायकाः ।
१९] अपवृत्तं महावेगाः शक्राशनिसमस्वनाः ॥२१॥ [१९
अस्माभिस्तु गतं सार्धं विनीतवदुपस्थितम् ।
२०] आनुपूर्व्याऽथ सुग्रीवः स्वराज्ये स्थापयिष्यति ॥२२॥ [२०
धर्मकामः पितृव्यस्ते पुत्रकामो दृढव्रतः ।

---

१. ल१ ब—वस्त्वोक० ।
ल२—वस्त्वेकसारमिंद्रेण ।
भ च—‡ वस्त्वौक० ।
२. रा—पुरस्० ।
३. च—शरैर् ।
४. कै रा ल१ब म ल२श—तारेय ।
५. च—‡ वद्धाः ।
६. भ च—अवस्थातुं ।
७. कै रा अ ब च ल२—खेदतो ।
ल१ म श—खेदंतो ।
८. रा—स्पर्धमा० ।
भ—स्यन्दमा० ।
९. भ—ते ।
१०. कै रा ल१ब म ल२च—निसमप्रभाः ।
अ च—चक्राशनि० ।
भ—वज्राशनि० ।
११. ल१ ब म श—† सार्द्धं ।
१२. कै रा ल१ ब म ल२ श—शुचिकामो ।

२१] शुचिः सत्यप्रतिज्ञश्च न स जाड्यं करिष्यति ॥२३॥ [२१
प्रियकामश्च ते मातुस् तदर्थं तस्य जीवितम् ।
२२] तस्यापत्यं हि नास्त्यन्यस्तस्मादङ्गद गम्यताम् ॥२४॥ [२२
सर्वेषामेव दुःखोऽयं ततोऽस्त्यभ्यधिकं तु किम् ।
N] अपराधं भवेद् येन बिलं त्वं संप्रवेक्ष्यसि ॥२५॥ [N

इत्यार्षे रामायणे किष्किन्धाकाण्डे हनुमद्वाक्यं नाम
षट्चत्वारिंशः सर्गः ॥ ४६ ॥

---

१. ल१—न स राज्यं ।
भ—न च त्वां जातु शातयेत् ।
२. रा—+ मे ।
३. भ च—च ।
४. भ—नास्त्यन्यत् त० ।
५. अ—भविताभ्यधिकं नु ।
६. रा—श्रीरामा० ।
७. ल ब म श—किष्किंधा० ।
भ—नास्ति ।
८. अ—नास्ति ।

श्रुत्वा तु हनुमद्वाक्यं प्रश्रितं धर्मसंहितम् ।
१] स्वामिसत्कारसंयुक्तमङ्गदः प्रत्युवाच ह ॥१॥ [१
धैर्यं धर्मो यशः शौर्यमानृशंस्यमथार्जवम् ।
२] विक्रमश्चैव सत्यं च सुग्रीवे नोपपद्यते ॥२॥ [२
कथं धर्मान् स जानीते भ्रातरं पूर्वजं हि यः ।
३] अश्मना पर्यरुन्धीत विश्वासानुगतं पुरा ॥३॥ [४
भ्रातुर् ज्येष्ठस्य यो भार्या जीवतो महिषीं प्रियाम् ।
४] धर्मतो मातरं यस्तां स्वीकरोति जुगुप्सितः ॥४॥ [३
सखा पाणिगृहीतश्च कृतकर्मा महायशाः ।
५] न स्मृतो राघवो येन स कस्य सुकृतं स्मरेत् ॥५॥ [५
लक्ष्मणस्य भयाद् येन नाधर्मभयभीरुणा ।
६] आदिष्टा मार्गितुं सीतां स कस्य सुकृतं स्मरेत् ॥६॥ [६
तस्मिन् पापे कृतघ्ने च स्मृतिहीने दुरात्मनि ।
७] आर्यः को विश्वसेत् प्राज्ञः सत्कुलीनो जिजीविषुः ॥७॥ [७
न चाहं यौवराज्येऽस्मिन् सुग्रीवेणाभिषेचितः ।
N] राघवेणाभिषिक्तोऽहं रामेणाक्लिष्टकर्मणा ॥८॥ [N
राजपुत्रं प्रतिष्ठाप्य सगुणं वोऽपि निर्गुणम् ।

---

१. अ भ च—प्रसृतं ।
२. भ—धर्मात्मता ।
३. भ च—+ सत्यञ्च ।
४. कै—वि'''श्वानुगतं ।
ल२—वियश्वानुगतं ।
श—विश्रमानुगत ।
५. रा म—+ जीवितो ।
६. भ—लक्ष्मणेन ।
७. ल२ भ—सीता ।
८. म—नास्ति ।
९. अ भ च—तत्कुलीनो ।
म श—सकुलीनो ।
१०. श—०क्तो हि ।
११. अ—चापि ।

८] स कथं तु कु[1]लीनं मां पितृव्यो जीवयिष्यति ॥९॥ [८

भिन्नमन्त्रो विरुद्धश्च तथागुणकथां ब्रुवन् ।

९] किष्कि[2]न्धां प्राप्य जीवेयं सुग्रीववशगः कथम् ॥१०[3]॥ [९

उपांशुदण्डेन हि मां बन्धनेनाव[4]सादयेत् ।

१२] शठः क्रूरः कृतघ्नश्च सुग्रीवो राज्यकारणात् ॥[5]११॥ [१०

बन्धने योजयत्यस्[6]माच्छ्रेयः प्रायोपवेशनम् ।

११] अनुजानीत मां सर्वे गृहान् गच्छत वानराः ॥१२॥ [११

गमिष्यामि न तत्राहमकृतार्थः कदा[7]चन ।

१२] इहैव प्रायमासि[8]ष्ये श्रेयो मरणमेव मे[9] ॥१३॥ [१२

अभिवादनपूर्वं तु जनः कौश[10]ल्यमुच्यताम् ।

१३] वाच्यस्[11]तातो यवीयान् मे सुग्रीवो वचनान्मम ॥१४॥ [१३ उ

आरोग्यपूर्वं कुशलं वाच्या माता रु[12]मा च मे ।

१४] मातरं चापि मे तारामाश्वासयितुमर्हथ ॥१५॥ [१४

१५पू] प्रकृत्या प्रियपुत्रा सा सानुक्रोशा तपस्विनी । [१५पू

N] बहुभिर् मधुरैर् वाक्यैः शोकप्रणु[13]दनैः शुभैः ॥१६॥ [N

N] भर्तृहीना[14] विवत्सा च शोका[15]र्ता दुःखभागिनी । [N

---

१. ब—कुलीनः ।
ल१—† पितृव्यं ।
भ—तत्कुलीनं ।

२. ल१ ब म श—०किष्किंदां ।

३. भ—नास्ति ।

४. रा ब—† बंधेन ना० ।

५. भ—नास्ति ।

६. अ च भ—† ०योजयेत्सोस्मां छ्रेयः ।

७. अ भ च—कथंचन ।

८. कै अ भ च—०माशिष्ये ।

९. कै—वा ।

१०. कै रा ल१ ब म ल२ श—जनकौशल्य० ।

११. कै रा ल१ ब म ल२ श—† ० स्ततो ।

१२. कै रा—च सा ? ।
ल१ ब म ल२ श—तु सा ।

१३. रा—शोकपिण्डनुदैः ।

१४. च—भर्तुर्हीना ।

१५. भ—कामार्ता ।

१९ उ] विनष्टं मामिह श्रुत्वा व्यक्तं हास्यति जीवितम्॥१७॥ [१९ उ

एतावदुक्त्वा वचनं वृद्धांस्तानभिवाद्य च ।

१६] संविवेशाङ्गदो भूमौ रुदन् दर्भेषु दुर्मनाः ॥१८॥ [१६

तस्य संविशतः श्रुत्वा वचनं हरियूथपाः ।

१७] नयनेभ्यः प्रमुमुचुः शोकजं वारि दुःखिताः ॥१९॥ [१७

सुग्रीवं चापि निन्दन्तः प्रशंसन्तो हि वालिनम् ।

१८] परिवार्याङ्गदं सर्वे विविशुः प्रायमासितुम् ॥२०॥ [१८

निश्चयं वालिपुत्रस्य विज्ञाय हरिपुंगवाः ।

१९] उपस्पृश्योदकं सर्वे प्राङ्मुखाः समुपाविशन् ॥२१॥ [१९

२०पू ] दक्षिणाग्रेषु दर्भेषु कृत्वा चोत्तरतः शिरः । [२०पू

N] ते दीनमनसः सर्वे रुदन्तो हि पृथक् क्षितौ ॥२२॥ [N

२० उ] तमेवानुमरिष्यन्तः सर्वे संविविशुस्तदा । [N

स संविशद्भिर् बलिभिर् महीधरो

महाऽद्रिशृङ्गप्रतिमैः प्लवङ्गमैः ।

बभूव सन्नादितकन्दरान्तरो

२१] भृशं नदद्भिर् जलदैरिवोष्णगे ॥२३॥ [२३

इत्यार्षे रामायणे किष्किन्धाकाण्डे प्रायोपवेशनं नाम

सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

---

१. म—+ वाचि । ल२—+ वापि ।
२. रा—+ वाभि० । भ च—वापि ।
३. अ च—निर्दुष्टाः ।
४. रा—०न्तोपि । भ—०तश्च ।
५. कै—+ पर्यवार्या० ।
६. कै अ भ च—०माशितुं ।
७. भ च—हरियूथपाः ।
८. रा—तद्दीन० ।
९. ल२—प्राङ्मुखाः समुपाविशन् ।
१०. ल ब म रा—सन्नादितकंदरो भृशं ।
११. रा भ—०रिवोष्णगैः ।
१२. रा—इत्यार्षे श्रीरा० ।
ल२—इति रा० ।
१३. रा ल१ ब म रा—किष्किंदा० ।
भ च—नास्ति ।

[वं-१६] =[अष्टचत्वारिंशः सर्गः]= [दा-५६]

उपविष्टाश्च ते प्राये[1] सर्वे तस्मिन् महीधरे ।
[१] हरयो गृध्रराजोऽथ तं देशमुपचक्रमे ॥ १ ॥ [१
[N] स गुहाया विनिर्गम्य[2] विन्ध्यस्य शिखरे स्थितः । [N
संपातिर् नाम वेगेन दीर्घजीवी विहंगमः ॥ २ ॥
[२] भ्राता जटायुषः शूरः प्रख्यातबलपौरुषः । [२
कन्दरादभिनिर्गम्य स विन्ध्यस्य गिरेर्द्विजः ॥ ३ ॥
[३] उपविष्टान् हरीन् दृष्ट्वा संहृष्ट इदमब्रवीत । [३
विधिः किलै[3] परो लोके विधिनैवोपपद्यते ॥ ४ ॥
[४] यथेदं विहितं[4] भक्ष्यं मह्यं चिरमिहेप्सितम्[5] । [४
[N] दैवेन[6] विहितं नूनं भक्ष्यमेतदुपस्थितम्[7] ॥ ५ ॥ [N
मांसं[8] वराणां[9] खादिष्ये वानराणां मृतं मृतम्[10] ।
[५] हृष्टोऽब्रवीच्च संपातिर् दृष्ट्वा तान् हरियूथपान् ॥६॥[11] [५
तस्य तद् वचनं श्रुत्वा विहगस्यामिषैषिणः ।
[६] अङ्गदः परमायस्तो हनूमन्तमुवाच[12] ह ॥ ७ ॥ [६
पश्यै[13] सीतां[13] प्रवादेन साक्षाद् वैवस्वतो यमः ।

---

१. अ म च—+ प्रायः ।
२. ल१ ब म श—विनिष्क्रम्य ।
३. भ—परिगतो ।
४. श—विदितं ।
५. ल१ ब म—०मिहेषितं ।
  ल२—०मिहोषितं ।
६. भ—देवेन ।
७. ल१ ब म—+ ०मेतमुपस्थितः ।
  ल२ श—+ ०दुपस्थितः ।
८. च—वरं ।
९. च—वानराणां ।
१०. भ—मृते मृते ।
११. कै रा ल१ ब म ल२ श—
  अतः परमधिकः पाठः—
  एतावदुक्त्वा संपातिः प्रेक्षमाणः प्लवंगमान् ।
  कै—,, ,, प्रेक्ष्यमाणान् ,,
  अ—,, ,, प्रेक्ष्यमाणः ,,
  च—,, ,, प्रेक्ष्यमाणा ,,
१२. रा—हनुमंत० ।
१३. कै रा ल२ श—पश्यस्येतं ।
  ल१ ब—पश्यस्येदं ।
  म—+ वश्यमेतं ।

७] इमं¹ देशमनुप्राप्तो वानराणां विपत्तये ॥८॥ [७
रामस्य न कृतं कार्यं न राज्ञो वचनं कृतम् ॥९॥
८] हरीणामियमज्ञाता विपत्तिः सहसा कृता²। [८
वैदेह्यां ह्रियमाणायां कृतं कर्म जटायुषा ॥१०॥
९] गृध्रराजेन यत् तत्र श्रुतं वस्तन्न³ संशयः । [९
रावणेन नृशंसेन स तु प्राणैर् वियोजितः ॥११॥ [N
१०] यथा सर्वाणि भूतानि तिर्यग्योनिगतान्यपि ।
प्रियं कुर्वन्ति रामस्य त्यक्त्वा प्राणांस्तथा वयम्॥१२॥ [१०पू
११] रामस्यार्थे पराक्रान्ताः सर्वे⁴ संत्यक्तजीविताः ।
कान्ताराणि प्रविष्टाः स्मो न च पश्यामि⁵ मैथिलीम्॥१३॥ [१२
१२] धन्यः स गृध्रराजस्तु रावणेन हतो रणे ।
मुक्तश्च सुग्रीवभयाद् गतश्च गतिमुत्तमाम्⁶ ॥१४॥ [१३
१३] पितुर्⁷ मे⁸ विनाशाय जहार जनकात्मजाम् ।
राक्षसापसदो मूढः पौलस्त्यकुलपांसनः⁹ ॥१५¹⁰॥ [N
१४] मृतान् मृतानयं पक्षी भक्षयिष्यति वानरान् ।

---

१. कै रा ल१ अ ब म श भ च— इदं ।
२. ल१—नास्ति ।
३. कै रा ल१ अ ब म ल२ श— श्रुतं वस्तु न ।
ब—श्रुतवांस्तु ।
४. ल२—सर्वे संजीविताः ।
श—स्मरं संजीविताः ।
५. रा—पश्यामि ।
६. च—† गतिरुत्तमां ।
७. श—पितुर्नाम० ।
८. कै ल१ ब म ल२ श— ‡ राक्षसापशदो ।
रा † ०पशब्दः ।
९. च—‡ ० पांशनः ।
१०. अतः परमधिकः पाठः— अ भ—
जटायुषो वालिनश्च नाशाद्दशरथस्य च ।
च—,, ,, विनाशा ,, ,,

N] धन्यः स गृद्ध्राधिपतिर् जटायुः परवीरहा ॥१६॥ [N
यो राघवार्थे निहतो रावणेन दुरात्मना ।[2]
N] पितुर्मम विनाशेन रामप्रव्राजनेन च ॥१७॥ [N
१५ उ] हरणेन च वैदेह्या हर्यैः संशयं गताः । [१४उ
N] एकस्याः खलु कैकेय्याः कृते क्लिश्यन्ति वानराः॥१८॥ [N
सुदुष्करं कृतं कर्म कैकेय्या धर्मगर्हितम् ।
१६] यया समस्तं निहतं कुलमात्मा तथा वयम् ॥१९॥ [N
कैकेय्या हि कृते पापे शोकेन स गतो दिवम् ।
१७] सत्यसन्धः क्षितिपतिः पुत्रं संप्रेष्य दण्डकम् ॥२०॥ [N
N] यस्य रामस्य वसतो रावणेन हृता प्रिया ।
उपकारं हि कुर्वन्ति साधवः स्वजने सदा ॥२१॥ [N
१८] धन्यः स गृद्ध्राधिपतिर् जटायुः परवीरहा ।
१९पू ] यो राघवार्थे निहतो रावणेन पराक्रमी ॥२२॥ [N
सोऽन्विष्यंश्च महाऽरण्ये सुग्रीवेण समागतः ।
N] शूरो बाणेन चैकेन सर्वमर्माभिघातिना ॥२३॥ [N
निहत्य वालिनं रामः सुग्रीवमभिषिक्तवान् ।
N] सिद्धार्थं तं प्रशासन्तं काले शाखामृगेश्वरम्॥२४॥ [N

---

१. अ भ च—पराक्रमी ।
२. रा—नास्ति ।
३. कै ल$_1$ ब म ल—+ राजप्रव्रा० ।
४. ल$_1$ ब म ल$_2$ श—वानराः ।
५. ल$_1$—+ क्लिशंति ।
६. कै रा अ ब म ल$_2$ श भ च—यथा ।
७. कै ल$_1$ अ ब म च—+ संप्रेक्ष्य । रा—+ संप्रेस्य । ल$_2$—+ संप्रेक्ष ।
८. रा ल$_1$ ब म ल$_2$ श—दंडके । ल—दंडकैः ।
९. भ—सोन्वेषंश्च । अ—+ सोन्विषंश्च ।
१०. कै रा ल$_1$ ब म ल$_2$ श—च ।
११. कै ल$_1$ अ ब म ल$_2$ श—प्रशंसंतं । रा—प्रसंसन्ति । भ—प्रकाशन्तं ।

ततः संचोदयामास सीताऽन्वेषणतत्परः ।

N] ततो रामवचः श्रुत्वा सुग्रीवो वानरेश्वरः ॥२५॥ [N

विचीयन्तां दिशः सर्वाः सोऽस्मान्वै प्रेषयत् तदा ।

N] ते विचित्य दिशः सर्वा यथोदिष्टां नृपात्मजाम् ॥२६॥ [N

अदृष्ट्वा मैथिलीं सीतां भयात् प्रायमुपास्महे ।

N] त्यक्त-दार-सुहृद्वर्गास्त्यक्तसर्व-प्रियास्तथा ॥२७॥ [N

ते वयं नचिरात् कालान्निराहारा बुभुक्षिताः ।

N] देहमुत्सृज्य यास्यामः प्रतिश्रयमिवापगाः ॥२८॥ [N

कुलान्येतानि कैकेय्या हतानि त्रीणि लीलया ।

N] वानराणां नराणां च पक्षिणां प्रवरस्य च ॥२९॥ [N

१९ उ] एतच्छ्रुत्वा ततो वाक्यमङ्गदस्य मुखाच्च्युतम् । [१८पू

भ्रातृस्नेहेन संपातिः सहसा व्यथितोऽभवत् ॥३०॥ [N

२०] प्रायं समुपविष्टांस्तांस् ततो गिरिगुहाशयः । [N

अब्रवीद् वचनं गृध्रस्तीक्ष्णतुण्डो महास्वनः ॥३१॥ [१८उ

२१] को जटायुषमाख्याति प्राणैरिष्टतरं मम ।

N] हतं शूरमनार्येणं मम संघट्टयन् मनः ॥३२॥ [१९

तदहं श्रोतुमिच्छामि विनाशं वानरर्षभाः ।

२२] भ्रातुर् जटायुषस्तस्य जनस्थाननिवासिनः ॥३३॥ [२२

---

१. ल$_1$ ब—स चोद० ।

२. कै ल$_1$ ब म ल$_2$—‡विचेयंतां । रा—‡विचीयतं । श—‡विचेयतां । भ—† विचीयतां ।

३. ल$_1$ म—नास्ति ।

४. अ भ च—† विचिंत्य । म ल$_2$—च्युतिः ।

५. म ल$_2$—नास्ति । च्युतिः । च—द्वितीयतृतीयपादौ द्विः पठितौ ।

६. कै रा ल$_1$ ब म ल$_2$ श—तस्मात् ।

७. कै रा ल$_1$ ब म ल$_2$ श—०रसमार्गेण ।

८. कै रा ल$_1$ अ ब म श भ च—संघटयन् ।

९. म श—नास्ति ।

कथं जटायुर् निहतः कश्च रामो जटायुषः । [N
२३] कथं वाऽऽसीज्जनस्थाने युद्धं राक्षसगृद्ध्रयोः ॥३४॥ [२०पू
सुहृद् भ्राता जटायुर् मे यवीयान् हरिपुङ्गवाः ।
२४] हतः केन कथं तत्र कस्मात् प्रायमुपाविशन् ॥३५॥ [N
यवीयसो गुणाढ्यस्य श्लाघनीयस्य विक्रमैः । [२१उ
२५] नामधेयमिदं भ्रातुश् चिरस्याद्य मया श्रुतम् ॥३६॥ [२०उ
N] तत्त्वमिच्छामि विज्ञातुं विनाशे वानराधिपाः । [N
तस्येष्टस्य मम भ्रातुः सखा दशरथो नृपः ॥३७॥
२६] यस्य रामः प्रियः पुत्रो ज्येष्ठः स सदृशो गुणैः । [२३
वनं प्रविष्टः स कथं भार्यया सह सीतया ॥ ३८ ॥ [N
२७] पृष्ठतोऽनुगतो भ्रात्रा लक्ष्मणेन महात्मना ।
कथं चापि हृता सीता केन वा हरिपुङ्गवाः ॥३९॥ [N
२८] कस्मिन् वा कारणे त्यक्ता एतदाख्यातुमर्हथ । [N
सूर्यांशुदग्धपक्षत्वान्न शक्नोमि विचेष्टितुम् ॥ ४० ॥
२९] इच्छेयमस्माद्गिर्यग्राद् भवद्भिरवतारितुम् । [२४
N] समीपं समुपागम्य स्फुटं च परिभाषितुम् ॥ ४१॥ [N

इत्यार्षे रामायणे किष्किन्धाकाण्डे संपातिदर्शनं नाम

अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

---

१. अ भ च—चासी० ।
२. कै ल₂ भ च—विनाशं ।
३. ब—सदृशैर् ।
४. भ—सर्वमेत० ।
५. च—मे तदाख्या० ।
६. भ—[ ] वचेष्टितुं ।
७. अ च—परिभाषणं ।
८. भ—प्रान्तेऽपरहस्तेन ।
९. ल₂—इति ।
१०. रा—श्रीरामायणे ।
११. ल ब भ श—किष्किन्दा० ।
भ च—नास्ति ।
१२. रा—संपातद० ।
१३. अ—नास्ति ।

## [वं–५७]= [ एकोनपञ्चाशः सर्गः ] = [दा०–५७]

शोकाद् भ्रष्टस्वरमपि[1] श्रुत्वा ते हरियूथपाः ।
१] श्रद्दधुर् नैव तद्वाक्यं कर्मणा तस्य शङ्किताः[2] ॥१॥ [१
ते प्रायमुपविष्टाश्च दृष्ट्वा गृध्रं प्लवङ्गमाः[3] ।
२] चक्रुर् बुद्धिं तथा घोरां सर्वान्नो भक्षयिष्यति ॥२॥ [२
अथवा प्रायमासीनान् यदि नो भक्षयिष्यति[4] ।
३] कृतकृत्या भविष्यामः क्षिप्रं सिद्धिमितो गताः ॥३॥ [३
एतां बुद्धिं ततः कृत्वा सर्वे वानरपुंगवाः ।
४] अवतार्य[5] गिरेः शृङ्गाद् गृध्रमाश्वासयंस्तदा ॥४॥ [४
N] समाश्वास्य ततो गृध्रमीश्वरं पिशिताशिनाम् । [N
N] प्लवगेन्द्रात्मजः[6] श्रीमानङ्गदः[7] प्रत्युवाच ह ॥५॥ [N
८पू] राजा सर्वस्य लोकस्य इक्ष्वाकूणां महारथः । [७पू
राजा दशरथो नाम रथकुञ्जरवाजिमान्[8] ॥६॥
N] तस्य पुत्रो गुणश्रेष्ठो रामो राजीवलोचनः । [N
८उ] रामो दाशरथिः श्रीमान् प्रविष्टो दण्डकं वनम् ॥७॥ [७उ
लक्ष्मणेन सह[9] भ्रात्रा वैदेह्या चापि सीतया ।
९] पितुर् वाक्यकरः श्रीमान् धर्म्यं पन्थानमाश्रितः[10] ॥८॥ [८
N] वसतस्तस्य[11] रामस्य रावणो राक्षसेश्वरः । [N

---

१. रा—‡ ०रमभि० ।
ल$_{2}$—† ० सुरमपि ।
२. च—‡ संकिताः ।
३. कै रा ल$_{1}$ ब म ल$_{2}$ श—नास्ति ।
४. कै ल$_{2}$ भ—नास्ति ।
५. अ च—† अवतीर्य ।
६. ल$_{2}$—† पवगेन्द्रा० ।
७. ल$_{2}$—‡ श्रीमाञ्चंगदः ।
८. कै रा ल$_{1}$ अ ब म ल$_{2}$ श भ—
०रवाजिनाम् ।
९. ल$_{1}$ ब—सह । म—त्रुटितम् ।
१०. कै रा ल$_{1}$ ब म ल$_{2}$ श—
धर्मपन्थान० ।
११. कै रा ल$_{1}$ ब म ल$_{2}$ श—सर्वत्र० ।

N] अकारणरिपुर् जातो विधिरेवात्र कारणम् ॥[1]९॥

१० उ] तस्य भार्या जनस्थानाद् रावणेन हृता च्छलात् । [८उ

१९पू] तां वयं नाधिगच्छामो रात्रौ सूर्यप्रभामिव ॥१०॥ [१९ उ

रामस्याथ पितु मित्रं जटायुर् नाम धार्मिकः ।

११] ददर्श भीतां वैदेहीं ह्रियमाणां विहायसा ॥११॥ [९

रावणं विरथं कृत्वा मोक्षयित्वा च मैथिलीम् ।

१२] परिश्रान्तश्च वृद्धश्च रावणेन हतो रणे ॥१२॥ [१०

१३पू] एवं जटायुर् निहतो रावणेन बलीयसा ।

१४पू] सत्कृतश्चापि रामेण गतः स्वर्गं न संशयः ॥१३॥ [११

९उ[ बभूव विरजौ नाम वानरेन्द्रः प्रतापवान् [4]।

६उ] वानरप्रवरैःश्रीमान् धार्मिकौ तस्य चात्मजौ ॥१४॥ [५

सुग्रीवश्चैव वाली च पुत्रौ चैवातुलावुभौ ।

७] लोके विश्रुतकर्माणौ राजा वाली तु मे पिता ॥१५॥ [६

१७ उ] ततो मम पितृव्येण‡ सुग्रीवेण महात्मना ।

चकार राघवः सख्यमवधीत् पितरं च मे ॥१६॥ [१२

१८] मम पित्रा विरुद्धं च सुग्रीवं सचिवैः सह ।

निहत्य वालिनं रामस्ततस्तं त्वभ्यषेचयत् ॥१७॥ [१३

१९] राज्ये च स्थापितस्तेन सुग्रीवो वानरोत्तमः ।

राजा वानरमुख्यानां तेन च प्रेषिता वयम् ॥१८[11]॥ [१४

---

१. अ भ च—नास्ति ।
२. अ भ च—संस्कृत० ।
३. अ भ च—विरजो ।
४. भ—अतः परमधिकः पाठः—
ममार्यःपार्थिवःपक्षिन् धार्मिकःसुचिरात्मवान्
५. भ च—वानरः प्रव० ।
६. श—सुग्रीवश्चापि ।
७. कै रा $ल_1$, ब $ल_2$ श भ च—
‡ पितृव्येन ।
८. श—सख्यं सोवधीत् ।
९. कै रा $ल_1$, ब म श—
विरोधं च सुग्रीवस० ।
१०. अ भ च—स राज्ये ।
$ल_2$—राज्ये सं० ।
११. म—नास्ति ।

२०] ते वयं दण्डकारण्यं विचित्य सुसमाहिताः ।
अज्ञानेन प्रविष्टाः स्म धरण्यां विवृतं बिलम् ॥१९॥ [१६

२१] मयस्य मायाविहितं वनं तद्वै विचिन्वताम् ।
व्यतीतस्तत्र नो मासो राज्ञा यः समयः कृतः॥२०॥ [१७

२२] तेन स्म कपिराजेन प्रेषिताः सर्वतो दिशम् ।
२३पू ] कृतां संस्थामतिक्रम्य भयात् प्रायमुपास्महे ॥२१॥ [१८

N] ते प्रायमुपविष्टाः स्म सुग्रीवभयमोहिताः । [N
२३ उ] अस्मदीयैः शरीरैस्त्वं कुरु कार्यं यथासुखम् ॥२२॥ [N]
क्रुद्धे हि तस्मिन् सुग्रीवे राघवे च सलक्ष्मणे ।
२४] गतानामपि सर्वेषां तत्र नो नास्ति जीवितम् ॥२३॥ [१९

N] एतत् सत्यं वचोऽस्माकं संपाते त्वं निशामय ॥२४॥ [N

इत्यार्षे रामायणे किष्किन्धाकाँण्डे अङ्गदवाक्यं नाम
ऊनपञ्चाशः सर्गः ॥ ४९ ॥

---

१. रा—०कारण्ये ।
२. म—धरण्या ।
भ—आ१९ शस्य तृतीयपादादेरत आ२१ शस्य तृतीयपादान्तात् पाठो गलितः ।
३. म—निवृतं ।
४. च—विचिन्वता ।
५. ल१ ब म ल२—राज्ञो ।
६. ल२—इति ।
७. ल१ ब म श—किष्किंद॰ ।
भ च—नास्ति ।

इत्युक्तः करुणं वाक्यं वानरैस्त्यक्तजीवितैः ।
१] अब्रवीद् वानरान् गृध्रो वाष्पगद्गदया गिरा ॥१॥ [१
मम भ्राता यवीयान् स जटायुर् नाम वीर्यवान् ।
२] समाख्यातो हतो युद्धे रावणेन बलीयसा ॥२॥ [२
वृद्धभावादशक्तत्वाच्छ्रुत्वा चापि तु मर्षये ।
३] न हि मे शक्तिरद्यास्ति भ्रातृहन्तारमर्दितुम् ॥३॥ [३
पुरा वृत्रवधे वृत्ते स चाहं च जयैषिणौ । [४पू
४] तरुणौ प्राणवन्तौ च संहर्षाद् गगने प्लुतौ ॥४॥ [N
उदयादुदितं दीप्तं जपापुष्पप्रभोपमम् । [N
५] आदित्यमनुधान्वैतां(?तं) ज्वलन्तं रश्मिमालिनम्॥५॥ [४उ
आवामादित्यमार्गे तु जवेनोपगतौ भृशम् ।
६] मध्यं माप्ते तु सूर्ये वै जटायुर् विषसाद ह ॥६॥ [५
तमहं भ्रातरं दृष्ट्वा सूर्यरश्मिभिरर्दितम् ।
७] पक्षाभ्यां छादयाञ्चक्रे स्नेहात् परमविह्वलम् ॥७॥ [६
एवं प्रियो मया भ्राता वीर्ययुक्तेन रक्षितः ।
N] दह्यमानं स्वयं स्नेहादात्मानं नोपलक्षये ॥८॥ [N

---

१. अ—वाक्यसंदिग्धया ।
भ च—वाष्पसंदिग्धया ।
२. रा ल$_1$ ब ल$_2$—ममाख्यातो० ।
अ च—समाख्यातं हतं ।
३. ल$_1$ ब—०क्तिरद्यापि ।
४. श—भ्रातुर्हंतार० ।
५. कै रा म श—तु वव्रुधे ।
ल$_1$ ब—वव्रुते वृत्तं ।
६. भ—संघर्षाद् ।
७. ल$_2$—जया० ।
८. कै रा ल$_1$ ब म ल$_2$ श भ—
०नुधावेतां ।
९. अ भ च—०त्यमार्गं ।
१०. भ—मध्ये ।
११. भ—‡ ०भिनन्दितं ।
श—०भिरीडितं ।
१२. भ—मम ।

निर्दग्धपक्षः पतितः पर्वतेऽहं पराजितः ।
८] अस्मिन् विंध्ये वसन् भ्रातुः प्रवृत्तिं नोपलक्षये ॥९॥ [७
एवमुक्तो जटायोस्तु भ्रात्रा तत्त्वानुदर्शिना ।
१२] युवराजो महाप्राज्ञः प्रत्युवाचेदमङ्गदः ॥१०॥ [८
संपाते दीर्घदर्शी त्वं घोरादस्मान्महाभयात् ।
१३] पाह्यस्मान् यदि जानीषे निलयं रावणस्य च ॥११॥ [९
पापस्यादीर्घदर्शस्य राक्षसस्य दुरात्मनः ।
१४] आसन्ने यदि वा दूरे यदि जानासि शंस नः ॥१२॥ [१०
ततोऽब्रवीन्महातेजा ज्येष्ठो भ्राता जटायुषः ।
१५] आत्मानुरूपं वचनं वानरान् संप्रहर्षयन् ॥१३॥ [११
निर्दग्धपक्षः क्लिष्टोऽहं हतवीर्यश्च वानराः ।
१६] वाङ्मात्रेण तु रामस्य करिष्ये हितमुत्तमम् ॥१४॥ [१२
रामार्थं यदिदं कृत्यं तत् कृत्यं प्रथमं मम ।
१८] जरया तु हतं तेजः प्राणास्तु शिथिला मम ॥१५॥ [१४
तरुणी रूपसम्पन्ना सर्वाभरणभूषिता ।
१९] ह्रियमाणा मया दृष्टा राक्षसेन्द्रेण जानकी ॥१६॥ [१५
क्रोशन्ती राम रामेति लक्ष्मणेति च सुस्वरम् ।
२०] भूषणानि निरस्यन्ती गात्राणि च विधुन्वती ॥१७॥ [१६
सूर्यप्रभेव शैलाग्रे[11] तस्याः कौशेयमुद्धृतम्[12] ।

---

१. च—निदग्ध० ।
२. भ—आख्याहि ।
३. भ—महात्मनः ।
४. रा अ च—साक्षसु० ।
५. भ—रामस्य ।
६. अ भ च—हतं ।
७. कै—। शिथिला ।
८. ल$_2$—। तु वैदेह्या ।
९. ल$_1$ अ व म ल$_2$ रा भ च—सुस्वरं ।
१०. कै म—। विधुन्वती ।
११. रा—। शाकाग्रे ।
१२. अ व म भ च—० मुद्धृतं ।

२१] असिते राक्षसे भाति महामेघे यथा तडित् ॥१८॥ [१७
अहं तु सीतां मन्ये वै रामस्य परिकीर्तनात् ।
२२] श्रूयतां चापि वक्ष्यामि निलयं रावणस्य च ॥१९॥ [१८
पुत्रो विश्रवसः साक्षाद् भ्राता वैश्रवणस्य च ।
२३] अध्यास्ते नगरीं लङ्कां रावणो नाम राक्षसः ॥२०॥ [१९
इतो द्वीपे समुद्रस्य सा मध्ये शतयोजने ।
२४] तत्र लङ्का पुरी रम्या निर्मिता विश्वकर्मणा ॥२१॥ [२०
तस्यां वसति वैदेही पीतकौशेयवासिनी ।
२५] रावणान्तःपुरे रुद्धा राक्षसीभिः सुरक्षिता ॥२२॥ [२२
२६ उ] लङ्कायामभिगुप्तायां सागरेण समन्ततः । [२३उ
२६पू ] जनकस्यात्मजां तत्र सीतां द्रक्ष्यथ मैथिलीम् ॥२३॥ २३पू
२७पू ] संप्राप्य सागरस्यान्तं संपूर्णशतयोजनम् । [२४पू
N] त्रिकूटे पर्वते लङ्कां तत्र द्रक्ष्यथ मैथिलीम् ॥२४॥ [N
२७ उ] विक्रम्य दक्षिणं कूलं तत्र द्रक्ष्यथ रावणम् । [२४उ
तरध्वं त्वरिताः क्षिप्रं विक्रमध्वं प्लवङ्गमाः ॥२५॥
२८] ज्ञानेन खलु पश्यामि दृष्ट्वा प्रत्यागमिष्यथ । [२५
आद्यः पन्थाः कुलिंदा(ंगा)नां ये च वन्याशिनः परे॥२६॥
२९] द्वितीयो बलिभोक्तॄणां ये च वृक्षबिले रताः । [२६

१. ल२—च प्रवक्ष्यामि ।
२. ल१ ब म ल२ श—नास्ति ।
३. अ—यतो ।
४. भ—मन्ये ।
५. रा ल२—० यामपि० ।
६. कै—† दृष्ट्या ।
७. श—† प्रतिगमि० ।
८. भ—अत्र ।
९. भ—पुलिंदानां ।
१०. ल१ च—‡ वान्या० ।
अ भ च—धान्याशिनः ।
११. ल२—†परैः ।
१२. अ भ—† वालिभो० ।
१३. ल२—वृक्षबल ।
भ—वृक्षासले ।

भासास्तृतीयं गच्छन्ति क्रौञ्चाश्च कुररास्तथा ॥२७॥
३०] श्येनाश्चतुर्थं डीयन्ते गृध्रा गच्छन्ति पञ्चमम् । [२७
बलवीर्योपपन्नानां रूपयौवनशालिनाम् ॥२८॥
३१] षष्ठस्तु मार्गो हंसानां वैनतेयगतिः परा । [२८पू
३२पू] वैनतेयाच्च नो जन्म सर्वेषां वानरर्षभाः ॥२९॥ [२८उ
N] अस्माकं विहितं तु स्याद् दिव्यं चक्षुर्बलं महद् । [N
३२ उ] गर्हितं च कृतं कर्म तेन स्म पिशिताशिनः ॥३०॥ [३२पू
इहस्थोऽहं च पश्यामि रावणं चापि मैथिलीम् ।
३३] अस्माकं गृध्रराज्ञां हि दिव्यं चक्षुर्बलं ध्रुवम् ॥३१॥ [२९
सोऽहमाहारलोभेन निसर्गेण च वानराः ।
३४] आयोजनशतं साग्रं सर्वं पश्यामि चक्षुषा ॥३२॥ [३०
अस्माकं विहिता वृत्ति निसर्गेणं च दूरतः ।
३५] विहिता पादमूले तु वृत्तिश्चरणयोधिनाम् ॥३३॥ [३१
उपायो दृश्यतां कश्चिद् तरणे लवणाम्भसः ।
३६] अधिगम्य तु वैदेहीं सिद्धार्थाः सन्निवर्तस्यथ ॥३४॥ [३३
N] तेन विज्ञानयोगेन ब्रवीमि च प्लवङ्गमाः । [N
समुद्रं गन्तुमिच्छामि वानरा वरुणालयम् ॥३५॥

---

१. च—० श्चतुर्थं ।
२. ल१—‡ ०रर्षिभाः ।
३. अ भ च—तस्माद्० ।
४. अ च—०ताशनाः ।
५. भ—प्रपश्यामि ।
६. भ—तां च । च—‡ तान्स ।
७. रा भ—नास्ति ।
८. ल२—‡ निसर्गेन ।
९. रा—नास्ति ।
१०. ल२—‡ निसर्गेन ।
११. अ भ—पदमूले ।
१२. ल१—‡० णयोधितां ।
१३. ल१ ब—† उपाये ।
१४. अ भ च—० लंघने ।
१५. अ—† संति वत्स्यथः ।
१६. अ भ च—केन ।

३७] प्रदास्याम्युदकं भ्रात्रे स्वर्गताय महात्मने । [३४

N] इति श्रुत्वा च तद्वाक्यं तेऽङ्गदप्रमुखास्तंतः ॥[2] ३६॥ [N

ते[3] तं नीत्वा[4] समं देशं[5] पुण्यं नदनदीपतेः ।

३८] निर्दग्धपक्षं संपातिमवतार्य[6] प्लवङ्गमाः ॥३७॥ [३५

प्रत्यानीय तु तं गृध्रं तदा[7] भ्रान्ताः[8] प्लवङ्गमाः ।

३९] बभूवुर् वानरा हृष्टाः प्रवृत्तिमुपलभ्य ताम् ॥३८॥ [३६

इत्यार्षे[9] रामायणे किष्किन्धाकाण्डे[10] प्रवृत्तिलाभो नाम

पञ्चाशः सर्गः ॥ ५० ॥

---

१. ल$_2$—॰स्वास्तथा ।

२. कै रा अ भ च—नास्ति ।

३. कै—† तं ना । रा—†तं नाना ।

अ च—तं नीत्वा च ।

रा ल$_1$ ब म ल$_2$ श—

तं च तस्मात् ।

४. कै—† देशं पुण्ये ।

श—पुण्यं तीरं ।

५. ब—नास्ति ।

६. कै रा ल$_1$ अ ब म ल$_2$श च—

॰ वधार्य ।

७. ल$_1$—† तदभ्रांतः ।

८. श—ते ।

९. रा—इत्यार्षे श्रीरा॰ ।

ल$_2$—इति ।

१०. ल ब म श—किष्किंदा॰ ।

भ—नास्ति ।

ततस्तदमृतास्वादं[1] गृध्रराजसमीरितम् ।
२८] निशम्य वचनं हृष्टास्ते तदा प्लवगर्षभाः ॥ १ ॥ [१
जाम्बवांश्च हरिश्रेष्ठः सह सर्वैः प्लवङ्गमैः ।
२९] भूतलात् सहसोत्थाय गृध्रराजमिहाब्रवीत्[2] ॥ २ ॥ [२
क्व[3] सीता केन[4] वा दृष्टा मैथिलीं को जहार ताम् ।
३०] सर्वमाख्याहि भद्रं ते गतिर् भव वनौकसाम् ॥३॥ [३
को दाशरथिबाणानां बहुवेगप्रपातिनाम् ।
N] स्वयं लक्ष्यत्वमासाद्य[5] वैवस्वतपथि स्थितः ॥ ४ ॥ [४
N] तच्छ्रुत्वा वचनं तस्य सीताश्रुतिसमाहितम् । [N
स हरीन् प्रीतिसंयुक्तान् सीताश्रुतिसमाहितान्[6]॥५॥
३१] भूय[7] आश्वासयन् साक्षात् तमेवार्थमभाषत । [५
श्रूयतां[8] वत[9] वैदेह्या यथा मे हरणं श्रुतम् ॥ ६ ॥
३२] येन[10] चापि मे[11] समाख्यातं यत्र चायतलोचना । [६
अहमस्मिन्[12] गिरौ दुर्गे योजनायुतविस्तृते ॥ ७ ॥
३३] चिरादापतितो गृध्रः क्षीणवीर्यपराक्रमः । [७
N] विपक्षः परिसर्पामि तीक्ष्णां दुर्गां वसुन्धराम् ॥८॥ [N
तन्मे स्नेहहितः पुत्रः सुपार्श्वो[13] नाम वानराः ।

---

१. ब—+०स्तममृतास्वादं ।
२. ब ल$_1$—० मथाब्रवीत् ।
३. अ—क्व नु ।
४. श—स च ।
५. अ च—+ लक्ष्योसि चासाद्य ।
भ—लक्ष्यासिसंयुक्तो ।
६. रा अ च—०तिसमायुतान् ।
७. ल$_1$ ब भ ल$_2$—भूय आश्वासयत् ।
भ—भूयश्चा० ।
८. अ भ च—पक्षी ।
९. भ—तात ।
अ च—+ तव ।
१०. अ भ च—येन चापि ।
११. रा ल$_1$ ब—तत्र ।
१२. ल$_2$—अस्मिन्नहं ।
१३. रा ल$_1$ ब भ—सपार्श्वो ।

३४] आहारेण यथाकालं प्रीणाति पतंतां वरः ॥९[2]॥ [८

स कदाचित् क्षुधार्तस्य ममाहाराभिकाङ्क्षिणः ।

३६] गतसूर्येऽहनि प्राप्तः स तु सूनुर् गिराविह ॥१०॥ [१०

स मया वृद्धभावाच्च क्रोधाच्च पततां वरः ।

३७] क्षुत्पिपासापरीतेन कुमारः परिभर्त्सितः ॥११॥ [११

स ममाहारसंरोधाद् व्रीडितः प्रीतिवर्धनः ।

३८] अनुमान्य यथावृत्तमिदं वचनमब्रवीत् ॥१२॥ [१२

अहं तात यथान्यायमामिषार्थी खमाप्लुतः ।

३९] महेन्द्रस्य गिरेर्द्वारं समावृत्य त्वधिष्ठितः ॥१३॥ [१३

स हि प्राणिसहस्राणां सागरोपरिचारिणाम् ।

४०] एको व्यवस्थितः पन्था महेन्द्र-गिरिवासिनाम् ॥१४॥ [१४

---

१. कै रा ल$_{2}$—पतितां ।

२. अतः परमधिकः पाठः—

कै रा ल$_{1}$ व म ल$_{2}$ श च—

एककाले जनन्यर्थे क्षुद्भयं तु पतत्रिणः ।

अ—

एककाले जनन्यर्थे हिमवन्तं जगाम सः ।

स मे भोजनविघ्नं समाचरन् मातृदर्शनात् ॥

भ—

एककाले जनन्यर्थे हिमवन्तं जगाम सः ।

स मे भोजन विघ्नं समाचरन्मातृदर्शनात् ।

तीक्ष्णकामास्तु रागार्तास्तीक्ष्णकोपा भुजङ्गमाः

मृगाणां तु भयं तीव्रं तात तीक्ष्णक्षुधा वयम् ॥

३. कै म श—महाहाराभि० ।

रा—समाहा० ।

४. अ—† गतसूर्योऽहनि ।

५. कै रा ल$_{1}$ व म ल$_{2}$ श—प्रेम्णा ।

६. भ च—मम ।

७. रा—यथान्याऽयमामि० ।

कै रा ल$_{1}$ अ व म ल$_{2}$ श च—

यथान्याय्यामामिषार्थे ।

८. म ल$_{2}$—†सहस्रा हि सहस्राणां ।

९. भ—सागरांबरचारिणां ।

ल$_{2}$—नास्ति ।

१०. कै रा ल$_{1}$ व म ल$_{2}$ श—

व्यवस्थितश्च पंथानं ।

११. कै रा ल$_{1}$ अ व म ल$_{2}$ श च—

प्रावृत्य गिरि० ।

सोऽहमेकायने मार्गे तवैवाहारकाङ्क्षया ।
N] स्थितः पन्थानमावृत्य नागगन्धर्वरक्षसाम् ॥१५॥ [N
तत्र कश्चिन् मया दृष्टो नीलाम्बुदचयप्रभः ।
४१] खमावृत्याभिधावंस्तु स्त्रियमादाय कामपि ॥१६॥ [१५
स मामभ्यवहारार्थं संदृश्य कृतनिश्चयम् ।
४२] संमान्य मां च विधिवत् पन्थानं त्वभ्ययाचत ॥१७॥ [१६
न च याञ्चाऽभिपन्नानां प्रहर्ता भुवि विद्यते ।
४३] नीचेष्वपि जनः कश्चित् किं पुनर्मद्विधा द्विजाः ॥१८॥ [१७
N] सोऽनुज्ञातो मयागच्छद् वामपार्श्वं मम स्पृशन् [N
न कश्चिदस्य पन्थानमावृणोति नभस्तले ॥१९॥
N] महता तेजसा यो मां तोषयन् निर्गतस्ततः । [N
स यक्षरक्षसां राजा रावणः प्रतिवेदितः ॥[12] २०॥
४८] हरन् दाशरथेर् भार्यां मैथिलीं जनकात्मजाम् । [२०

---

१. भ—तस्मिन् ।
२. कै रा ल१ अ ब म ल२ श च—तथैवाहार० ।
३. कै—‡ नीलांबुरुचयप्रभः ।
ल१ अ ब म ल२ श—नीलांबुद० ।
४. अ भ—खमावृत्याभ्यधावच्च ।
५. रा—मामुपपन्नानां ।
अ भ च—सामोपपन्नानां ।
६. कै रा ल१ ब म ल२ श—मद्विधे द्विजे ।
भ—मद्विधो जनः ।
ल२ श—मद्विधे द्विज ।
७. ल२—वामपार्श्वे ।
८. ल१ ब म ल२ श—समास्पृशत् ।
च—समस्पृशत् ।
९. भ—व्योम ।
१०. अ भ च—संक्षिपन्निव ।
११. अ भ च—वेगितः ।
१२. अ भ च—अतः परमधिकः पाठः—
ततोहं खेचरैर्भूतैरभिगम्य सभाजितः ।
दिष्ट्या जीवसि तातेति प्राब्रुवन्मां महर्षयः ।
कथंचित्सकलत्रोसौ तेन स्वस्ति बभूव ते ।
ल१ ब म ल२ श—तेजसा ।
१३. कै रा—प्रतिबोधितः ।
ल१ ब म ल२ श—प्रतिरोधितः ।

रामलक्ष्मणयोर् नाम क्रोशन्तीं मुक्तमूर्धजाम् । [२१उ

४९] भ्रष्टाभरणकौशेयां वेगत्रस्ताङ्गविह्वलाम् ॥२१॥ [२१पू

एष कालात्ययस्तात इति धर्मभृतां वरः ।

५०] एतदर्थं समग्रं मे सुपार्श्वः प्रत्यवेदयत् ॥२२॥ [२२

इति श्रुत्वा न मे काचिद् बुद्धिरासीत् पराक्रमे ।

५१] अपक्षो हि कथं पक्षी कर्म किञ्चिदुपक्रमेत् ॥२३॥ [२३

पक्षाभ्यामावृतस्तेन रावणो मैथिलीं हरन् ।

२५] विचार्य युधि बुद्ध्या च धर्मापेक्षः सुतो मम ॥२४॥ [N

अयुध्यन् स महावीर्यो रावणेन दुरात्मना ।

२६] पुत्रः सन्तर्जितो वाग्भिः कथं त्राता न मैथिली[12] ॥२५॥ [N

युष्मद्विलपितं श्रुत्वा तौ च सीताविनाकृतौ ।

२७] न मे दशरथस्नेहात् पुत्राणामन्तरोऽधिकः ॥२६॥ [N

N] तथा तु भूयो वक्ष्यामि भवतां पौरुषाश्रयम् ॥२७॥

स हि विश्रवसः पुत्रो भ्राता वैश्रवणस्य च । [N

---

१. कै रा ल$_1$ अ ब म ल$_2$ श— स्त्रुमू० ।

२. अ भ च—शोकवेगपरायणाम् ।

३. कै रा ल$_1$ ब ल$_2$ श—† कालोऽत्ययजस्तात । म—‡ कालो गतात्यन्त ।

४. अ भ—तच्छ्रुत्वा हि ।

५. भ—† बुद्धिः सीता० ।

६. ल$_1$ श—† पक्षे ।

७. भ—‡ नावर्यं ।

८. अ भ च—युयुधे बुद्ध्या धर्मापेक्षी ।

९. कै रा ल$_1$ ब म ल$_2$ च—अयुध्यत् ।

१०. कै रा ल$_1$ ब म ल$_2$ श—स तेजसैत्राग्निः ।

११. कै ल$_2$ श—† भ्राता ।

१२. कै रा ल$_1$ ब म ल$_2$ श—मैथिलीम् ।

१३. कै रा—पुत्राणामपराधिकः । ल ब ल$_2$—पुत्रेष्वस्ति स चाधिकः । म—पुत्रेष्वस्ति सदाधिकः ।

१४. कै रा अ म ल$_2$ भ च—† पुरुषाश्रयं ।

१५. ल$_2$—विसहसः ।

N] अध्यास्ते नगरीं लङ्कां रावणो राक्षसाधिपः ॥२८॥ [N
तीरे द्वीपे समुद्रस्य संमग्रे शतयोजने ।
N] तस्मिंल्लङ्का पुरी तस्य निर्मिता विश्वकर्मणा ॥२९॥ [N
N] तत्र सीता तु वसति भर्तृहीना तपस्विनी ।[4] [N
५३पू] श्रूयतां यच्च वक्ष्यामि भवतां पौरुषाश्रयम् ॥३०॥ [२४उ
५२ उ] वाङ्मतिभ्यामपि सदा यतेयुः पुरुषर्षभाः ।
५३ उ] यत् तु दाशरथेर् दुःखं मम तन् नात्र संशयः ॥३१॥ [२५
यद् भवन्तो महावीर्या महोत्साहा मनस्विनः ।
५४] सहिताः कपिराजेन देवैरपि दुरासदाः ॥३२॥ [२६
रामलक्ष्मणबाणाश्च निशिताः कङ्कवाससः ।
५५] त्रयाणामपि लोकानां समर्थास्तात निग्रहे ॥३३॥ [२७
कथं खलु दशग्रीवम् तेजोबलसमन्वितः ।
५६] भवतां तु समग्राणां कर्तुं किञ्चिन् न दुष्करम् ॥३४॥ [२८
तदलं कालसङ्गेन क्रियतां बुद्धिनिश्चयः ।[8]
५७] न हि कर्मसु सज्जन्ते बुद्धिमन्तो जितेन्द्रियाः ॥३५"॥ [२९

---

१. भ—यथास्ते ।
२. ल₂—नास्ति ।
३. ल₂—नास्ति ।
४. अतः परमधिकः पाठः—
अ च—
यत्नाशक्यं मया कर्तुं वाग्बुद्धिपरिवर्तिना ।
भ—यत्तच्छक्यं ,, ,, ,,
५. रा—† ०भ्यामभिस० ।
अ भ च—
‡ ० भ्यामति हि मे संशेयुः ।

६. कै—किंचित्कर्तुं न० ।
रा अ च—‡न किञ्चित्कर्तुंदुष्करं ।
भ—न किञ्चित्कर्म दुष्करं ।
ब—कर्तुं किंचित्सुदुष्करं ।
७. रा—धर्मनिश्चयः ।
८. भ—अतः परमधिकः पाठः—
तद्भवन्तो महावीर्या महोत्साहा महाबलाः ।
९. रा च—मज्जन्ते ।
१०. अ भ च—भवद्विधाः ।
११. कै भ श—नास्ति ।

न चे वीर्यानुरूपं वो मौनं प्रायोपवेशनम् ।
५८] सत्त्व-विक्रम-गांभीर्य-रूपयौवनशालिनाम् ॥३६॥ [N
उत्तिष्ठत न युक्तं वः कृत्वा कार्यविनिश्चयम् । [N
५९] कृते पुरुषकारे हि मरणं नाभिजायते ॥३७॥ [N
स्थिरविनयविशालचक्षुषः
सदृशगजेन्द्रसमानवक्षसः ।
कुलबलमनुरूपमात्मनः
N] कुरुत न गर्हितमद्य विक्रमं च ॥३८॥ [N

इत्यार्षे रामायणे किष्किन्धाकाण्डे संपातिवाक्यं नाम
एकपञ्चाशः सर्गः ॥ ५१ ॥

---

१. अ भ च—हि ।
२. कै रा अ ल२ श भ च—०वक्षसः ।
३. अ—‡ ०वक्षसैः ।
४. भ—कुलवय अनु० ।
५. कै श ल१ ब म ल२ श च—०मत्र पतत्रिणः ।
अ—०मत्र पत्रिपं च ।
६. रा—इति श्री रामा० ।
ल२—नास्ति ।
७. ल अ ब म श—किष्किंदा० ।
भ च—नास्ति ।

ततः कृतोदकं स्नातं गृध्रं तं हरियूथपाः ।
१] उपविष्टा गिरेः पृष्ठे परिवार्य समन्ततः ॥१॥ [१
तमङ्गदमुपासीनं निशाम्यं हरिभिर् वृतम् ।
२] जनितप्रत्ययो हर्षात् संपातिः पुनरब्रवीत् ॥२॥ [२
कृत्वा निःशब्दमव्यग्राः शृण्वन्तु हरयो मम ।
३] तथ्यं संकीर्तयिष्यामि यस्माज् जानामि मैथिलीम् ॥३॥ [३
अस्य विन्ध्यस्य शिखरे पुराऽस्मि पतितो भृशम् ।
४] दाहदग्धपरीताङ्गो निर्दग्धः सूर्यरश्मिभिः ॥४॥ [४
लब्धसंज्ञस्तु षड्रात्रात् संरुजो व्याकुलेन्द्रियः ।
५] वीक्षमाणो दिशः सर्वा नाभिजानामि किञ्चन ॥५॥ [५
ततस्तु सागरान् सर्वान् शैलांश्चैव वनानि च ।
६] सरांसि च नदीश्चैव चिन्तयन् स्मृतिमाप्तवान् ॥६॥ [६
गृध्रपक्षिगणाकीर्णः कन्दरोदरकूटवान् ।
७] दक्षिणस्योदधेस्तीरे विन्ध्योऽयमिति मे स्मृतिः ॥७॥ [७
अस्मिंश्चाप्याश्रमः पुण्यः सुरैरपि सुपूजितः ।
८] मुनिर् निशाकरो नाम तस्मिन्नुग्रतपा भवत् ॥८॥ [८

---

१. भ—तं गृध्रं ।
२. कै रा ल१ अ व म ल श च—निशम्य ।
३. च—संपाती ।
४. म—तत्त्वं ।
५. म च—निदग्धः ।
६ रा—† सहजो ।
७. भ—† वीक्ष्यमाणो ।
८. रा—† स्मृतिरात्मवान् ।
अ ल२ म च—स्मृतिरात्मवान् ।
९. रा—† गृध्रपक्षगणा० ।
१०. भ—† ० रकूटगान् ।
११. रा—‡ न्नुग्रतपो० ।

अष्टौ वर्षसहस्राणि तेनाहमुषितः सह ।
९] स्वर्गतस्य शतं त्वेकं द्वे शते वसतो मम ॥९॥ [९
N] ततो गिरितटे ह्यस्मिन् दग्धपक्षतनूरुहः । [N
अवतीर्य[1] तु गिर्यग्रात् कृच्छ्रेण विषमात्[2] समाम् ।
१०] तीक्ष्णदर्भां[3] वसुमतीं [4]गहनां चाप्युपाक्रमम् ॥१०॥ [१०
तमृषिं द्रष्टुकामोऽस्मि दुःखेनाभ्यागतो भृशम् ।
११] सार्धं[5] जटायुषा[6] पूर्वं बहुशो[8]ऽभिगतो हि सः[7] ॥११॥ [११
अभ्यासाच् चाश्रमे पुण्ये ववुर् वाताः सुगन्धिनः ।
१२] पुष्पवन्तः सदा वृक्षाः फलवन्तश्च सर्वशः ॥१२॥ [१२
उत्प्लुत्य[9] चाश्रमद्वाराद्[10] वृक्षमूलमुपाश्रितः ।[11]
१३] द्रष्टुकामः प्रतीक्षेऽहं भगवन्तं निशाकरम् ॥१३॥ [१३
अथ[12] पश्यामि दूरस्थमृषिं ज्वलिततेजसम् ।
१४] कृताभिषेकं दुर्धर्षमागच्छन्तमुदङ्मुखम् ॥१४॥ [१४
तमृक्षाः सृमरा[13] व्याघ्राः[14] सिंहा नागाः सरीसृपाः ।
१५] परिवार्याभि[15]र्गच्छन्ति मातरं प्राणिनो यथा ॥१५॥ [१५

---

१. ल, ब—† अवतार्य ।
२. श—विषमात्मना ।
३. रा—† तीक्ष्णदंतां ।
म—† तीक्ष्णदग्धं ।
४. कै रा—‡ वृ मुदपाक्रमात् ।
ल, ब—† ०हनां चाप्युदाक्रमत् ।
अ—कृच्छ्रात् समुपाक्रमन् ।
श—† ०हनां चाप्युपाक्रमत् ।
५. म—† सर्वं ।
६. रा—† जटायुषः ।
७. ल,—नास्ति ।
८. रा—बहु ।
९. भ—उत्पत्य ,
१०. अ भ च—चाश्रमद्वारं ।
११. ल,—नास्ति ।
१२. ल, ब—अथापश्यमदू० ।
१३. कै—† समरा । रा—‡ सूकर० ।
१४. ल, ब म श—व्याघ्राः ।
१५. कै रा—परिवार्यं तु ग० ।
अ च—परिवार्यं तु ग० ।
ल,—परिवार्यांतु० ।

१६पू ] संप्राप्तं तं[1] मुनिं दृष्ट्वा तानि सत्त्वानि निर्ययुः ॥१६[2]॥ [१६पू

ऋषिस्तु प्रेक्ष्य[3] मां तूष्णीं प्रविवेशाश्रमं ततः ।

१७] स मुहूर्ताद् विनिष्क्रम्य ततः कार्यमपृच्छत ॥[4] १७॥ [१७

लोम्ना[5] तु[6] विकलं दृष्ट्वा नाभिजानाति[7] मां मुनिः ।

१९] विनिर्दग्धावुभौ पक्षौ शरीरे च व्रणानि मे ॥१८[8]॥ [१८

ईहास्तां[9] पक्षिणौ द्वौ तु[10] मातरिश्वसमौ जवे ।

२०] गृध्रराजौ महावीर्यौ भ्रातरौ कामरूपिणौ ॥१९॥ [१९

तयोर्ज्येष्ठस्तु संपातिर् जटायुस्तु[11] जघन्यजः ।

२१] ममाग्रहीतां[12] चरणौ रूपमास्थाय मानुषम् ॥२०॥ [२०

ताभ्यां तुल्यं न पश्यामि जवेन च बलेन च ।

२२] विचिनोमि जगत् सर्वं तयोस्तुल्यो न विद्यते ॥२१॥ [N

---

१. अ भ—तमृषिं ।

२. अतः परमधिकः पाठः—

अ च—प्रविष्टे भवनं यच (यथा) राज्ञः सामात्यकं बलम् ।

भ—प्रविष्टस्येव भवनं राज्ञः सामात्यकं बलम् ।

३. श—पश्यन् ।

४. भ—नास्ति ।

५. अ भ—लोम्नाथ ।

६. कै रा म ल₂—† विफलं ।

७. अ—न स जानाति ।

ल—† नाभ्यजानाति ।

म श—न प्रजानाति ।

भ—न स्मजानाति ।

ब—नाभ्यजानात्स ।

८. अ भ च—अतः परमधिकः पाठः—

स मुहूर्ताद्विनिष्क्रम्य ततो वचनमब्रवीत् ।

९. अ भ—अत्रास्तां ।

१०. म ल₂ श—च ।

११. भ—जटायुश्च ।

१२. कै रा—† समागृहीतां ।

भ—समाग्रहीतां

N] कस्त्वं कथमिदं दुःखं प्राप्तवानसि सांप्रतम् । [N
कस्ते व्याधिः समुत्पन्नः पक्षाणां पतनं कथम् ॥२२॥
२३] दण्डो वाऽयं कृतः केन सर्वमाख्यातुमर्हसि । [२१
N] दुःखितं त्वां समालक्ष्य मम प्रव्यथते मनः ॥२३॥ [N

इत्यार्षे रामायणे किष्किन्धाकाण्डे निशाकरमुनिदर्शनं नाम
द्विपञ्चाशः सर्गः ॥ ५२ ॥

---

१. अ $ल_2$ भ च—+ कथमिमं ।
२. रा—कुले ।
३. कै—कथं ।
म—कृते ।
भ—हृतः ।
४. म ब भ—त्वां ।
५. रा—श्रीरामायणे ।
$ल_2$—इति ।
६. $ल_1$ ब म श—किष्किन्द्धा० ।
भ—नास्ति ।
७. कै रा अ भ—निशाकरदर्शनं ।

एवमुक्तस्त्वहं तेन श्लक्ष्णया परया गिरा ।
१] अनुजं संस्मरन् किंचिद् बाष्पपूर्णमुखोऽभवम् ॥१॥ [N
स बाष्पवेगः सहसा नदीवेग इवागतः ।
N] वार्यमाणः प्रयत्नेन बलान्मे संप्रवर्तते ॥२॥ [N
N] धारयित्वाश्रुवेगं तु भ्रातृस्नेहमुपस्थितम् ।
२] निवेदयामि स्म तदा महर्षेः संहताञ्जलिः ॥३॥ [N
भगवन् संप्ररुद्धोऽस्मि लज्जयावनताननः ।
३] उदाहर्तुं न शक्नोमि बाष्परुद्धमुखोऽस्म्यहम् ॥४॥ [N
संपातिनं मां भगवन् विद्धि दुष्कृतकारिणम् ।
४] भ्रातरं तस्य वीरस्य ज्येष्ठमिष्टं जटायुषः ॥५॥ [N
स्वचापलेकृताद् दोषाद् विधिनासादितान्तरम् । [N
N] तत् तदा दारुणं कर्म सहसा दुष्करं कृतम् ॥६॥ [१पू
N] सूर्यानुगमनं घोरं यावदस्तमनं रवेः ।
कारणं चाभिधास्यामि येन पक्षाविमौ मम ॥७॥ [N
५] विनिर्दग्धौ विरूपौ च भगवन् श्रोतुमर्हसि । [N
अहं चैव जटायुश्च संहृष्टौ दर्पमोहितौ ॥८॥

---

१. कै रा ल१ व म ल२ श—एवमुक्तोस्म्येह ।
२. रा—इवागतः ।
३. कै ल१ ब म ल२ श—†०स्वाश्रवेगं ।
रा—०स्वाश्रुवेगं ।
४. कै रा अ ल२ भ च—प्रतिरुद्धोस्मि ।
५. भ—०या च नता० ।
६. अ भ च—रुणद्ध्यश्रुमुखं मम ।
७. ल२—दुष्कृतिका० ।
८. ल२—†वीर्यस्य ।
९. भ च—स्वचापल्यकृ० ।
१०. रा भ—०नासादितातुरं ।
११. कै रा ल१ ब म ल२ श—सूर्यस्याग० ।
१२. रा अ भ च—संहृष्टौ ।

६] खं समुत्पतितौ वेगाद्[1] बहुनीलं नभस्तलम् । [३
१० उ] जिज्ञासन्तावुभौ वीर्यमन्योन्यस्य जयैषिणौ ॥९॥ [N
७उ] पणं स्वराज्यमुद्दिश्य कालस्य वशमागतौ । [N
७पू] कैलासशिखरे बद्ध्वा मुनीनामग्रतः पणम् ॥१०॥
रविनिर्वर्तनुगन्तव्यो[2] यावदस्तमनोदयम् । [४
८] अथ वायुपथं[3] प्राप्य पश्यावः[4] पृथिवीतले ॥११॥
रथचक्रप्रमाणानि नगराणि क्वचित् क्वचित् । [५
९] क्वचिद् वादित्रघोषांश्च तथा गीतस्वनं[5] क्वचित् ॥१२॥ [६पू
क्वचित् पुण्याहघोषांश्च क्वचिच्च रुदितस्वनान् । [N
N] आपगाः संप्रकाशन्ते तन्तुवत् संवृताः[7] क्षितौ ॥१३॥ [८उ
१३पू] महानद्योऽपि[6] दृश्यन्ते लाङ्गलस्य गति र्यथा ।
N] निर्षधो[8] हेमकूटश्च माल्यवान् शृङ्गवांस्तथा ॥१४॥ [N
भारवन्तस्तथाऽन्येऽपि[9] प्राकारा इव ते बभुः[10] ।
N] अथाकाशं प्रपद्योभौ भीममक्षयमव्ययम् ॥१५॥ [N
N] पश्यावः सिद्धमार्गांश्च[11] खेचरांश्च सहस्रशः[12] । [N
१०पू] तथैवाप्सरसो बह्वीः[13] पश्यावः सुविभूषिताः ॥१६॥ [६उ

---

१. भ—०स्वच्छनील ।
२. कै रा—[रवित्तौ तु प्रयातव्यौ ।
अ—[रविणौ तु प्रयातव्यौ ।
ब म ल२ श—रविमार्गं प्रयातव्यौ ।
च—[रविणौ तु प्रयातव्यौ ।
३. कै—वायुपथा ।
४. भ—पश्यामि ।
५. अ च—[गीतस्वनां ।
६. ल२—महत् ।
७. भ—संवृताः ।
८. कै रा—निषेधो । अ—निषदो ।
९. अ—सारवंतश्च ।
१०. ल१—[प्रभुः ।
११. भ च—सिद्धमार्गं च ।
१२. ल२—समन्ततः ।
१३. कै रा ल१ ब म ल२ श भ च—बह्व्यः ।

तूर्णमुत्प्लुत्य चाकाशमादित्यपथमास्थितौ ।
११] आवामालोकयन्तौ च कुर्वाणौ वेगमुत्तमम् ॥१७॥ [७
अवनिं दृष्टवन्तौ च नवशाद्वलशोभिताम् । [N
१२] उपलैरिव संच्छन्नां सुप्रख्यातैश्च पर्वतैः ॥१८॥ [८ पू
१३ उ] हिमवांश्चैव विन्ध्यश्च निषधश्चार्णवावृतः ।
पुष्करिण्यां यथा नागा लक्ष्यन्ते भूतले स्थिताः ॥१९॥ [९
१४] तीव्रः स्वेदश्च दाहश्च भयं चासीत् तदाऽऽवयोः॥२०॥
समाविवेश मोहश्च मूर्छा ग्लानिश्च मे परा । [१०
१५] न दिग् विज्ञायते पूर्वा कौवेरी न च वारुणी । [११पू
याम्या न विदिता चैव भानुरश्मिप्रतापिता ॥२१॥ [N
१६] युगान्ताभिहते काले दह्यमान इवाम्बरे । [११उ
अग्निराशिरिवाभाति भास्करो नीललोहितः । [N
१७] अप्रमेयवपुस्तत्र नातिव्यक्तः प्रकाशते ॥२२॥ [N
यत्नेन महता व्योम्नि मया समभिवीक्षितः । [१२
१८] तुल्यः पृथ्व्याः प्रमाणेन भाति मे भास्करस्तदा ॥२३॥ [१३
जटायुर् मामनापृच्छ्य पपातावाङ्मुखस्तदा ।
१९] तं दृष्ट्वा तूर्णमाकाशादात्मानं सम्प्रयुक्तवान् ॥२४॥ [१४
पक्षाभ्यां स मया गुप्तो जटायुर् न व्यदह्यत ।
२०] पराक्रमन् रश्मिदग्धः परं वायुपथादहम् ॥२५॥ [१५

---

१. भ—०र्णमुत्पत्य ।
२. रा—अ भ च—तु ।
३. भ—† उत्पलैरिव ।
४. रा—‡ सुप्रख्यातैश्च ।
५. अ भ—न कौवेरी न ।
६. ल१ भ—नु ।
७. अ भ च—युगान्ताग्नि० ।
८. कै रा ल१ ब म ल२ श—† इवांबरे ।
९. अ भ च—पृथ्वी० ।
१०. कै—† पुरं ।

अथैक्षं[1] तं निपतितं जनस्थाने जटायुषम् ।
२१] अहं च पतितो विन्ध्ये दग्धपक्षो जडीकृतः[2] ॥२६॥ [१६
पुण्यानि नापि[3] मे सन्ति यत्र मग्नोऽस्मि सागरे । [N
२२] आकाशे वा मृतो नैव विषमे च शिलोच्चये ॥२७॥ [N
राज्याद् विहीनो भ्रात्रा च पक्षाभ्यां विक्रमेण च ।
२३] सर्वथा मर्तुमिच्छामि[4] पतिष्यामि[5] गिरेस्तटात् ॥२८॥ [१७
को हि मे जीवितेनार्थो विपक्षस्याद्य[6] पक्षिणः । [N
२४] परैः सञ्चार्यमाणस्य काष्ठलोष्टसधर्मिणः ॥२९॥ [N

इत्यार्षे[7] रामायणे किष्किन्धाकाण्डे[8] सम्पातिवाक्यं नाम

त्रिपञ्चाशः सर्गः ॥ ५३ ॥

---

१. ल$_1$—अवैक्षं ।
अ भ च—अश्रौषं ।
म—तथैक्षं ।
२. कै रा ल$_1$ ब म ल$_2$ श—
जटाकृते । भ च—जडीकृत (:)
३. अ—† चापि । म—† वापि ।
४. रा—† गन्तुमि० ।
५. भ—निपतिष्यामि ।
६. रा ल$_2$—विपक्षस्याथ ।
७. ल$_2$—इति ।
रा—श्रीरामायणे ।
८. ल$_1$ ब म श—किष्किन्धा० ।
भ च—नास्ति ।

एवमुक्त्वा मुनिश्रेष्ठं प्रारुदं दुःखितो भृशम् । [१ पू

१] विसृजन्नेत्रजं वारि गिरि-प्रस्रवणं यथा ॥१॥ [N

मां स बाष्पमुखं दृष्ट्वा महर्षिः करुणान्वितः । [N

२] ध्यात्वा मुहूर्तं भगवानिदं वचनमब्रवीत् ॥२॥ [१उ

भविष्यतस्तु पक्षौ ते विशेषिततरौ द्विज ।

३] चक्षुषी प्राणवृद्धिश्च विक्रमश्च बलं च ते ॥३॥ [२

पुराणे सुमहत् कार्यं त्वत्कृते हि मया श्रुतम् ।

४] दृष्टं मे तपसा चैव श्रोत्रेण च श्रुतं द्विज ॥४॥ [३

राजा दशरथो नाम कश्चिदिक्ष्वाकुनन्दनः ।

५] तस्य पुत्रो महातेजा रामो नाम भविष्यति ॥५॥ [४

अरण्यं भार्यया सार्धं भ्रात्रा च स गमिष्यति ।

६] कस्मिंश्चिदर्थे धर्मज्ञः पितुर्निर्देशमाचरन् ॥६॥ [५

रावणो नाम रामस्य भार्यामपहरिष्यति ।

७] राक्षसेन्द्रो जनस्थानाद् दुर्जयः सुरदानवैः ॥७॥ [६

सा तु कामैः प्रलुभिता भक्ष्यैस्तैस्तैश्च मैथिली ।

---

१. भ—एवं मुनिश्रेष्ठमहं ।
२. कै रा ल१—‡ विसृजं ।
  व ल२ श—व्यसृजं ।
  म—† वस्रजं ।
३. व म ल२ श भ—गिरिः प्रस्र० ।
  अ च—† गिरिं प्रस्र० ।
४. कै रा ल१, व म ल२ श—
  ‡ चक्षुषा ।
५. कै रा ल१,अ व म ल२ श च—
  † • सुदृश ।
६. म—नास्ति ।
७. रा—‡ च संगमि० ।
  श भ—सह गमि० ।
८. कै—नास्ति ।
९. ल१व—निदेशं पितुराचरन् ।
१०. कै रा—०नाद् दुर्लभैः ।
  अ भ—० नादवध्यः ।
  ल२ श—‡ दुर्जयः ।
११. श—सुरासुरैः ।
१२. अ भ च—‡ प्रतार्यन्ती ।

८] याच्यमाना पिशाचीभि र्दुःखमग्ना न भोक्ष्यते[1] ॥८॥ [७

परमान्नं तु वैदेह्या ज्ञात्वा दास्यति देवराट्[2] ।[3]

९] तदन्नममृतप्रख्यं सुराणामपि दुर्लभम् ॥ ९ ॥ [८

१०उ] अन्नमुद्धृत्य रामाय भूतले निर्वपिष्यति[4] ॥१०॥ [९ उ

यदि जीवति मे[5] भर्ता देवरो वापि लक्ष्मणः ।

११] तिष्ठतः प्रेत्यभावे वा स्यादिदं त्वक्षयं तयोः[6] ॥११[7]॥ [१०

एष्यन्त्यन्वेषकास्तस्या महादूताः[8] प्लवङ्गमाः ।

१२] आख्येया राममहिषी तेभ्यस्ते जनकात्मजा ॥१२॥ [११

सर्वथा चेह तिष्ठ त्वमीदृशः क्व गमिष्यसि ।

१३] एतं कालं प्रतीक्षस्व लप्स्यसे त्वं तनूरुहौ[9] ॥१३॥ [१२

उत्सहे त्वांहमद्यैव[10] प्रीत्या कर्तुं सपक्षकम् ।

१४] इहस्थस्त्वं तु लोकानां महत् कार्यं करिष्यसि ॥१४॥ [१३

तवापि खलु यत् कार्यं तयोर्वा नृपपुत्रयोः ।

१५] ब्राह्मणानां सुराणां च मुनीनां वासवस्य च ॥१५॥ [१४

इच्छाम्यहमपि द्रष्टुं भ्रातरौ रामलक्ष्मणौ ।

१६] चिरं[11] तु जीवितव्यं स्यादिति त्यक्ष्ये कलेवरम् ॥१६ [१५पू

---

१. ब—+ भोक्ष्यति ।

२. कै रा—+ दानवः ।
अ भ च—वासवः ।

३. अ—अतः परमधिकः पाठः—
तदन्नममृतप्रख्यं विज्ञायेन्द्रमथोदनं ।

४. अ—+ अग्रे मु० ; च—अग्रे उ० ।

५. रा अ भ च—भर्ता मे ।

६. कै रा ल१ ब म ल२ श—
तस्य तृप्तये ।

७. अ—अतः परमधिकः पाठः—
तस्यास्त्वस्य तु यच्छ्रेष्ठं ज्ञाता तद्भक्षयिष्यति ।
तेन कालं धृतवती क्षुत्तृष्णापरिवर्जिता ॥

८. अ भ च—रामदूताः ।

९. कै रा ल१ ब म ल२ श भ—
तनूरुहान् ।

१०. कै रा ल१ ब म ल२ श—
चाहमद्यैव ।

११. कै रा ल१ ब म ल२ श—
०व्यं स्यादित्यत्यक्षं ।
अ—
न तु जीवितुमिच्छामि चिरं त्यक्ष्ये ।

एतैश्चान्यैश्च बहुभि र्वाक्यैर्धर्मार्थसंहितैः ।
१७] मां प्रशास्याभ्यनुज्ञाय प्रविवेशाश्रमं मुनिः ॥१७॥ [६३,१
ऋषेश्चाहं वचः श्रुत्वा द्रष्टुकामश्च राघवौ । [N
१८] तथा दुःखैः समाविष्टो न त्यजामि कलेवरम् ॥१८॥ [N
१९ पू] कन्दरांश्चै विसर्पित्वा विचरंश्च शनैः शनैः । [२पू
N] चरणाभ्यां गुहां गत्वा स्थितोऽहमति दुःखितः॥१९॥ [N
१९ उ] सोऽहमद्रिं समारुह्य भवतः प्रतिपालये । [२उ
N] तं च कालं प्रतीक्षामि चिन्तयन्नेवं तन्मनाः ॥२०॥ [N
अद्य त्वेतस्य कालस्य साग्रं वर्षशतं गतम् ।
२०] देशकालप्रतीक्षोऽस्मि हृदि कृत्वा मुनेर्वचः ॥२१॥ [३
सोऽहं तेप्ये तमासाद्य स्वर्गतं तु निशाकरम् ।
२१] मां निर्दहति शोकाग्निः शुष्कं वनमिवानलः ॥२२॥ [४
व्यथिकां मरणे बुद्धिं कृत्वा भूयो जिजीविषुः । [५ पू
२२] श्रुतैस्तैस्तैः प्रशमयन्नग्निं वारिघटैरिव ॥ २३ ॥
N] आस्थां तु सुदृढां बद्धा मुनेर्वाक्यमनुस्मरन् । [N
२३ उ] धृत्या निहन्मि तं दुःखं तमो दीपं इवं ज्वलन् ॥२४॥

---

१. अ भ च—† प्रशस्या० ।
२. ल$_{1}$ म ला श—† पितुः ।
३. अ श भ च—दुःखसमाविष्टो ।
रा ब म ल$_{2}$—दुःखे समा० ।
ल—‡ दुखे समाविष्टे ।
४. भ—कंदराश्च ।
५. कै रा ल$_{1}$ अ ब म श च—
० हमपि ।
६. भ—अहमद्रिं ।
७. कै ल$_{2}$ श—चिंतयन्नेवं ।
८. ल$_{1}$—पुनर्वचः ।
९. अ च—तस्थौ तमा० ।
भ—तत्स्थानमा० ।
१०. म—‡ पिजीविषुः ।
११. अ भ च—आशां ।
१२. कै रा ल$_{1}$ ब म ल$_{2}$ श—स्मृत्वा ।
१३. अ च—‡ तं दुःखं ।
१४. कै रा ल$_{1}$ अ ब म ल$_{2}$ श च—
† दीर्घमिव ।



२४पू ] भक्ष्यैस्तु विविधैर्वन्यैर्मां पोषयाति पुत्रकः ॥२५॥ [N

इदमन्यद्भुतं सर्वे पश्यन्तु हरयो मम ।

N] इमौ पक्षौ मद्दत्तौ मे बलं चैव यथा पुरा ॥२६॥ [N

पुनर्युवानमात्मानं पश्याम्यौदार्यवत्तरम् ।

N] मनसा चैव जानामि मनश्चाख्याति हीव मे ॥२७॥ [N

एष पश्यामि वैदेहीमशोकवनिकागताम् ।

N] स्वस्ति वोऽस्तु गमिष्यामि कृतार्थाः सन्तु वानराः ॥२८ [N

ततस्ते वानरा हृष्टास्तदद्भुतमवेक्ष्य वै ।

N] यौवनाद् गृध्रराजस्य कृतं कार्यमित्यब्रुवन् ॥२९॥ [N

ततस्ते वचनं श्रुत्वा सर्वे संहृष्टमानसाः ।

६२,२४] बभूवुर् हरिशार्दूला विशोका उदयोन्मुखाः ॥३०॥ [२४

अथ पवनसमानविक्रमास्ते

प्लवगवराः परिपूर्णमानसाः ।

त्वरितमभिमुखा ययुः दिशं [ ? ]

२५] जनकसुतापरिमार्गणोत्सुकाः ॥३१॥ [२५

इत्यार्षे रामायणे किष्किन्धाकाण्डे संपातिपक्षोद्गमनो नाम

चतुष्पञ्चाशः सर्गः ॥ ५४ ॥

---

१. कै रा अ म ल२ श च—
†०भैरन्यै० ।
ल१ ब—‡०भैरद्यै० ।

२. ल२—इदमस्यद्भुतं ।

३. कै ल१ अ म ल२ श भ च—
०यमिति ब्रु० ।

४. अ—०कास्युदयो० ।
म च—०कास्युदयो० ।

५. अ च—० र्णमानसाश्च ।

६. अ भ च—दिशं ययुः ।

७. अ च—० णोत्सुकाश्च ।

८. रा—श्रीरामायणे ।
अ—इति श्री ।

९. ल१ ब म ल२ श—किष्किन्दा० ।
भ—नास्ति ।

१०. ल१—संपातिपक्षो नाम ।
म—० पक्षोद्गमे ।
अ श च—० पक्षोद्गमौ ।

एवं कथयतस्तस्य पतगस्य महात्मनः ।
१] उत्पेततुस्ततः पक्षौ वानराणां प्रपश्यताम् ॥१॥ [८
स दृष्ट्वा स्वां तनुं पक्षैरुद्गतैररुणच्छदैः ।
२] प्रहर्षमतुलं लेभे वानरांश्चेदमब्रवीत् ॥२॥ [९
निशाकरऋषेस्तस्य प्रभावात् सुमहात्मनः ।
८] समुत्थिताविमौ पक्षौ सर्वे पश्यत वानराः ॥३॥ [१०
इत्युक्त्वा तान् हरीन् सर्वान् संपातिः पतगेश्वरः ।
९] उत्पपात गिरेः शृङ्गाज् जिज्ञासुरगमद्गतिम् ॥४॥ [१३
ततस्ते वानराः सर्वे विस्मयोत्फुल्ललोचनाः ।
१०] पर्वताग्रमुदैक्षन्त संपातिं यत्र संस्थितः ॥५॥ [N
शिखरस्थस्तु संपातिः पुनस्तानब्रवीद्वचः ।
११] हर्षसंपन्नया वाचा स्वरसंपत्प्रयुक्तया ॥६॥ [N
निशाकरस्यर्षेः सर्वे यूयं पश्यत वानराः ।
१२] सम्यक्चीर्णस्य तपसः प्रभावमिह यादृशम् ॥७॥ [N
आदित्यरश्मिभिर्दग्धौ पक्षौ तु गमनाक्षमौ । [N
१३] संजातौ तस्य सत्येन खगेन्द्र क्षणमक्षमौ ॥ ८॥

---

१. भ—०रुद्गतैस्तरुण० ।
२. कै रा अ म ल$_2$ श भ च—०रस्यर्षेस्त० ।
३. श—उत्पादस्य गिरेः शृङ्गं ।
४. कै रा ल$_1$ अ ब ल$_2$ श भ च—‡ चिह्नितः ।
५. म—०संपत्तियुक्तया ।
६. ल$_1$ ब—निशाकरऋषेः ।
७. रा—०स्तथौ ।
८. म—गगनाक्षमौ ।
९. कदाचिन्मूलतः "गगने गमनक्षमौ" पाठः स्यात् ।
१०. ल$_2$—नास्ति ।

यौवने वर्तमानस्य यथासीन्[1] मे पराक्रमः ।
१४] तदेवाद्यावगच्छामि बलं पौराणमात्मनः ॥९॥ [११
सर्वथा क्रियतां यत्नः सीतां द्रक्ष्यथ वानराः ।
१५] पक्षलाभो मम यथा प्रत्यक्षं सन्निदर्शनम्[2] ॥१०॥ [१२
क्रोशमात्रमितो गत्वा विन्ध्यादस्मान्नगोत्तमात् ।
१६] शतयोजनविस्तीर्णं लङ्घयध्वं महोदधिम् ॥११॥ [N
तत्र त्रिकूटशिखरे निविष्टं रावणालयम् ।
१७] लङ्कां द्रक्ष्यथ दुर्धर्षां निहिता यत्र मैथिली ॥१२॥ [N
रक्ष्यमाणा[3] सुभीमाभी[4] राक्षसीभिर्यशस्विनी[5] ।
१८] तर्ज्यमाना[6] च बहुशस्तस्य रौद्रस्य शासनात् ॥ [7]१३॥ [N
कृतार्थाश्च प्रतीताश्च तां च दृष्ट्वा यशस्विनीम् ।[7]
१९] धर्षयित्वा ततो लङ्कां पुनरेष्यथ वानराः ॥१४॥ [N
न खल्वस्ति बलं किञ्चिन् मम ज्ञातुमनागतम् ।
२०] अनुभावात् तु जानामि महर्षे भावितात्मनः ॥१५॥ [N
हिमवन्तं गमिष्यामि श्वशुरं श्वशुरं गिरिम्[8] ।
२१] तत्र मे दयिता भार्या ज्ञातयश्च कृतालयाः[9] ॥१६॥ [N
विशालशिखरैः[10] प्रांशुं(? र् )मलयादविदूरतः[11] ।
२२] वानरा गम्यतामेष समुद्रस्योत्तरे गिरिः ॥१७॥ [N

---

१. भ—यथाशीघ्रं० ।
२. भ च—०क्षस्तन्निदर्शं० ।
३. रा अ ल$_2$ श भ च—रक्ष्यमाणां ।
४. भ च—सुघोराभी ।
५. रा अ ल$_2$ श भ च—०स्विनीं ।
६. रा अ श भ च—०मानां ।
७. ल$_2$—नास्ति ।
८. ल$_1$ ब म ल$_2$ श—†गुरुं ।
९. अ भ च—तनयश्च कृतालयः ।
१०. कै रा ल$_1$ अ ब ल$_2$ श च—†०शिखरं ।
११. अ भ च—प्रांशुं ।
कै रा ब म श—†प्रांशुं ।

यः शक्तो योजनशतं निरालम्बे विहायसि ।
२३] क्रमितुं सागरं शूरः स सर्वैर्विनियुज्यताम् ॥१८॥ [N
इति तस्मिन् ब्रुवत्येव विहङ्गप्रवरे वचः ।
६२,१] उवाच जाम्बवान् वाक्यं तत्कालसदृशं हरिः ॥ [3] १९॥ [N
सर्वं साधु च युक्तं च भवानर्थं च भाषते ।।
२] वृद्धभावानुरूपं च हितं रघुकुलस्य च ॥ [3] २०॥ [N
अस्माकं महती चिन्ता कथं सागरलङ्घनम् ।
३] भवेदिति महासत्त्व तेन स्मो व्याकुलीकृताः ॥२१॥ [N
तत्र वै मतिसाहाय्यं भवान् नो दातुमर्हति ।
४] परे पारे समुद्रस्य प्लवने पततांवर ॥२२॥ [N
५ उ] श्रुत्वैतज्जाम्बवद्वाक्यं सम्पातिः प्राब्रवीद् वचः ।
तदैव स दुरात्मा वै रावणः स्याद्धतो मया ।
७] यदि पक्षौ न दग्धौ मे भवेतां सूर्यतेजसा ॥२३॥ [N
८पू] सममासाद्य क्रुद्धस्य सम्पातं राक्षसाधमः ।
N] लङ्कां च त्वरितोऽभ्यागात् ससीतः सहजीवितः॥ २४॥ [N
८ उ] न जीवेदिति मे बुद्धिस्तत्त्वमेतद् ब्रवीमि वः॥२५॥ [N
सोऽहं वृद्धः कपिश्रेष्ठास्तेनाशक्तः पराक्रमे ।
९] लङ्कां नेतुं न शक्या(ऽक्ष्या)मि स्वयं वः प्लवगोत्तमाः ॥२६॥ [N
असौ ममात्मजो दृप्तः सुपार्श्वो नाम वानराः ।
१०] स हि गन्तुं समर्थस्तां लङ्कां रावणपालिताम् ॥२७॥ [N

१. कै च—शूराः ।
२. कै—॰र्विनियोज्यतां ।
३. च—नास्ति ।
४. ल$_{2}$—तत्रैव ।
५. कै ल$_{1}$ ब—।दातुमर्हसि ।
६. कै अ ब श च—सुदुरात्मा ।
७. रा—ममाप्यद्य ।
८. भ—नास्ति ।
९. ल$_{2}$—॰स्तत्त्वतस्तद्ब्रवीमि ।
१०. रा ल$_{1}$ ब म ल$_{2}$ श—परिक्रमे ।
११. ल$_{1}$ ब म ल$_{2}$ श—वा ।

इत्युक्त्वा पतगेन्द्रोऽसौ स्वपुत्रं मनसास्मरत् ।
११] अथ प्रादुरभूत् तत्र दारुणः सुमहाद्भुतः ॥२८॥ [N
पक्षावाक्षिप्य विक्षिप्य तस्य पुत्रः प्रवर्तितः ।
१२] सपुष्पाङ्कुरशाखाग्राः पतन्तीव महीरुहाः ॥२९॥ [N
तत्र प्रमाणाभ्यधिको गृध्रः पक्षी महाबलः ।
१३] महानचलसङ्काशो वानरानभ्यवर्तत ॥३०॥ [N
ततः सम्पातिपुत्रस्तु सुपार्श्वः समुपागतः ।
१४] उवाच पितरं पुत्रः किमर्थं संस्मृतोऽस्म्यहम् ॥३१॥ [N
अस्मै पुत्रस्य सम्पातिः कथयामास विस्तरम् ।
१५] कथयित्वा तु तत्सर्वं सुपार्श्वं समचोदयत् ॥३२॥ [N
सं तमर्थं पितुः श्रुत्वा सुपार्श्वश्चेदमब्रवीत् ।
१६] त्यज्यतां मानसी चिन्ता तरिष्यामि महार्णवम् ॥३३॥ [N
बलं प्रमाणं तेजश्च परैरनुपमं मम ।
१७] तेजो वेगः[12] प्रभावश्च मय्येव ध्रुवमव्ययम् ॥३४॥ [N
शिखरात् तु महेन्द्रस्य पर्वतस्य प्लवङ्गमाः ।
१८] वर्तते योजनशते लङ्का सा यत्र रावणः ॥३५॥ [N
शीघ्रमारुह्यतां पृष्ठमिदानीं प्रापयाम्यहम् ।
१९] वेगेन च गमिष्यामि परं पारं महोदधेः ॥३६॥ [N

---

१. कै रा ल१ ब म ल२ श च—०सा स्मरन् ।
२. श—+प्रधावत: ।
३. कै—सुपुष्पां ।
४. कै रा ल१ अ ब म ल२ श च—गृध्रपक्षी ।
५. न—स्वपार्श्व: ।
६. अ भ च—+०स्मृतं ह्यहं ।
७. अ भ च—अथ ।
८. अ भ च—च ।
९. ल२—‡ समचोदिशत् ।
१०. अ भ च—तमर्थं स ।
११. अ भ च—श्चौङ्कव० ।
१२. रा—वेगाः प्रभा० ।
ल२—वेगप्रभा० ।

अथोवाच महातेजा गृध्रराजमिदं वचः ।
२०] अङ्गदः प्रश्रययुतं पौरुषोद्योगसंयुतम् ॥३७॥ [N
सदृशं चानुरूपं च बलं वै भाषते भवान् ।
२१] कृतमेतावताऽस्माकं यत् प्रवृत्तिरुपागता ॥३८॥ [N
वीर्यविक्रमसम्पन्नाः सर्वे[1] सन्ति च[2] वानराः ।
२२] उत्प्लुत्य[3] हि महेन्द्रं वै गिरिं गच्छेयुरर्णवम् ॥३९॥ N
विश्राम्य[4] त्वं महातेजाः सह पित्रा महाबलः ।
२३] कृताभिगमने बुद्धिर्मया रावणसद्मनि ॥४०॥ [N
ते तद्वचनमाज्ञाय प्रीतिसंहृष्टमानसाः ।[5]
N] बभूवुर् हरिशार्दूला विष्णुरुद्रपराक्रमाः ॥४१॥ [N
एवमुक्त्वा तु सम्पातिस्तान् सर्वान् हरियूथपान् ।
६३,२४] जगामाकाशमाविश्य सुपर्ण इव[6] वेगितः[7] ॥४२॥[8] [N
प्रलीनं तं खगं दृष्ट्वा प्रहृष्टो वानरर्षभः ।
२५] इदं हृष्टतरो वाक्यं वालिपुत्रोऽङ्गदोऽब्रवीत् ॥४३॥[8] N
दत्त्वा प्रवृत्तिं सीताया जीवयित्वा च वानरान् ।[9]
२६] यातः स्वनिलयं पक्षी सम्पातिर् हृष्टमानसः ॥४४॥ [N
तदागच्छत गच्छामो दक्षिणस्योदधेर्गिरिम् ।
२७] समर्थयामहे तत्र लङ्घनार्थं महोदधेः ॥४५॥ [N

---

१. कै रा ब भ—मधुरं वाक्यमब्रवीत् । अ च—मधुरं वाक्यमुत्तमं ।
२. भ च—‡ बहव सन्ति ।
३. भ—उत्पाद्य ।
४. भ—विश्रम ।
५. कै रा ल१ ब म ल२ श—नास्ति ।
६. रा—† सुपर्णमिव ।
७. कै रा ल१ ब म ल२ श—वेगवान् ।
८. कै रा ल१ ब म ल२ श—नास्ति ।
९. कै रा ल१ ब म ल२ श—नास्ति ।

ततस्तथेत्येव तमूचुरङ्गदं
प्रहर्षयुक्ता हरयो महाबलाः ।
स चावृ[1]तो ज्ञातिबलेन सत्त्ववान्
२८] जगाम [2]तं गृद्धनिवेदितं[2] गिरिम् ॥४६॥ | ४

इत्यार्षे रामाय[3]णे किष्किन्धाका[4]ण्डे संपा[5]तिगमनं नाम
पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

———

१. कै रा अ—समावृतो ।
२. म रा—गृध्रेण निवेदितं ।
३. रा—श्रीरामायणे ।
४. ङ६ व म रा—किष्किन्दा० ।
भ च—नास्ति ।
५. कै रा अ भ च—
०तिपक्षलाभो नाम ।

आख्याते गृध्रराजेन समुत्प्लुत्य[1] प्लवङ्गमाः ।
१] सङ्गताः प्रीतिमन्तश्च विनेदुः सिंहसङ्घवत्[2] ॥ १ ॥ [१
सम्पातेर्वचनाच्चे[3] तु सर्वे वानरपुङ्गवाः ।
N] हृष्टाः सागरमाजग्मुः सीतादर्शनकाङ्क्षिणः ॥२॥ [२
रात्रिभिर्दिवसैश्चैव हरयस्ते समुत्सुकाः ।
N] उषित्वैकादशीं[5] रात्रिं ददृशुर् महदर्णवम्[6] ॥[7]३॥ [N
सत्त्वैर्महद्भिः क्रीडद्भिर् बहुभिर् बहुधा जले ।
४] व्यादितास्यैर्[8] महावीर्यैरुन्नमद्भिः[9] समावृतम्[10] ॥४॥ [५
प्रसुप्तमिव चान्यत्र क्रीडन्तमिव चान्यतः ।
५] क्वचित् पर्वतमात्रांश्च जलराशीन् समुत्क्षिपन् ॥५॥ [६
संकुलं दानवेन्द्रैश्च पातालतलवासिभिः ।
६] रोमहर्षकरं दृष्ट्वा विनेदुः कपिकुञ्जराः ॥६॥ [७
आकाशमिव दुष्पारं[11] सागरं दृश्यते[12] ततः ।
८] विषेदुर्[13] वानराः सर्वे कथं कार्यमिति[14] ब्रुवन् ॥७॥ [८

---

१. भ—समुत्पत्य ।
२. कै भ—† ०संगवत् ।
३. कै रा ब म भ—वचनान्ते ।
४. ल₂—०रमापेतुः ।
५. कै रा म ल₂ श—‡ ०त्वैकादशां ।
६. कै रा ब—प्रतिबिंबमिवांबरं ।
अ भ च—आसेदुर्वरुणालयं ।
७. अतः परमधिकः पाठः—
अ भ च—
दक्षिणस्य समुद्रस्य समासाद्योत्तरां दिशं ।
संनिवेशं ततश्चक्रुर्हरिवीरा हरीश्वराः ॥
अ च—
ते समुद्रं समासाद्य प्रतिबिंबमिवांबरम् ।
भ—
ते समुद्रं समासाद्य ददृशुर्भीमविक्रमाः ।
कृष्णं लोकस्य महतः प्रतिबिंबमिवापरं ॥
८. कै म ल₂—† व्याधितास्यैर् ।
९. श—०यैरूर्मिभिश्च ।
१०. रा—समं वृतं ।
११. ल₁ म—दुष्प्रापं ।
१२. ल₁ ब म श—ददृशुस्ततः ।
१३. कै—निषेदुर् ।
१४. ल₂ श—०र्यमित्यब्रुवन् ।

विषण्णां[1] वाहिनीं[2] दृष्ट्वा समुद्रस्य निरीक्षणात् ।
९] आश्वासयामास हरीनङ्गदो वानरर्षभः ॥८॥[3] [३
N] हरिवृद्धैः[4] समागम्य मन्त्रकालममन्यत[5] ॥९॥ [१३ उ
स वानरैः परिवृतो युवराजो बभौ तदा ।[6] [N
N] मरुद्गणैः परिवृतो वृत्रशत्रुरिवाम्बरे ॥[6]१०॥ [N
सा वानराणां तु चमूः परिवार्याङ्गदं बभौ ।[7]
१३] वासवं परिवार्येव[8] वाहिनी मरुतां यथा ॥११॥ [१४
१५पू] तान् विषादेन महता सहसा समभिप्लुतान् । [१०पू
N] ततस्तान् हरिवृद्धांश्च तच्च सैन्यमरिन्दमः ।
१५ उ] अनुमान्याङ्गदः श्रीमान् वाक्यमर्थवदब्रवीत्[9] ॥१२॥ [१६
न विषादे मनः कार्यं विषादो विषमुत्तमम् ।
१८] खादयत्यपि तं[10]जज्ञं तु बालं क्रुद्ध इवोरगः ॥१३॥ [११
यो विषादं प्रसंहते[11] विषमे प्रत्युपस्थिते ।
१७] तेजसा तस्य हीनस्य पुरुषार्थो न सिद्ध्यति ॥१४॥ [१२
२८पू] क इदानीं महातेजा लङ्घयिष्यति सागरम् । [१७पू
कोऽन्यस्तां वानरीं सेनां शक्तः स्तम्भयितुं भवेत् ॥१५॥

---

१. कै—†निषण्णां ।
२. श—†वारिधिं ।
३. ळ$_{2}$—नास्ति ।
४. श—†०वृद्धं ।
५. ळ$_{1}$ म श—सत्वका० ।
६. ळ$_{2}$—नास्ति ।
कै रा भ च—१२, ,१० ११, इत्येवंक्रमः पाठः ।
७. ळ$_{2}$—नास्ति । म—कोष्ठकान्तर्गतौ द्वादशश्लोकौ न स्तः ।
८. कै—०वं परिहार्येव ।
रा—वासवार्थे च ।
९. कै रा अ भ च—अतः परमधिकः पाठः—
अब्रवीदङ्गदः श्रीमान् वानरान् वानरर्षभः ।
१०. रा भ—खादयत्यकृतज्ञं ।
अ च—खादयत्यकृतज्ञं ।
११. ळ$_{1}$ म ळ$_{2}$ श—विषहते ।

१४] अङ्गदाद् द्विविदान् मैन्दादन्यत्र च हनूमतः । [१५
१० उ] भयं त्यजत मा भैष्ट कृतकृत्या वयं दृढम् ॥१६॥ [N
निशां तावदिमां सर्वे स्वपध्वं विगतज्वराः ।
११] श्वः प्रभाते गमिष्यामि यत्नः श्रेयो भविष्यति ॥१७॥ [N
अथ रात्र्यां व्यतीतायामङ्गदो हरिसत्तमः । [१३पू
१२] सह तैर् वानरैः सर्वैर् विषसाद गिरेस्तटे । [N
३०पू ] कः करिष्यति सुग्रीवं सत्यसन्धमरिन्दमम् ॥१८॥ [१७ उ
अङ्गदस्य वचः श्रुत्वा न कश्चित् किञ्चिदब्रवीत् ।
२६] स्तिमितेवाभवत् त्रस्ता तत्र सा हरिवाहिनी ॥१९॥ [२२
२७ उ] पुनरेवाब्रवीत् त्रस्तांस्तान् हरीन् हरिसत्तमः । [१३पू
३६पू ] ब्रुवध्वं यस्य या शक्तिर्गमने वः प्लवङ्गमाः ॥२०॥ [२४ उ
क इमां वाहिनीं सर्वां समवेतां वनौकसाम् ।
२९] मोक्षयिष्यति सन्देहात् सुग्रीवस्य महात्मनः ॥२१॥ [१८
कस्य प्रसादाद् दारांश्च धनानि च गृहाणि च ।
२३] इतो निवृत्ताः पश्येम सिद्धार्थाः सुखिनो वयम् ॥२२॥ [१९
कस्य प्रसादाद् रामं च लक्ष्मणं च महाबलम् ।
२४] अभिगच्छेम संहृष्टाः सुग्रीवं च महौजसम् ॥२३॥ [२०
३० उ] कः करिष्यति रामस्य प्रियमात्महिते रतः ।

---

१. कै रा $ल_1$ ब म $ल_2$—द्विविधा०।
२. अ—यत्र।
३. ब भ—निषसाद।
४. कै रा—पुनरेवाभवत्।
अ भ च—पुनरेवाङ्गदः प्राह।
५. म—तस्य।
६. अ—†लक्ष्मणस्य।
७. रा अ भ च—महारथं।
८. $ल_1$—महौजसः। म $ल_2$ रा—महाबलं।

N] करिष्यंति च कल्याणं कस्तरिष्यति सागरम् ॥२४॥ [N
गन्तव्या नगरी लङ्का मार्गितुं जनकात्मजाम्।
N] लंङ्घनीयश्च वेगेन सागरः शतयोजनः ॥२५॥ [N
सर्वे हि प्लवगश्रेष्ठा भवन्तो दृढविक्रमाः ।
३१] व्यपदेशेषु विख्याताः प्रजाभिश्चापि सत्कृताः ॥२६॥ [N
३२पू] न हि वो गमने सङ्गः कदाचित् कस्यचित् क्वचित्। [२४पू
३४पू] दृष्टपूर्वो हि यो लोके श्रुतपूर्वोऽपि वा भवेत् ॥२७॥ [N
यदि कश्चित् समर्थो हि सागरस्यास्ति लङ्घने ।
२५] स ब्रवीतु ददात्वद्य पुण्यामभयदक्षिणाम् ॥२८॥ [२१
३४ उ] को वः कियद् विक्रमते हरिश्रेष्ठो महाबलः ।
२२ उ] हृष्टः स क्षिप्रमाख्यातु यस्य या परमा गतिः ॥२९॥ [N
वासवस्य सवज्रस्य ब्रह्मणो वा स्वयम्भुवः ।
२०] विक्रम्य सहसा हस्तादमृतं स इहानयेत् ॥३०॥ [N
०१पू] चन्द्रादपि हरेल्लक्ष्मीं तेजो वा रविमण्डलात्।
२२पू] विक्रमी य इतो लङ्कां गत्वा तु पुनराव्रजेत् ॥३१॥ [N
३६ उ] अथाङ्गदवचः श्रुत्वा ते वै शाखामृगर्षभाः ।

---

१. अ ल२ भ च—कः करिष्यति।
२. कै—कर्तव्या।
३. भ—क्रांतव्यश्चैव।
४. श—योगेन।
५. रा—भवन्ति।
६. कै ल१ ब म ल२ श—व्याख्याताः
अ च—चाख्याताः।
भ—च ख्याताः।
७. भ—पूजाभि०।
८. अ—भंगः।
९. कै ल१ ल२ श भ च—वो।
१०. रा—कृतपूर्वो हि। अ—नो।
११. म ल२ श—०स्ति च—हवः।
१२. कै—०रस्येव। रा—०रस्य ह।
म ल२—०रस्यास्य।
१३. रा—वा।
१४. कै रा अ भ च—कियन्तं।
१५. च—विक्रमं।
१६. व—०मायातु।
१७. रा—न स हानयेत्।
१८. कै रा—विक्रमो। अ—विक्रम्य।
ल१—विक्रमे।

N] स्वं स्वं गतिसं[1]मुत्साहमूचुस्ते तु समाहिताः ॥३२॥ [६९,१

गजो गवाक्षः शरभ[2] ऋषभो गन्धमादनः ।

४०] मैन्दश्च च द्विविद[3]श्चैव सुषेणो जाम्बवान् नलः ॥३३॥ [२

अभाषत गजस्तत्र पुप्लुवे दशयोजनम् ।

४१] गवाक्षो योजनान्याह प्लवेयं द्विगुणान्यहम् ॥३४॥ [३

शरभो वानरस्तत्र वानरांस्तानुवाच ह ।

४२] अहं त्रिंशद् गमिष्यामि योजनानां प्लवङ्गमाः ॥[4]३५॥ [४

अथाभ्रशिखराकार ऋषभ[5]प्रतिमो गतौ ।[6] [N

४३] ऋषभो वानरश्रेष्ठो वानरांस्तानुवाच ह ।

चत्वारिंशद् गमिष्यामि योजनानां न संशयः ॥३६॥[7] [५

४४] वानरस्तु महातेजा[8]स् त्वब्रवीद् गन्धमादनः ।

योजनानां गमिष्यामि पञ्चाशदिति मे मतिः ॥३७॥ [६

४५] मैन्दो हि वानरस्तत्र वानरांस्तानुवाच ह ।

योजनानां तु वै षष्टिमहं प्लवितुमुत्सहे ॥३८॥ [७

४६] ततस्तत्र महातेजा द्विविदः[9] प्रत्युवाच ह ।

४७पू] गमिष्यामि न सन्देहः सप्ततिं योजनान्यहम् ॥३९॥ [८

N] सुषेणश्च हरिश्रेष्ठः सत्त्ववान् बलवानपि ।

N] अशीतिं प्रतिजानीते योजनानां पराक्रमम् ॥[10]४०॥ [९

४८पू] स मारुतसमो वेगे[11] धार्तराष्ट्रसमो जवे । [N

---

१. रा—गतिं समु० ।
व—गतिसमुत्साहमूचुस्तं ।
२. कै रा $ल_1$ ब म अ $ल_2$ श च—सरभ । भ—+ शरभो ।
३. कै रा $ल_1$ ब म $ल_2$—द्विविध० ।
४. म—नास्ति ।
५. कै अ—+ ऋषभोप्रतिमो ।
६. $ल_2$—नास्ति ।
७. म $ल_2$—नास्ति ।
८. भ—०तेजा अब्र० ।
९. कै रा $ल_1$ ब म $ल_2$—द्विविधः ।
१०. $ल_1$—नास्ति ।
११. कै रा अ भ च—वीर्ये ।

N] जाम्बवांस्तु महाप्राज्ञो वृद्धः परमसंमतः ॥४१॥
वानराणां वचः श्रुत्वा सागरप्लवनं प्रति । [१०
N] तान् सर्वान् वानरश्रेष्ठानिदं वचनमब्रवीत् ॥४२॥ [N
पूर्वमस्माकमप्यासीत् कश्चिद् गतिपराक्रमः ।
N] ते वयं वृद्धभावं हि अनुप्राप्ताः स्म (ः) सांप्रतम् ॥४३॥ [११
जराशिथिलतां प्राप्ता मन्ददृष्टिपराक्रमाः ।
N] स्मराम्यजातं गरुडममृतस्य च मन्थनम् ॥४४॥ [N
देवासुरविमर्दाश्च दृष्टा मे बहवः पुरा । [N
N] किंतु नैवंगतं शक्यमिदं कार्यमुपेक्षितुम् ॥४५॥
यदयं कपिराजश्च रामश्च कृतनिश्चयः । [१२
N] सांप्रतं बलमस्माकं योग्यं गतिपराक्रमम् ॥४६॥ [१३पू
तं पुरस्कृत्य वक्ष्यामि नैव किंचिन्मृषा वदे ।
N] अहमस्य समुद्रस्य यास्यामि प्लवनं गतः ॥४७॥ [N
५६ उ] दशोनं योजनशतं नैवत्येव न संशयः । [१३
५१ उ] तांश्च सर्वान् हरिवरो जाम्बवाननुमान्य वै ॥४८॥ [१४पूउ
५२पू] उवाच हरिमुख्यानां संनिधौ वचनं महत् । [N
५३पू] स खल्वेतावदेवासीद् गमने मे पराक्रमः ॥४९॥ [१४ उ

---

१. रा ल१ अ ब म ल२ श—०भावा ।
२. श—प्राप्तो ।
३. श—०ष्टिपराक्रमः ।
४. ल२ भ—स्मरामि जातं ।
५. भ—नैवंगते
६. अ भ च—कृतनिश्चयौ ।
७. श—योगि ।
८. रा म च—नहि ।
९. भ—प्लवने ।
१०. कै रा भ च—वृतः ।
अ—धृतः ।
११. रा ल१ म ल२ श—नवत्येवं ।
ब—नवतिं च ।
१२. अ भ च—हरिवरान् ।
१३. रा—वचनं संनिधौ ।
१४. कै रा ब भ च—पितुः ।
१५. रा—० वदेवास्ते ।

५२ उ] तारुण्ये हि बलं वीर्यं यच्चासीद् विक्रमो मम ।
५३ उ] यत् कृतं यौवनस्थेन मया तच्छ्रोतुमर्हथ ॥५०॥ [N
सर्वस्य वृद्धस्य बलं पौराणं यौवने गते ।
N] आचक्षाणस्य बहुधा हास्यं भवति वानराः ॥५१॥ [N
किंतु वक्ष्याम्यहं वीर्यमात्मनो यौवनोदये । [N
सुपर्णेन मया चैव बलियज्ञे सनातनः ॥५२॥
५४] विक्रमांस्त्रीन् क्रमन् विष्णुस्त्रिः प्रदक्षिणमावृतः । [१५
त्रिविक्रमेण या क्रान्ता सशैलवनकानना ॥५३॥ [N
२,३१] त्रिसप्तकृत्वः पृथिवी परिक्रान्ता प्रदक्षिणम् । [६६,३२
N] गत्वा प्राप्य च कैलासं गच्छामि विबुधालयम् ॥५४॥[N
५५पू] बालभावे तदासीन्मे बलमप्रतिमं परैः । [१६ उ
N] पशूंस्तांश्च जिघांसु वै वचनमब्रवीत् तदा ॥"५५॥ [N
दैत्यः पर्वतहस्तस्तु न भविष्यत्यथ मत्क्षुधा ।
N] इत्युक्त्वा पर्वतं दोर्भ्यां चिक्षेपासुरनन्दनः ॥५६॥ [N

---

१. रा श—यश्चा० ।
२. अ—यथा ।
३. म श—बलमाचक्षाणमावृतः ।
४. म रा—त्रुटितः पाठः ।
५. कै रा ल१ ब म ल२ श—यौवनादयं ।
६. अ भ च—सुषेणेन ।
७. अ—मयात । भ—था तात । च—मया नातः ।
८. अ ब भ च—त्रिः सप्तकृत्वः । म—त्रिसप्तकृत्वा ।
९. अ—अतः परमधिकः पाठः—
यदा चौषध्योस्माभिः संचिता देवशासनात्
निष्पन्नममृतं ताभ्यस्तदासीन्वा (न्मो ?)
महद्बलः (लम् ?)
उदया……चाहमस्तं गिरिवरोत्तमं ।
तं तु प्राप्य नु गच्छामि कैलासं विबुधालयं ।
१०. कै रा ल१ ब म ल२ श—तदा स्यान्मे ।
११. अ च—
पशूंस्तानजिघांसु च वैचेन्द्रानब्रवीत्तदा ।
भ—
वसूंस्तान्मा निघांसुश्च वस्विन्द्रानब्रवीत्तदा
१२. अ—भविष्यति मत्क्षुधा ।

तदाघातेन खेदात् तु पर्वतो जानुना धृतः ।

N] तेन भग्नश्च मे जानुः खर्जः शिथिलविक्रमः ॥५७॥ [N

५५ उ] स इदानीमहं वृद्धः प्लवने मन्दविक्रमः । [१६पू

५६पू] सांप्रतं प्लवने शक्तिं नवतिं प्रवितर्कये ॥५८॥ [N

५७पू] नैतावता च संसिद्धिं गन्तुं कार्यमिदं भवेत् । [१७

N] स कदाचिद् गतोऽहं तु यज्ञे तेषां महात्मनाम् ॥५९॥ [N

ऋषीणामग्निवपुषां कैलासस्य समीपतः ।

N] ततोऽहमभिवाद्यैव मुनीन् ज्वलनतेजसः ॥६०॥ [N

N] बलिपुत्रं च हतवान् क्रुद्धं मृत्युमिवापरम् ।

५७उ] अथोक्तवति तस्मिंस्तु हरीणां प्रवरे वचः ॥६१॥ [N

नलश्चाप्याह तेजस्वी जातान् परमदुःखितान् ।

N] नवतिं चैव सप्ताहं गमिष्यामि प्लवङ्गमाः ॥६२॥ [N

तत्र पर्वतसङ्काशो हनूमानञ्जनासुतः ।

५८] न तत्र सोऽब्रवीत् किञ्चिद् बलं पौरुषमात्मनः ॥६३॥ [N

अथोत्तरमुदारं च प्रत्युवाचेदमङ्गदः ।

५९] अनुमान्य महाप्राज्ञं जाम्बवन्तं महाकपिम् ॥६४॥ [१८

अहमेतद् गमिष्यामि योजनानां शतं ध्रुवम् ।

६०] निवर्तने तु मे बुद्धिर् निश्चयं नाधिगच्छति ॥६५॥ [१९

---

१. कै रा च—तदा एतेन ।
अ—तदापातेन । भ—तदायातेन ।
२. रा—धृत: ।
३. अ—लग्नश्च ।
४. अ—वत: ।
५. रा—इदानीं महावृद्धः ।
६. ल₁ व—तां सिद्धिं ।
म ल₂—गता सिद्धिं ।
७. ल₁—ज्वलन० ।
व म श—ज्वलिततेजसः ।
भ—० नतेजसं ।
८. कै—बलिं पुत्रं ।
९. च—नास्ति ।
१०. कै रा ल₁ म ल₂ श अ भ च सप्ताधि ।
११. कै रा ल₁ व म श, अ भ च—हनूमानञ्जनीसुत: ।
१२. म—जंबवंतं ।

बाल्यादक्लिष्टभावाच्च गुरुदोषा[1]विचारणात् ।
६१] नि[2]त्यं च लालितस्ने[2]हात् सच्छास्त्राग्रा[3]हितः पुरा ॥६६॥ [N
६२पू] तमुवाच हरिश्रेष्ठो जाम्बवान् वाक्यकोविदः ।
N] ज्ञायते गमने बुद्धिस्तव हर्यक्षपुङ्गव ॥६७॥ [२०
कामं शतं वा भूयो वा गत्वा प्रतिनिवर्तितुम् ।
N] योजनानां भ[4]वेः श[4]क्तो न त्वेष विधिरुत्तमः ॥६८॥ [२१
त्वं हि वालिबला[5]द्धीनः किञ्चिद् वानरपुङ्गव ।
६४] योजनानां सहस्रस्य लङ्घने शक्तिमान् विभो ॥६९॥ [N
यादृशो हरिशार्दूलो वाली प्रख्यातविक्रमः ।
६५] सुग्रीवश्च महाबाहुस्तादृशस्त्वं हरीश्वर ।[6] [N
त्वं हि प्रेषयिताऽस्माकं निग्रहानुग्रहे प्रभुः ॥ ७० [6]॥
६६] तवाज्ञानि[7]रताः सर्वे वयमादाय मैथिलीम् । [N
N] आगमिष्याम एतस्मिन् क्षणे नास्त्यत्र संशयः[8] ॥७१॥
अस्माकं यदि न त्वं[9] स्या अग्रणीर् वानरेश्व[10]रः । [N
६७] न कस्यचिद् वयं किञ्चिच् छृणुयाम परस्परम् ॥७२॥ [N
न हि प्रेषयिता ता[11]त प्रेष्यैः[12] प्रे[12]ष्यः क[13]थं भवेत्[13] ।
६८] भ[14]वतायं जनः सर्वः पालनीयः प्रयत्नतः ॥७३॥ [२२
भवान् किलात्र चास्माकं स्वामिभावे व्यवस्थितः ।

---

१. कै—० दोषविचारणात् ।
च—० दोषाविचारिताः ।
भ—० दोषवि० ।
२. भ—पित्रा संलालितः स्नेहात् ।
३. कै अ—सच्छास्त्रं आहितः ।
४. रा म—भवेच्छक्तो ।
भ—भवेत् शक्तो ।
५. ल$_1$—वालिब० ।
६. ल$_2$—नास्ति ।
७. ल$_2$—सुग्रीवाज्ञारताः ।
८. कै रा अ भ च—नास्ति ।
९. भ—स्यास्त्वमग्र० ।
१०. भ—वानरेश्वर ।
११. रा—तत्र ।
१२. कै—प्रेष्यः प्रेष्यः ।
१३. अ भ च—कथंचन ।
१४. रा—+ भवतीयं ।

६९] स्वामी किलात्र[1] सैन्यस्य गतिरेका[2] प्लवङ्गम[3] ॥७४॥ [२३पू<br>
अपि चैवास्य कार्यस्य भवान् गतिररिन्दम । [२४पू<br>
७०] तस्मात् कलत्रवत्[4] तत्त्वं परिपाल्यः सदा भवान्॥७५॥ [२३ उ<br>
मूलमर्थस्य संरक्ष्यमेष कार्यविनिश्चयः ।<br>
७१] मूले हि सति सिद्ध्यन्ति गुणाः पुष्पफलादयः॥७६॥[२४ उ<br>
७२पू] तद् भवानस्य कार्यस्य साधने सत्यविक्रमः ।[5]<br>
N] बुद्धिविक्रमसम्पन्नौ[6] हेतुरेकः परन्तपः[7] ॥७७॥ [२५<br>
७२उ] वयं तव महाबाहो शाखापुष्पफलोपमाः ॥७८॥ [N<br>
गुरुश्च गुरुपुत्रश्च त्वं हि नः कपिसत्तम[8] ।<br>
७३] वयं भवन्तमाश्रित्य समर्था अर्थनिश्चये[9] ॥७९॥ [२६<br>
उक्तवन्तं महाप्राज्ञं जाम्बवन्तं महाकपिः ।<br>
७५] प्रत्युवाच ततः श्रीमान् वालिसूनुरथाङ्गदः ॥८०॥ [२७<br>
पुनः खल्विदमस्माकं कार्यं प्रायोपवेशनम् । [२८ उ<br>
७७] न ह्यकृत्वा[10] हरिपतेः सन्देशं तस्य धीमतः ॥८१॥<br>
७८पू] तत्रापि गत्वा प्राणानां पश्यामि परिसंक्षयम् । [२९<br>
८२उ] स हि प्रसादे कोपे च हरीणां नित्यशः प्रभुः[11] ॥८२॥<br>
८३पू] अकृत्वा तस्य सन्देशं विनाशो गमने भवेत् । [३०

---

१. भ—किलास्य ।<br>
२. भ—गतिरेषा ।<br>
कै ब ल१—गतिरेकः ।<br>
३. कै अ ल१—प्लवंगमाः ।<br>
ल२ ब भ—प्लवंगमः ।<br>
४. कै ल२ च—कलत्रवत्तु त्वं ।<br>
म—१कालत्रवांस्तु त्वं ।<br>
म—२कालत्रवत्तु त्वं ।<br>
५. भ—नास्ति ।<br>
६. अ च—०मसंपन्नो ।<br>
७. ल१—परंतप ।<br>
८. ल१—०सत्तमः ।<br>
९. रा अ च—समर्थार्थविनिश्चये ।<br>
म—समर्थश्च विनि ० ।<br>
१०. रा—हि कृत्वा ।<br>
११. कै—१विभुः ।<br>
१२. कै—प्रभुः ।

८९उ ] तद् यथैवास्य कार्यस्य न भवत्यन्यथा गतिः ॥८३॥
तद् भवानिह दृष्टार्थः सञ्चिन्तयितुमर्हति । [३१
८९] सोऽङ्गदेन तथा वीरः प्रत्युक्तः प्लवगेश्वरः ॥८४॥
जाम्बवानर्थवत् प्राह वालिपुत्रमनिन्दितम् । [३२
९१] येन ते वीर वर्योऽहं न किञ्चित् परिहास्यति ॥८५॥
९२पू ] अहं सन्देशयाम्येनं यः कार्यं साधयिष्यति ॥८६॥[३३
ततः प्रवीरं प्लवतां वरिष्ठ-
मेकान्तमाविश्य सुखोपविष्टम् ।
सन्देशयामास महाऽनुभावं
९७]　　　हरिं स वृद्धो हनुमन्तमेव ॥८७॥ [३४

इत्यार्षे रामायणे किष्किन्धाकाण्डे वानरमन्त्रणं नाम
षट्पञ्चाशः सर्गः ॥ ५६ ॥

---

१. रा—†दृष्टान्ताः ।
२. रा अ ब म भ—०तुमर्हसि ।
३. श—†ये ।
४. कै ब म—वर्यौयं ।
अ च—†कार्यौयं ।
श—प्रवर्यौयं ।
भ—कार्यार्थे ।
५. च—अयं ।
६. कै रा ल१ व म ल२ श—समिद्ध
अ च—समृद्धो ।
७. रा भ च—नास्ति ।
ल१ ब म श—किष्किंदा० ।

अनेकशतसाहस्रीं विषण्णां हरिवाहिनीम् [1] ।

१] जाम्बवान् समुदीक्ष्यैवं [2] हनूमन्तमथाब्रवीत् ॥ [3] १॥ [१

वीर वानरलोकस्य सर्वशास्त्रार्थकोविद: ।

२] तूष्णीमेकान्तमाश्रित्य [4] हनुमन् किं न भाषसे [5] ॥२॥ [२

९ उ] हनुमन् कपिराजस्य सुग्रीवस्य समो ह्यसि ।

रामलक्ष्मणयोश्चापि [6] तेजसा च बलेन च ॥३॥ [३

१०] अरिष्टनेमिनः पुत्रो वैनतेयो महाबलः । [7] [४पू

N] पक्षयोर्यद् बलं तस्य [8] तावद् भुजबलं तव ॥४॥

११पू] विक्रमश्चापि तेजश्च सत्त्वं [9] च हरिपुङ्गव [10] । [6]

१२पू] विशिष्टं सर्वभूतानां किमात्मानं न बुध्यसे ॥ [11] ५॥ [७ उ

यादृशो वैनतेयस्य वेगो वेगवतो महान् ।

N] तादृशस्तव वेगो हि किमात्मानं न बुध्यसे ॥ [11] ६॥ [N

---

१. ल₂—निषण्णां ।
   म—मनुज्ञां ।

२. कै म—०दीक्ष्येव ।
   रा—समुदस्याथ ।

३. रा—अतः परमष्टपञ्चाशस्य सर्गस्याद्यः श्लोकः संस्तूयमानो हनुमान् इत्यादिः प्रमादाल्लिखितः ।

४. रा—तूष्णीमेव समाश्रित्य ।
भ—तूष्णीमेकान्तमास्थाय ।

५. कै ल₂—न वक्ष्यसे ।
रा ल₁ ब म श—न वक्ष्यसे ।

६. भ—योश्चैव ।

७. भ—अतः परमधिकः पाठः—
गरुत्मानिति विख्यात उत्तमः सर्वपक्षिणां ।
बहुशोपि मया दृष्टः सागरे मकरालये ।
भुजंगानुद्धरन् पूर्वं महातेजा महाबलः ॥

८. अ च—तत्र ।

९. अ भ च—नोभयं तत्र हीयते ।

१०. अ भ च—अतः परमधिकः पाठः—
बलं बुद्धिश्च तेजश्च सत्त्वं च हरिपुङ्गव ।
   ल₁—नास्ति ।

११. म—नास्ति ।

१२उ ] उत्तमाप्सरसां श्रेष्ठा विख्याता पुञ्जिकस्थला । [८पू
१३पू ] अभिशापादभूत् तात वानरी कामरूपिणी ॥७॥ [९उ
१४पू ] अञ्जनेति परिख्याता पत्नी केसरिणो हरेः । [८उ
१३उ ] दुहिता विरजस्यासौ वानरस्य महात्मनः । [१०पू
१४उ ] अभिशापक्षयाज् जाता पुनस्त्रिदिवचारिणी ॥८॥ [N
कपित्वे सा तु चार्वङ्गी कदाचित् कामरूपिणी । [१०उ
१५] मानुषं विग्रहं कृत्वा यौवनोत्तमशालिनी ॥९॥
व्यचरत् पर्वतस्याग्रे प्रावृष्यम्बुदसंकुले । [११उ
१६] विचित्रमाल्याभरणा महार्हक्षौमवासिनी ॥ १० ॥ [११पू
तस्या वस्त्रं विशालक्ष्याः पीतं रक्तदशं ततः ।
१७] स्थितायाः पर्वतस्याग्रे आरुह्योरश्छदं शुभम् ॥११॥ [१२
स ददर्श ततस्तस्या वृत्तावूरू सुसंहतौ ।
१८] स्तनौ च पीनौ सहितौ सुनासं चारु चाननम् ॥१२॥ [१३
तां विशालायतश्रोणीं तनुमध्यां तपस्विनीम् ।
१९] दृष्ट्वैव शुभसर्वाङ्गीं पवनः समवेपत ॥१३॥ [१४
स तां भुजाभ्यां पवनः सुनेत्रां परिषस्वजे ।

---

१. कै रा ल१ ब म ल२ श— +०माप्सरसाप्येषा ।
२. श भ—पुंजिकस्थली ।
च—पुंजिकछला ।
३. कै म श—अंजनीति ।
४. अ च—०तांगराजस्यासौ ।
भ—० ता कुंजरस्यासौ । ( सुपा० च भ्रान्तशोधनेन )
५. अ भ च—चारुसर्वाङ्गी ।
६. भ—पीतरक्तदशं ।
७. कै रा ल१ ब ल२ श—स्थिता सा ।
म—स्थितास्या ।
८. रा—†०रछदे ।
अत्र 'मारुतोऽपाहरच्छनैः' इति शाखान्तर-पाठो युज्यते ।
९. रा ल१ ब म च—सुसंहते ।
१०. भ च—शुभचार्वंगीं ।
११. श—समवैक्षत ।

२०] मदनाविष्टसर्वात्मा गतात्मा तामनिन्दिताम् ॥१४॥ [१५

सा तत्र कोपसम्भ्रान्ता¹ सुनेत्रा² वाक्यमब्रवीत् ।

२१] एकपत्नीव्रतमिदं को नाशयितुमिच्छति ॥ १५ ॥ [१६

अञ्जनाया वचः श्रुत्वा मारुतः प्रत्यभाषत ।

२२] न त्वां हिंसामि कल्याणि मा ते भूद् बुद्धिरन्यथा॥१६॥ [१७

मनसाऽस्मि गतो यत्त्वां³ परिष्वज्य मनस्विनि ।

२३] वीर्यवन्तं महासत्त्वं जनयिष्यसि शोभने ॥१७⁴॥ [१८

स त्वं केसरिणः पुत्रः क्षेत्रजो⁵ भीमविक्रमः ।

२४] मारुतस्यौरसः पुत्रस्तेजसा च पितुः समः ॥१८॥ [N

उद्यन्तं⁶ हि त्वमादित्यं⁷ बालो भूत्वा महावने ।

२५] ग्रहीतुकामः क्रीडार्थमुत्पपाताम्बरं बली ॥१९॥ [२१

शतानि यातस् त्रीण्यूर्ध्वं योजनानां महाकपे ।

२६] तेजसाऽर्कस्य निर्धूतो न विषादं गतस्तदा ॥२०॥ [२२

यमेव दिवसं त्वं च ग्रहीतुं भास्करं प्लुतः । [N

N] तमेव दिवसं राहुः संजिघृक्षुर्⁸ दिवाकरम् ॥२१॥

उपाजगाम त्वां⁹ दृष्ट्वा शक्रस्त्वामुपचक्रमे¹⁰ । [N

---

१. भ—तु सुसंभ्रांता ।

२. ब—सुमित्रा वा०

ल$_1$ म – त्रुटितः पाठः ।

श—ह्यंजनी वा० ।

३. कै रा ल$_1$ अ ब म ल$_2$ श च—

यस्त्वां ।

४. भ—अतः परमधिकः पाठः—

वीर्यवान् बुद्धिसंपन्नः पुत्रस्तव भविष्यति ।

स त्वं केसरिणः पुत्रं तेजसा चापि मत्समं॥

५. कै—क्षेत्रज्ञो ।

३. कै रा ल$_1$ अ ब म—उद्यतं ।

श—तपंतं । ल$_2$—उदितं ।

७. ल$_1$—तमादित्यं ।

८. कै—संजिगृक्षुर् ।

९. अ म श—तं ।

१०. भ – शक्रं त्वमुपचक्रमे । इत्यपर-

हस्तेन । 'त्वरितं चोपचक्रमे'

इति मूले ।

N] इन्द्रस्य भवनं गत्वा सह शक्रेण चाभ्ययात् ॥२२॥ [N
ऐरावतस्कन्धगतं दृष्ट्वा शक्रं त्वमागतम् ।
N] समायातश्च शक्रस्त्वां कुलिशेनाभ्यताडयत् ॥२३॥ [N
N] शतानि त्रीणि गत्वोर्ध्वं योजनानां महाकपे ॥२४॥ [N
तेजसा तस्य निर्धूतो वज्रेण च समाहतः ।
N] न विषादं गतस्तत्र निपपातं महीतले ॥२५॥ [N
तस्माद् वै पततः शीघ्रमन्तरिक्षात् कपे तव । [२३पू
२८] हनुः शैलेन्द्रशिखरे वाममेतदभज्यत ।
२९पू] ततस्तु नामधेयं ते हनुमानिति कीर्त्यते ॥२६॥ [२४
ततस्त्वां पतितं दृष्ट्वा वायुः सर्वत्रगो विभुः । [२५पू
N] चकार सर्वभूतानि निरुच्छ्वासानि सर्वतः ॥२७॥ [N
ततः प्रजाः सगन्धर्वाः ससुरासुरमानवाः ।
N] प्रजापतिं पुरस्कृत्य वायुमीयुः सुखैषिणः ॥२८॥ [N
प्रजापतिस्तु भगवानुवाच वचनं विभुः ।
N] अवध्यो हनुमानेष तव पुत्रो हरीश्वरः ॥२९॥ [N
अस्त्राणामप्यवध्यश्च ब्रह्मादीनां भविष्यति ।
N] बलवान् वीर्यवांश्चैव तस्मान्मारुत मा रुदं ॥३०॥ [N
N] प्रजापतेर्वरं लब्ध्वा प्रीतोऽभून्मारुतस्तदा ॥३१॥ [N

---

१. कै—चाह्वयात्। म ल२—चात्ययात्।
२. ल२—०स्कंधगतो ।
३. भ—निषसाद ।
४. ल१ व—कपेः ।
५. म—त्रुटितः पाठः ।
 श—वीक्ष्य ।
६. म—सर्वशः ।
७. कै रा ल१ ब म श—ता प्रजाश्च।
८. अ—वायुमागन् सु० ।
 भ—वायुमागात्सुखैषिणी ।
 च—+ वायुमास्सुखैषिणं ।
९. कै ल१ ब—मानव ।



तुभ्यं तदा वरं दत्त्वा सह देवैः प्रजापतिः ।
N] पितरं ते पुरस्कृत्य प्रत्यागच्छद् यथाक्रमम् ॥३२॥ [N
२९उ] त्वं हि वायुसमस्तात जवेन[1] कपिकुञ्जर[2] । [३१ उ
वयमद्य गतप्राणा भवानस्मासु साम्प्रतम् ।
३०] तेजो बलसमायुक्तः पक्षिराज इवोत्तमः ॥३३॥ [३२
स इदानीमहं वृद्धः[3] प्लवने मन्दविक्रमः ।
३३] साम्प्रतं बलमस्माकं भवान् सर्वगुणान्वितः ॥३४॥ [३५
तद् विलम्बस्व विक्रान्तं प्लवतामुत्तमो ह्यसि ॥३५॥ [३६पू
३४] यस्तु विक्रमतेऽदृष्टो विक्रमे समुपस्थिते ।
पर्जन्यमिव भूतानि लोकस्तमनुजीवति ॥३६॥ [N
३५] एतावान्[8] पुरुषार्थो[9] हि विक्रमश्च महामते ।
यो युक्तो योगशास्त्राभ्यां प्रयुक्तः पौरुषेण च ।
३७] कर्मणा चाप्युपायज्ञः सोऽस्यां धुरि नियुज्यते[10]॥३७॥[N
३६पू] तस्य पौरुषमश्नन्ति मित्रस्वजनबान्धवाः ॥३८॥ [N
तदप्रमेयं वचनं सम्यग् विज्ञाय भाषितम् ।
३८] अथोचुरनुमान्यैवं वानरा वानरर्षभम् ॥३९॥ [N
विक्रमश्च महत् तेजो लङ्घने साधको[11] ह्यसि ।
३९] अप्रमेयाप्रमेयस्य परं पारं महोदधेः ॥४०॥ [N

---

१. कै रा ल, अ ब म ल, श च— † तावत्समस् ।
२. अ भ च—प्लवने ।
३. कै—० कुंजरः ।
४. श—† इव क्रमः ।
५. रा ल, ब म ल, श— ० दानीं महावृद्धः ।
६. अ च—सर्वगुणान्वितः ।
७. अ भ च—दृष्टः ।
भ—'दृष्टो' इत्यपरहस्तेन
८. कै रा ल, अ म ल, श भ च— एतावत् ।
९. कै रा ल, अ म ल, श च— पुरुषार्थं ।
१०. श— नियोज्यते ।
११. भ—सोधिको ।

विस्मापयन् जगत् सर्वं प्रक्रमस्व महामते ।
४०] सीतायाश्चिरनष्टायास्त्वमर्घ्यं पदवीं व्रज ॥४१॥ [N
कथ्यतां त्रिषु लोकेषु त्वद् यशः पुण्यकर्मभिः ।
४१] अनौपम्यमिदं कर्म लङ्घनं लवणाम्भसः ॥४२॥ [N
यशसा योजयात्मानं हर ज्ञातिसुदुष्कृतम् ।
४२] निर्देशसिद्ध्या भर्तारं परित्राणेन राघवम् ॥४३॥ [N
४४ उ] विषण्णांस्तु हरीन् सर्वान् हनुमन् किमुपेक्षसे ।
विक्रमस्व महाभाग विष्णुस्त्रीन् विक्रमानिव ॥४४॥ [३८
४५] समर्थो ह्यनिलस्यासि गतिं गन्तुं सुदुर्गमाम् । [N
त्वद्वीर्यं द्रष्टुकामेयं समग्रा हरिवाहिनी ॥४५॥ [३६ उ
४३] उत्तिष्ठ हरिशार्दूल लङ्घयस्व महाऽर्णवम् ।
४४पू] वायोरपि गतिर् नैषा हनुमन् या गतिस्तव ॥४६॥ [३७
ततः कपीनां प्रवरेण देशितः
प्रतीतवेगः पवनात्मजः कपिः ।
प्रहर्षयंस्तां कपिवाहिनीं तदा
४६] चकार रूपं प्लवनाय देशितः ॥४७॥ [३९

इत्यार्षे रामायणे किष्किन्धाकाण्डे हनुमत्प्रोत्साहनं नाम
सप्तपञ्चाशः सर्गः ॥ ५७ ॥

---

१. म —। ० श्चिरदृष्टायास्त्वमद्य ।
२. रा —। कथां तां ।
रा—कथितं ।
३. च—हनूमद् ।
४. कै रा ल१ ब म ल२ श—
ह्यसितस्यास्य ।
भ—ह्यवितस्यासि ।
५. भ—सुदुर्लभां ।
६. अ भ च—या हनुमन् ।
७. श—दर्शितः ।
८. ल१ ब म श—देशितः ।
९. ल१ ब म श—किष्किंदा० ।
भ च—नास्ति ।

संस्तूयमानो हनूमान् व्यवर्धत महाबलः ।
१] समाविध्य च लाङ्गूलं चरणौ चाचलोपमः ॥१॥ [४

तस्य संस्तूयमानस्य वृद्धैर्वानरयूथपैः ।
२] तेजसा पूर्यमाणस्य रूपमासीच्च दुर्गमम् ॥२॥ [५

कपिभिः स्तूयमानस्य तदा बलवतो बलम् ।
N] प्रवृद्धं हृष्टमनसः पर्वणीव महोदधेः ॥३॥ [N

आत्मस्थेन तु तोयेन वर्धते सागरो यथा ।
N] तथाऽऽत्मस्थेन वीर्येण प्रवृद्धः कपिकुञ्जरः ॥४॥ [N

यथा चन्द्रमसो वृद्धया वर्धते सागरोऽम्भसा ।
३] ववृधे स्तूयमानस्य तथा वीर्यं हनूमतः ॥५॥ [N

यथा विजृम्भते सिंहो विबुद्धो गिरिगह्वरे ।
४] मारुतस्यौरसः पुत्रस्तथा समुपजृम्भितैः ॥६॥ [६

अशोभत मुखं तस्य जृम्भमाणस्य धीमतः ।

---

१. कै रा ल१ अ ब म श च—
चरणैश्चाचलोपमः ।
ल२—०चलोत्तमः ।
२. कै रा ल१ अ ब म श च—
वृद्धैर्वा० ।
३. ल२—नास्ति ।
४. रा ल२ अ ब च—पूज्यमानस्य ।
५. म—० मासदिनुत्तमं ।
६. कै म ल२ श—नास्ति ।
७. कै म ल२ श—नास्ति ।
ब—† कामिभिः स्तू० ।
भ—कपेः संस्तूयमानस्य ।
८. रा ल१ ब भ—आत्मस्थेनैव ।
श—आत्मस्थेन च ।
९. † तोयेन ।
१०. भ—† ववृधे ।
११. कै—† विवृधे । च—नास्ति ।
१२. ल१—† विबद्धे ।
ब—† विबुद्धा ।
१३. कै रा अ म ल२ श भ च—
० पजृंभते ।
१४. कै रा अ श—† ० मानस्य ।

५] तरुणादित्यसंकाशं[1] विधूमे[2] इव पावकः[2] ॥७॥ [७
हरीणामुत्थितो[3] मध्याद् संप्रहृष्टतनूरुहः ।
६] अभिवाद्य हरीन् सर्वानिदं वचनमब्रवीत् ॥८॥ [८
तदेतच्छतकृत्वोऽपि[4] गन्तव्यं शतयोजनम् ।
८] अहमेतं गमिष्यामि प्रीताः सन्तु वनौकसः[5] ॥९॥ [N
एवं भवतु विक्रम्य[6] लङ्घयिष्यामि सागरम् ।
७] कृतार्थश्चागमिष्यामि प्रीताः सन्तु प्लवङ्गमाः ॥१०॥ [N
बलं च मम वीर्यं च पिता यश्च मम प्रभुः ।
९] मरुतश्चैव[7] यद्वृत्तं तत् सर्वं श्रोतुमर्हथ ॥११॥ [N
प्रत्ययार्थं स्ववीर्यस्य कुलं वक्ष्यामि यादृशम् ।
१०] न विस्मयकृताद् भावादौत्सुक्यात् प्रवदाम्यहम्[8] ॥१२॥ [N
इदं केसरिणस्तस्य पितुरासीच्छ्रुतं मया ।
११] मम जन्म यथा सत्यमद्भुतं मातरिश्वनः ॥१३[9]॥
१२पू] पश्चिमस्य समुद्रस्य तीर्थं पुण्यमृषिष्टुतम्[9] ॥
N] इदं केसरिणस्तस्य तीर्थं पुण्यमृषिष्टुतम्[1] ।
१२उ] प्रभासमृषयो यत्र मज्जन्ति सुसमाहिताः ॥१४॥ [N
तंच्छंखशवलो[10] नाम धृष्टः[11] कश्चिन्महागजः ।
१३] गैतानृषीन्[12] भीमबलो जघान किल वीर्यवान् ॥१५॥ [N

---

१. भ—० त्यसंकाशो ।
२. अ च—† विधूमं इव पावकं ।
३. श—† ० मर्थितो ।
४. भ—यदेत० ।
५. कै—‡ वनौकसाः ।
६. ल$_{1}$—संक्रम्य ।
७. कै ल$_{1}$ अ म ल$_{2}$ श—
मारुतश्चैव ।
८. कै—प्रविशाम्यहं ।
९. कै रा ल$_{1}$ अ ब म ल$_{2}$ श च—
नास्ति ।
१०. कै रा ल$_{1}$ ब म ल$_{2}$ श—
तं शंखश० ।
११. कै रा ल$_{1}$ अ ब म ल$_{2}$ श च—
द (?दु) ष्टः ।
१२. च—स तानृषी० ।

तदुपस्पर्शनं पुण्यं गच्छन्तमृषिपूजितम् ।
१४] भरद्वाजमृषिं शान्तं गजः सोऽभ्यद्रवद्द्रुतम् ॥१६॥ [N
ततः पर्वतकूटस्थः पिता मम महाबलः ।
१५] संददर्श महात्मानं हस्तिना समभिद्रुतम् ॥[2] १७ ॥ [N
ततो नादं महाभीमं कृत्वा मम पिता भृशम् ।
१६] तस्योपरिष्टान्न्यपतत् कुञ्जरस्य महाबलः[3] ॥१८[4]॥ [N
तं नखैश्च सुतीक्ष्णाग्रै र्दन्तैश्चैव पिता मम ।
१७] संभ्रममध्याक्षिणी तस्य बिभेद कपिकुञ्जरः ॥१९॥ [N
उत्प्लुत्य[5] च स वेगेन पिता मम कपीश्वरः ।
१८] तस्य वक्त्रादुभौ दन्तावुज्जहार बलाद् बली ॥२०॥ [N
उत्पाट्य सालवृक्षं च बलेन महता ततः ।
N] विध्वंसयितुमारेभे[6] तं गजं च[7] पिता मम[8] ॥२१॥ [N
तस्मिन् हते महावीर्ये पितरं मे महामुनिः ।
२०] गृहाभ्ययान् मुनिभ्यश्च न्यवेदयत तं कपिम् ॥२२॥ [N
योऽसौ रौद्रो गजस्तीर्थं पुण्यमुत्सादयन् महत् ।
२१] अनेन कपिराजेन स हतोऽक्लिष्टकर्मणा ॥२३॥ [N
भवन्तो दातुमर्हन्ति वरमस्मै यशस्विने ।
N] यमिच्छति हरिश्रेष्ठः केसरी शत्रुसूदनः ॥२४॥ [N

---

१. कै अ भ—दांतं ।
च—यांतं ।
२. रा—नास्ति ।
३. अ भ च—महाबली ।
४. रा—नास्ति ।
५. रा ल१ अ ब च—उत्प्लुत्य तु ।
भ—प्रत्याप्लुत्य० ।
६. कै ल१ ब म—विध्वंसितु० ।
रा च—‡ विध्वंसयतु० ।
७. अ भ च—कपिकुञ्जरः ।
८. रा—महान् ।

N] ऋषयश्चापि तं दृष्ट्वा एवमस्त्विति वानरा: ॥२५॥
ततस्ते मुनयस्तस्मै वानराय ददुस्तदा । [N
२३] पित्रे मम महात्मानो वरं वेदविदां वरा: ॥२६॥
ततो मम पिता वव्रे वरं मारुतविक्रमम् । [N
२४] लभेय भगवन् पुत्रं कामरूपिणमव्ययम् ॥२७॥
ततो मे वर्तमाना सा यौवने जननी पुरा । [N
२७] विचचाराञ्जना नाम महीं सगिरिकाननाम् ॥२८॥
दुहिता वानरेन्द्रस्य कुञ्जरस्य महात्मन: । [N
२८] संवृत्ता मलये दिव्ये पर्वते कामरूपिणी ॥२९॥
सागरे सा शिर:स्नाता रक्तचन्दनरूषिता । [N
२९] प्रकीर्णकेशा तोयार्द्रा तस्थौ मलयमूर्धनि ॥३०॥
ततो मनीषिणां तेषां वचनात् पुण्यकर्मणाम् । [N
N] सा वै गिरिवरे दिव्ये चचार शुभदर्शना ॥३१॥
रूपयौवनसंपन्नां तां दृष्ट्वा मारुतस्तदा । [N
३०] बाहुभ्यां संपरिष्वज्य प्राञ्जलिर् वाक्यमब्रवीत् ॥३२॥
मारुतोऽस्मि विशालाक्षि प्राण: सर्वशरीरिणाम् । [N
३१] अवशस्त्वामभिगत: संकल्पजशराहत: ॥३३॥

---

१. कै म—† वानर: ।
२. रा—† वानरास्तस्मै ।
३. कै रा ल$_1$ अ म ल$_2$ श भ च—ददुस्तथा ।
४. कै रा ल$_1$ ब म भ—† लभेयं ।
५. ल$_1$ म ल$_2$ श—० नासौ ।
६. रा—० रांजनी ।
७. ल$_1$ ब म—० नभूषिता ।
८. अ च—†०र्णकेशास्तोयद्रांस्तस्थौ ।
भ—प्रकीर्यकेशांस्तोयाद्रांस्तस्थौ ।
९. कै रा ल$_1$ ब म ल$_2$ श—मन: प्रिया तेषां वने वै ।
१०. म—अस्य स्थाने—अवशस्त्वामुपगत: संकर० ।
११. ल$_1$ म—प्राणा: ।
१२. कै रा ल$_1$ ब म ल$_2$ श—अवशस्त्वामुपगत: ।
रा—संकल्पजशरीरिण: ।
१३. कै रा ल$_1$ ब म ल$_2$ श—संकल्पजशरीरज: ।

ममाभ्यागमने दोषं न प्राप्स्यसि वरानने ॥३४॥ [N

३२] वानरेन्द्रश्च मे पुत्रो भविष्यति महाबलः ।

वीर्यवान् बुद्धिसंपन्नः सत्त्ववान् बलविक्रमी ॥३५॥ [N

३३] अवध्यश्च महास्त्राणां ब्रह्मादीनां भविष्यति ।

इत्येवं जनकः श्रीमान् मारुतो मे वरं ददौ ॥३६॥ [N

३४] अरूपः सर्वभूतात्मा हुताशनसखोऽनिलः ।

बलवानप्रमेयश्च वायुराकाशगोचरः ॥३७॥ [९उ

३५] तस्याहं भीमवेगस्य शीघ्रगस्य महात्मनः ।

मारुतस्यौरसः पुत्रः प्लवने नास्ति मे समः ॥३८॥ [१०

३६] उत्सहे चापि विस्तीर्णमुल्लिखन्तमिवाम्बरम् ।

३७पू] मेरुं गिरिमसङ्गेन परिगन्तुं सहस्रशः ॥३९॥ [११

उदयात् प्रस्थितं चापि ज्वलन्तं रश्मिमालिनम् ।

४१] अनस्तमितमादित्यमभ्यतिक्रान्तुमुत्सहे ॥४०॥ [१५

N] पृथिव्या दक्षिणादन्तादुत्तरं गन्तुमोजसा ।

४०उ] तथाऽहं भूमिमुत्सृज्य पुनरागन्तुमुत्सहे ॥४१॥ [N

३९उ] पन्नगाशनमाकाशे पतन्तं क्षिप्रमेव तम् ।

N] वैनतेयमहं शक्तः परिगन्तुं सहस्रशः ॥४२॥ [१४

ऊरुवातेन महता भीमेनाकाशगो महान् ।

४२] उत्सहे पर्वतान् सर्वांस्तुङ्गान् पातयितुं क्षितौ ॥४३॥ [N

---

१. अ भ च—बलविक्रमः ।

२. अ भ च—मारुतः श्रीमान् जनन्यै ।

३. कै म—नास्ति ।

४. म—‡ ० स्यमभ्यतिक्रांत० ।

श—० स्यमभ्येत्य क्रांतु० ।

म—० स्यमत्यतिक्रांतु । ०

५. म—तपंतं ।

६. अ—† पक्षसेविते ।

भ च—‡ पक्षिसेविते ।

७. अ भ च—० गान् ।

८. भ—सर्वान् सर्पान् ।

३७ उ] ममोरुभुजवेगेन　भविष्यति　संमुद्द्रुतः　।
संमूर्छितमहाग्राहः　समुद्रो　वरुणालयः ॥४४॥ [१३
३८] बाहुवेगप्रणुन्नेन　समुद्रेण　समुत्सहे　।
३९पू ] समाप्लावयितुं　लोकान्　सपर्वतवनद्रुमान् ॥४५॥ [१२
सागरं　क्षोभयिष्यामि　दारयिष्यामि　मेदिनीम् । [१७ उ
N] पर्वतान् पातयिष्यामि प्लवमानः　प्लवङ्गमाः ॥४६॥
तरिष्याम्यूरुवेगेन　प्लवमानो　महाऽर्णवम्　। [१८
४३] लतानां विविधं पुष्पं　पादपानां च　सर्वशः ॥४७॥ [१९पू
अनुबन्धेन　पुष्पाणां　विविधेन　सुगन्धिनाम्　। [N
४४] भविष्यति हि मे पन्था वायोः पन्था इवाम्बरे ॥४८॥ [१९ उ
राजयिष्यन्तमाकाशमुत्पतिष्यन्तमेव　च　।
५५] द्रक्ष्यन्ति सर्वभूतानि निपतन्तं　वनान्तरात् ॥४९॥ [२०
महामेघप्रतीकाशं　मां　द्रक्ष्यन्ति　वनौकसः　।
५६] नभ आवृत्य　बाहुभ्यां ग्रसमानमिवाम्बरम् ॥५०॥
विधमिष्यामि जीमूतान्　कम्पयिष्यामि　पर्वतान् ।
५७] सागरं क्षोभयिष्यामि प्लवमानः　समाहितः ॥५१॥ [२२
महासंहननोपेतौ　महान्तौ　पुरुषर्षभौ　।

---

१. भ—समुद्यतः ।
२. भ—समुत्थित० ।
३. अ च—० गप्रणुत्तेन० ।
भ—वायुवेग० ।
४. ब ल२ श—प्लावयिष्यामि ।
म—प्लव० ।
५. श च—० ष्याम्युरु० ।
६. भ—सुगंधिना ।
७. कै ल१ अ ब म ल२ श भ च—
राजयंतमिवाका० ।
८. कै ल१ ब म ल२ श—वा ।
९. श—० तंतमिवांबरात् ।
१०. अ—नभश्चावृत्य ।
भ—नभः प्रावृत्य ।
११. भ—क्षोधयि० ।

५८] ऋष्यमूकात् पुनः शैलादुभौ तौ रामलक्ष्मणौ । [२४पू
N] आनयिष्यामि वैदेह्याः सकाशं वानरर्षभाः ॥५२॥ [N
५९ उ] आनयिष्यामि वैदेहीं[1] रामस्य महिषीं प्रियाम् ।
N] प्रसह्य भुजगं भीमं गरुत्मान् सागराद् यथा ॥५३॥ [२४ उ
६० उ] विहरिष्यामि वेगेन नानानक्रसमाकुलम्[2] । [N
६०पू ] वितत्य गरुडः पक्षौ हरन्निवै[3] महोरगम् ॥५४॥
इहैव संप्रतीक्षध्वं[4] सर्वे वानरयूथपाः । [N
६१] अहमेतद् गमिष्यामि योजनानां शतं द्रुतम् ॥५५॥
आदित्यचन्द्रचरिते ग्रहनक्षत्रसेविते । [N
६२] वैनतेयस्य वा शक्ति मम वा मारुतस्य वा ॥५६॥ [२३
ऋते सुपर्णराजानं मारुतं वा महाजवम् ।
६३] न तद् भूतं प्रपश्यामि यो मां प्लुतमनुप्लवेत् ॥५७॥ [२५
निमेषान्तरमात्रेण[6] निरालम्बनमम्बरम्[7] ।
६४] सहसा निष्पतिष्यामि[8] घनाद् विद्युदिवाम्बरे[9] ॥५८॥ [२६
भविष्यति हि मे रूपं क्रममाणस्य सागरे ।
६५] विष्णोः प्रक्रममाणस्य तदा[10] देवासुरे[11] यथा ॥५९॥ [२७
बुद्ध्या चाहं प्रपश्यामि मनः कथयतीव मे ।
६६] अहं द्रक्ष्यामि वैदेहीं रामस्य महिषीं प्रियाम् ॥६०॥ [२८
गरुडस्य समो वेगे मारुतस्य समो जवे । [२९

---

१. कै रा अ भ च—तां देवीं ।
२. ब—नाना ͜ मलताकुलं ।
३. अ च—हरतीव ।
४. अ भ च—मां प्रतीक्षध्वं ।
५. म—† ͜ व ।
६. भ—‡ निमिषांतर० ।
७. भ—सुनिरालम्बमंबरं ।
८. कै रा ल१ अ ब म ल२ श च—निपति० ।
९. अ भ च—विद्युदिवोद्गगे ।
१०. कै रा ल१ अ ब म ल२ श च—तथा ।
११. कै † देवांबरे ।

६७] अयुतं[1] योजनानां हि क्रमेयमिति मे मतिः ॥६१॥
　　वासवस्य सवज्रस्य ब्रह्मणो वा स्वयम्भुवः ।
६८] हरेयममृतं हस्ताद् विक्रम्य सहसा त्वहम् ॥६२॥ [३०पू
　　लक्ष्मीं चन्द्राद्धरेयं च सूर्यान्न तेजस्तथोर्जितम्[2] । [N
६९] लङ्कां चापि[3] समुत्क्षिप्य गच्छेयामिति मे मतिः॥६३॥ [३० उ
　　तमेवं[4] वानरश्रेष्ठं[5] गर्जन्तममितौजसम् ।
७०] प्रत्यूचुर् हरयस्तत्र मारुतस्यौरसं सुतम् ॥६४॥ [३१
　　वीरः केसरिणः पुत्रो वेगवान् मारुतात्मजः ।
७१] ज्ञातीनां तुमुलस्त्रासस्त्वया वीर प्रणाशितः ॥६५॥ [३३
　　तव कल्याणरुचयः कपिसंघाः[6] समागताः ।
७२] मङ्गलान्यर्थसिद्ध्यर्थं[7] करिष्यन्ति प्रयास्यतः ॥६६॥ [३४
　　कपिराजप्रसादेन कपिवृद्धमतेन[8] हि ।
७३] गुरूणां च[10] प्रसादेन प्लवस्व त्वं महाऽर्णवम् ॥६७॥ [३५
　　स्थास्यामो ह्येकपादेन[9] यावदागमनं तव ।
७४] त्वद्गतानि[11] हि सर्वेषां जीवितानि वनौकसाम् ॥६८॥ [३६
　　एवमुक्तः परिषदा सोऽङ्गदेन च वानरः । [N
७५] अभिवाद्याभिवाद्यांश्च[12] प्राव्रजत[13] महाकपिः ॥६९॥

---

१. भ—आशतं ।
२. म श—० स्तथोदितं ।
३. भ—वापि ।
४. अ च—† तमेव ।
५. अ भ च—वानरज्येष्ठ ।
६. ल₁—†कपिसंगाः ।
७. म—† मंगलान्यनि तवाक्यार्थं ।
　ल₂ श—मंगलानि तवास्यर्थं ।
८. भ—† प्रतिष्ठिता ।
९. रा—† ० ह्वतमेन ।
१०. अ भ च—च ।
११. कै रा ल₁ व म ल₂ श—
　विहितानि ।
१२. अ च च—० र्याभिवाद्यांश्च ।
१३. रा—‡ प्राव्रज्यत ।
　अ भ च—प्रावृंक्त ।

वीक्षांचक्रे[1] च संहृष्टः समन्ताद् वानरर्षभः ।
७३] उत्प्लुत्य[2] च ततस्तूर्णमुवाच हरियूथपान् ॥७०॥ [N
न चिरादागमिष्यामि प्राप्य[3] लङ्कामितः पुरीम् ।
N] अङ्केनादाय वैदेहीं हत्वा[4] रावणमाहवे ॥७१॥ [N
एतावदुक्त्वा वचनं प्रतीतः
प्रियं नरेन्द्रस्य च राघवस्य ।
आमन्त्र्य चामन्त्र्य च वानरांस्तान्
N] स लङ्घनार्थं[5] गिरिमारुरोह ॥७२॥ [N
स वेगवान् वेगसमाहितात्मा
हरिप्रवीरः परवीरहन्ता[6] ।
मनः समाधाय[7] महाप्रभावो
N] जगाम लङ्कां मनसा महात्मा ॥७३॥ [८१

इत्यार्षे रामायणे किष्किन्धाकाण्डे हनुमद्गर्जनं नाम
अष्टपञ्चाशः सर्गः ॥ ५८ ॥

---

१. ल, — ‡ वीक्ष्यांचक्रे ।
२. अ भ च — उत्पत्य ।
३. कै — ‡ गिराद् ।
रा ल, व म ल₂ रा — ‡ चिराद् ।
४. भ — [illegible]त्वा ।
५. कै रा ल, अ व म ल₂ रा च — संलंघ० ।
६. रा — परवीरहर्त्ता ।
७. कै रा ल, अ ब म ल₂ रा — समादाय ।
९. ल, व म रा — किष्किन्धा० ।

अथ ते वानराः शूरास्तदात्यर्थं प्रहर्षिताः ।
गुणपूर्वाभिराशीर्भिर्हनुमन्तं[1] प्रतुष्टुवुः ॥१॥
येनौदार्येण मघवान्[2] देवासुरसमागमे ।
क्रान्तवान्युध्यमानस्तु क्रम त्वं तेन तेजसा ॥२॥
यथा विष्णुर्महातेजा पृथिवीं क्रान्तवान्पुरा ।
त्रिविक्रमो महासत्त्वस्तद्धिं[3] तेजो बलं च ते ॥३॥
यथा रुद्रो[4] महाबाहुर्यज्ञे विविधदक्षिणे ।
योगसिद्धो महावीर्यस्तत्ते भवतु मङ्गलम् ॥४॥
त्रिपुरं जघ्नुषः पूर्वं शङ्करस्य महात्मनः ।
बलवीर्यादि[5]सम्पत्तिः सा ते भवतु नित्यदा ॥५॥
मरुतो देवसंमर्दे[6] युध्यन्ते येन संयुगे ।
क्रमतो मङ्गलं तत्ते भवतु प्लवगोत्तम ॥६॥
यथाश्विनौ विवस्वांश्च भाभिः[7] सञ्जातपौरुषः ।
तेजसा तेन हनुमन् प्रक्रमस्व महार्णवम् ॥७॥
ये वै महार्षयाः पुण्याः सिद्धचारणसेविताः ।
राजयन्त्युत्तरामाशां तेषां प्रक्रम तेजसा ॥८[9]॥
ऋषयो देवगन्धर्वा पिशाचोरगराक्षसाः[10] ।
चन्द्रादित्यौ यथा वीर्यातं प्रक्रमन्ते नभस्तले[11] ॥९॥

---

१. ब भ—हनूमंतं ।
२. व ल₂ श भ—मघवा ।
३. कै ल₁ अ म—०त्वद्बुद्धि० ।
४. भ—इन्द्रो ।
५. ब—०र्याभिस० ।
६. ल₂—देवसमरे ।
७. कै रा ल₁ अ म ल₂ श भ च—ताभिस्सं० ।
८. ल₂—नास्ति ।
९. भ—महर्षयः ।
१०. ल₂ - नास्ति ।
११. ल₁ अ ब म—नभस्थले । भ—नभस्तलं ।

तथा तेषां च सर्वेषां त्वं विवर्धस्व[1] तेजसा ।
वीर्ययुक्तस्तथा वीरः प्रक्रमस्व महार्णवम् ॥१०॥
आशीर्भिः प्लवगै र्वीरो हनूमानभिपूजितः ।
अभ्यनन्दत[2] मानार्हो मरुद्भिर्वासवो यथा ॥११॥
अग्निर्हुतवहः साक्षात्स्तूयमानो[3] यथाध्वरे[4] ।
ऋषिभि र्वामनैः[5] संख्ये यथा यज्ञपुरस्कृतः ॥१२॥
वानरै र्हनुमानेवमाशीर्भिः[6] प्रतिपूजितः[7] ।
संपूज्य तान् हरिगणानिदं वचनमब्रवीत् ॥१३॥

इत्यार्षे रामायणे किष्किन्धाकाण्डे[8] हनुमन्मङ्गलं नाम
ऊनषष्टितमः सर्गः ॥ ५९ ॥

---

१. भ—† विवृद्धस्व ।
२. कै रा ल$_1$, अ ब म ल$_2$ श च—
अभिनन्दितस्तु ।
३. अ च—०क्षात्सूय० ।
४. कै ल$_1$, अ ब म भ च—महाध्वरे ।
रा—† ०यथाध्वरे ।
च—महास्वरे ।
५. भ—०वामनप्रख्यैर् ।
६. रा—† ०हनुमा० ।
७. कै ल$_1$ ब म ल$_2$—† प्रतिपूजितैः ।
भ—त्यक्तम् ।
८—ब म श—किष्किन्दा० ।
अ भ च—नास्ति ।

N] ततस्तु हरिशार्दूलस्तानुवाच वनौकसः ।
नेमं[1] मम महावेगं प्लवतो धारयिष्यति ॥१॥ [३७
एतानि हि नगस्यास्य शिलासङ्कटशालिनः ।
N] शिखराणि महेन्द्रस्य स्थिराणि च महान्ति च ॥२॥ [३८
एतानि मम निष्पेषं पादयोः प्लवगोत्तमाः ।
N] प्लवतो धारयिष्यन्ति योजनानामितं[2] शतम् ॥३॥ [४०
इति तस्य ब्रुवाणस्य सर्वे वानरपुङ्गवाः ।
१] चक्रुः प्रणामं मुदिताः शक्रस्येव मरुद्गणाः ॥४॥ [N
तस्य पुष्पवतीं[3] चित्रां वनमालां महात्मनः ।
२] चक्रुस्ते वानरश्रेष्ठा[4] बाहुभ्यां मङ्गलानि च ॥५॥ [N
स तैः परिवृतः श्रीमान्वानरैर्वानरर्षभः ।
३] आरुरोह नगश्रेष्ठं[5] महेन्द्रमरिमर्दनः ॥६॥ [४१
वृतं नानाविधै र्वृक्षैः शार्दूलमृगसेवितम्[6] ।
४] लतासन्तानसंबाधं नित्यपुष्पफलद्रुमम् ॥७॥ [४२
मत्तद्विजगणै र्जुष्टं सलिलोत्पीडसंवृतम् ।
५] सिंहशार्दूलचरितं मत्तमातङ्गसेवितम् ॥८॥ [४३
महद्भिरुच्छ्रितैः शृङ्गैरुल्लिखन्तमिवाम्बरम् । [४४पू
६] सर्वसत्त्वालयं श्रीमँस्सानुमन्तं[7] समन्ततः ॥९॥ [N
ततस्तं स महातेजा आरुह्य विपुलं गिरिम् ।
७] व्यराजत कपिश्रेष्ठो द्वितीयः पर्वतो यथा ॥१०॥ [N

---

१. भ—०नायं ।
२. श—०नानि निदर्शनं ।
३. च—०पुष्टावतीं ।
४. भ—वानराः श्रे० ।
५. भ—०मृगं श्रे० ।
६. अ च—शाद्वलं मृग० ।
७. कै ल, अ ब म श भ च—श्रीमान्सा० ।

दद‍र्श च महाघोरं सागरं मकरालयम् ।
N] अपारमिव गर्जन्तं महोरगनिषेवितम् ॥११॥ [N
स तिष्ठन् पर्वतस्याग्रे बभौ वानरपुङ्गवः ।
N] लोकानिवं तदा विष्णुः क्रमिष्यन्विक्रमैस्त्रिभिः ॥१२॥[N
अथ वैदूर्यवर्णेषु शाद्वलेषु महाबलः ।
N] वीरः सलिलकल्पेषु विचचार यथासुखम् ॥१३॥ [N
स द्विजांस्त्रासयन् सर्वांल्लताश्चैव समाहरन् ।
N] मृगान् वित्रासयंश्चैव प्रवृद्ध इव केसरी ॥१४॥ [N
नीललोहितमाञ्जिष्ठपत्रवर्णैस्सितासितैः ।
N] स्वभावविहितैश्चित्रैर्धातुभिस्समलङ्कृतम् ॥ १५ ॥
कामरूपिभिराविष्टमभीक्ष्णं सपरिच्छदैः ।
N] यक्षराक्षसगन्धर्वैर्देवकल्पैश्च पन्नगैः ॥१६॥ [N
तस्य पर्वतराजस्य तले नागशतायुते ।
N] तिष्ठन् कपिवरः श्रीमान्ह्रदे नाग इवाबभौ ॥१७॥ [N
स सूर्याय महेन्द्राय पवनाय स्वयंभुवे ।
N] सतीभ्यंश्च नमस्कारं चकार कपिकुञ्जरः ॥१८॥ [N
अञ्जलिं प्राङ्मुखः कृत्वा कृत्वा चापि प्रदक्षिणम्[13] ।

---

१. रा अ च—|मज्जंतं ।
२. कै रा ल$_1$ ब म श—|लोकानीव ।
३. ल$_2$—|वानरै० । श—वा पदै० ।
४. रा—: लकंपेषु ।
५. भ च—धीमान् क० ।
६. अ च—०त्रवर्णसिता० ।
७. अ—|ततो ।
८. कै रा ल$_1$ अ ब म ल$_2$ श च—नागवता० ।
९. कै रा ल$_1$ ब म ल$_2$ श भ—देवाय च । अ—पुरुषाय ।
१०. कै रा ल$_1$ अ ब म ल$_2$ भ च—स तेभ्यश्च० ।
११. ल$_2$—प्राङ्मुखं ।
१२. ब ल$_2$—चाभिप्र० ।
१३. भ—
अंजलिं प्राङ्मुखः कृत्वा सगणायात्मयोनये ।
मनसावन्द्य रामं च लक्ष्मणं च महारथम् ॥
सागरं सरितश्चैव प्रणम्य च महाकपिः ।
ज्ञातीनथ परिष्वज्य कृत्वा चापि प्रदक्षिणम् ॥

N] अरिष्टं मार्गमातिष्ठन् पुण्यं वायुनिषेवितम् ॥१९॥ [N
पुनरागमनायेति　　वानरैरभिपूजितः　।
N] इहैव　तिष्ठतेत्युक्त्वा　प्लवनाय　कृतोद्यमः　। [N
वानरान् वानरश्रेष्ठ इदं वचनमब्रवीत् ॥२०॥ [सु१,४२उ
N] यथा राघवनिर्मुक्तः　शरः　श्वसनविक्रमः　।
गच्छेत्तद्वद्गमिष्यामि लङ्कां रावणपालिताम् ॥२१॥ [४३
N] द्रक्ष्यामि यदि तां नाहं लङ्कायां　जनकात्मजाम् ।
अनेनैव प्रवेगेन गमिष्यामि सुरालयम् ॥२२॥ [४४
N] अथवा त्रिदिवे सीतां न द्रक्ष्यामि कृतश्रमः　।
बद्ध्वा राक्षसराजानमानयिष्यामि रावणम् ॥२३॥ [४५
सर्वथा कृतकार्योऽहमानयिष्यामि जानकीम्　।
N] आनयिष्यामि वा लङ्कां समुत्पाट्य सरावणाम् ॥२४॥ [४६

इत्यार्षे रामायणे किष्किन्धाकाण्डे हनुमत्पर्वतारोहणं नाम
षष्टितमः सर्गः ॥ ६० ॥

---

१. कै ल$_1$ म—अतिष्ठन् ।
२. कै रा ल$_1$ अ व म ल$_2$ श च—१०ते लंका ।
३. कै रा ल$_1$ व म ल$_2$ श च—गमिष्येहं ।
४. ब श—कृतकृत्योहमानयि० ।
५. रा अ ब ल$_2$ श भ च—०हमानेष्यामीह ।
६. ल$_2$ म ब श—किष्किन्द्रा० । अ भ च—नास्ति ।

[वं०–मु०–९,७]= [ एकषष्टितमः सर्गः ] =[दा०,मु०१]

एवमुक्त्वा स हनुमान्वानरान् वानरोत्तमः ।
N] ततोऽभ्यावर्द्धे दक्षो दक्षिणो दक्षिणां दिशम् ॥१॥ [९उ
प्लवगः प्लवगैर्दृष्टः प्लवने कृतनिश्चयः ।
N] ववृधे रामवृद्ध्यर्थं समुद्र इव पर्वणि ॥२॥ [१०
निष्प्रमाणशरीरं तं विलङ्घयितुमर्णवम् । [११पू
N] ओजस्तेजस्तथा वीर्यं प्रविवेश महाबलम् ॥३॥ [N
प्रगृह्य बलवान् बाहू लङ्कामभिमुखः स्थितः ।
N] बाहुभ्यां पीडयामास चरणाभ्यां च पर्वतम् ॥४॥ [११उ
स चचालाचलश्चाशु मुहूर्तं कपिपीडितः । [१२पू
N] वने सिंहपरामृष्टो मदोन्मत्त इव द्विपः ॥५॥ [N
१४उ] गिरिः प्रक्रम्यमाणश्च तेन प्रक्रमता तदा ।
स मुक्तवांस्तदा रक्तं रसं कमलवर्चसम् ॥६॥ [N
१२उ] गिरेस्तस्य समाक्रान्ता हरितालताायुताः ।
१३पू ] सद्रुमाः पक्षिभिः सार्धं पेतुस्ताश्च महाशिलाः ॥७॥ [N
N] पृथिव्यास्तेन शब्देन चुक्षुभे वरुणालयः ॥८॥ [N
१३उ ] शिलान्तरगताः सर्पाः पीड्यमाना महाविषाः ।

---

१. अ ल१ ब—|ऋक्षो ।
२. कै अ रा अ—हृष्टः । श—|पृष्टः ।
३. कै ल१ ल२ ब म श रा—|रामवृत्यर्थं ।
४. कै ल म श अ भ च–लिलंघयितु० ।
५. कै रा ल१ ल२ ब म श अ च–महाबलः ।
६. अ भ च—०चचाल ।
७. कै—मदोद्वृत्त ।
अ भ च—महोत्पात ।
८. कै रा अ भ च—०स्त्रिधा ।
९. कै ल१ ल२ ब म श रा—महाशिखाः ।
अ च—|महाविखाः ।

१४पू ] सधूमं ज्वलनं[1] घोरं मुमुचु र्लोलितै[2] र्मुखैः ॥९॥ [N

निःश्वसद्भिस्ततस्तैस्तु सर्पैर्[3]र्धविनिस्सृतैः ।

N] महेन्द्रः[4] पर्वतः श्रीमान् सपताक इवाबभौ ॥१०॥ [N

शिरोभिः पृथुभिश्चैव पद्मस्वस्तिकलक्षणैः[5] ।

N] वमन्तः पावकं दीप्तं दद[6]शु र्दशनैः शिलाः ॥११॥ [१९

तास्तदाशीविषै र्दष्टाः कुपितैस्तैर्महाशिलाः[7] ।

N] प्रदीप्ताः पावकाविष्टा व्यभिद्यन्त सहस्रधा ॥१२॥ [२०

यानि चौषधजालानि[8] तस्मिन् जातानि पर्वते ।

N] विषघ्नान्युरगाणां तु तैस्तु तच्छामितं विषम् ॥१३॥ [२१

अपरे च महाकाया वमन्तोऽग्निं महोरगाः ।

N] निर्झरेभ्यो विनिश्चेरुः[9] कपिपादप्रपीडिताः ॥१४॥ २२

१४ उ] समाक्रान्तो बलवता वानरेण महागिरिः ।

१५पू ] जलधाराः प्रसुस्राव मदराजीरिव द्विपः[10] ॥१५॥ [N

स्रुतास्[11]तस्मात्तु ता धारास्सलिलस्य समन्ततः ।

रक्त[12]चन्दनसंरक्ताश् चित्रैः[13] काञ्चनधातुभिः ।

N] गैरिकाञ्जनसंयुक्ता बभुश्चित्रा[14]स्स्रजो यथा ॥१६॥ [N

---

१. कै — ज्वलितं ।

२. अ च — कलितैर् ।

ल२ ब म — लोहितैर् ।

भ — ज्वलितैर् ।

३. ल१ ल२ ब म श — ०रवानिनिःसृतैः ।

४. कै रा ल१ ल२ ब म अ च — महेन्द्रपर्वतः ।

५. कै रा — +पद्मः स्वस्ति ० ।

ल२ ब म श — पृथुस्वस्ति० ।

६. कै — चाखदा० ।

७. ल२ — नास्ति ।

८. कै रा ल२ ल२ ब म श अ च — ०षधजातानि ।

९. अ भ च — विनिष्पेतुः ।

१०. रा च — +द्विपाः ।

११. भ — +च्युतास्तस्मा० ।

१२. अ — सचंदनरसारक्ताश् ।

च — सर्वा...दनसं० ।

१३. ब — चित्रकांचन० ।

१४. श — वाप्याश्चित्रा० ।

स्रवत्प्रस्रवणेभ्यश्च पाण्डुरं विमलं जलम् ।
N] मुक्ताजालैरिव बभौ समन्तादावृतो गिरिः ॥१७॥ [N
१९ ड] सिद्धचारणजुष्टानि किन्नराचरितानि च ।
१६ ड] गिरेराक्रम्यमाणस्य शिखराणि चकम्पिरे ॥१८॥ [२१पू
स तु शृङ्गैः समुद्धूतैर् व्याघूर्णद्भिश्च पादपैः ।
N] शुशुभे पुष्पशबलैः प्रवृत्त इव पर्वतः ॥१९॥ [N
स पादपविमुक्तेन कुसुमेन सुगन्धिना ।
१७] सर्वतः संवृतः शैलो बभौ पुष्पमयो यथा ॥२०॥ [२३
भज्यमानमहासानुः सन्निलीनमहोरगः ।
N] चलभृङ्गमहासारै स्तदाभूदसमो गिरिः ॥२१॥ [N
पक्षिभिस्त्राणसंभ्रान्तैस्त्यज्यमानो ऽविदूरतः ।
N] रराज च स कान्तारश्च्युतस् सार्थादिवाध्वगः ॥२२॥ [N
पीड्यमानः स बलिना महेन्द्रस्तेन पर्वतः ।
N] रीतीर्निवर्तयामास काञ्चनाञ्जनराजतीः ॥२३॥ [२५

---

१. ल₂ ब म श—स्रवात् प्र० ।
रा—०वणेश्चापि ।
२. कै रा—०जुष्टानि । च—०ज्युष्टानि ।
३. श—शृंगे समुद्धूते ।
४. कै ल₁ ल₂ ब म श रा—
विघूर्णद्भिः ।
५. कै रा—‡०शबला प्रवृ० ।
अ भ च—शबलः प्र० ।
६. कै रा ल₁ ल₂ ब म श च—
‡पादपरिमुक्तेन ।
७. श—श्लोकार्धोऽयं २१ द्वादुत्तरं
पठितः ।
८. कै रा ल₁ ल₂ ब म श भ—
‡चलशृंगम० ।
९. कै रा अ ल₁ ल₂ ब म श च—
०दाभूत् स महागिरिः ।
१०. कै रा ल₁ ल₂ ब म—‡०स....
...दिवोर्ध्वगः । श—०स्वाराच्युतः
स दिवोर्ध्वगः ।
११. भ—०मानश्च ।
१२. अ रा भ—‡रीतिनिवर्त० ।
ब म श च—रीतीश्चिव० ।
१३. म—‡०राजती ।

२१ उ] तस्य व्याघूर्णमानस्य तरवस्तरुणाङ्कुराः । [N
१२पू ] मुमुचुः स्वरसं[1] दीप्तं नीलोत्पलसुगन्धिनः ॥२४॥ [२१ उ
स पादपरसैः[2] व्याप्तो[3] मिश्रः काञ्चनधातुभिः ।
N] परिक्षिप्तः शिखिनिभैः बभौ गैरिकधातुभिः ॥[4]२५॥ [२५
ततः संपीड्यमानेन पीड्यमानानि सर्वशः ।
N] गुहाविष्टानि[5] भूतानि विनेदुः विकृतं स्वरम् ॥२६॥ [N
स महासत्त्ववान् नादः शैलपीडानिमित्तजः ।
N] पृथिवीं पीडयामास दरीश्चोपवनानि च ॥२७॥ [N
भिद्यतेऽयं गिरिः दैत्यैरिति मत्वा मनस्विनः । [२६
N] त्रस्ता विद्याधराश्चैवमुत्पेतुः पतगैः सह ॥२८॥ [२७पू
पानभूमिगतं हित्वा हैम[6]राजतभाजनम् ।
N] पानानि च महार्हाणि करकांश्च हिरण्मयान् ॥२९॥ [२७ उ
भक्ष्यमुच्चावचं त्यक्त्वा माल्यानि विविधानि च ।
N] आर्षभाणि[7] च चर्माणि खड्गांश्च कनकाञ्चितान्[8] ॥३०॥ [२८
कृतकक्षगुणाः[9] क्षीबा[10] रक्तमाल्यानुलेपनाः ।
N] रक्ताक्षाः पुष्परागाक्षाः खं तदा प्रतिपेदिरे ॥३१॥ [२९
हार-नूपुर-केयूर-परिहार्यधराः स्त्रियः[11] ।

---

१. ल$_2$ श—सुरसं ।
२. कै—पादपरसैः। अ च—।पादपरसात्।
३. अ भ च—प्राप्तो ।
४. भ श—नास्ति ।
५. अ—गुहां विष्टानि ।
६. कै रा ल$_1$ ल$_2$ व म श भ च—हेमराजत० ।
७. कै रा ल$_1$ ल$_2$ व म श—आर्षभाणि ।
८. अ च—।कनकान्सरून् ।
भ—।कनकान्सरुन् ।
९. कै रा ल$_1$ ल$_2$ व म श—[illegible]पानगुण० ।
अ च—।कृतकक्ष गुणाः ।
१०. कै रा ल$_1$ ल$_2$ व म श—।०क्षीबरक्त० ।
११. कै श अ भ च—०धराः स्त्रियः ।
रा ल$_1$ ल$_2$ व म—०धराः स्त्रियः ।

N] विस्मितास्सहितास्तस्थुराकाशे रमणैस्सह ॥ ३२ ॥ [३०
दर्शयन्तो महाविद्या स्ते तु विद्याधरर्षभाः ।
N] सभिया स्तस्थुराकाशे वीक्षाञ्चक्रुश्च पर्वतम् ॥३३॥ [३१
शुश्रुवुश्च तदा शब्दमृषीणां भावितात्मनाम् ।
N] चारणानां च सिद्धानां स्थितानां विमलेऽम्बरे ॥३४॥ [३२
एष पर्वतसंकाशो हनूमान् मारुतात्मजः ।
N] तितीर्षति महावेगस्समुद्रं सरितां पतिम् ॥३५॥ [३३
रामार्थं रावणार्थं चै चिकीर्षन् कर्म दुष्करम् ।
N] समुद्रस्य परं पारं दुष्प्रापं प्राप्तुमिच्छति ॥३६॥ [३४
N] देवास्तं ददृशुस्सर्वे तैस्तैः सह महर्षिभिः ॥३७॥ [N
ऋषयस्सह गन्धर्वैस्सिद्धाश्च सह चारणैः ।
N] जातकौतूहलास्तस्थुस्तद्द्रष्टुं महदद्भुतम् ॥३८॥ [N
दुधुवे च स रोमाणि चकम्पे चाचलोपमः ।
N] ननाद सुमहानादं सुमहानिव तोयदः ॥३९॥ [३६
अनुरूपं च वृत्तं च लाङ्गूलं लोमभिश्चितम् ।
N] उत्पतिष्यन् स चिक्षेप पक्षिराज इवोरगम् ॥४०॥ [३७
तस्य लाङ्गूलमाविद्धमतिवीर्यस्य पृष्ठतः ॥
N] ददृशे गरुडेनेव धूयमानो महोरगः ॥४१॥ [३८

---

१. कै रा भ—विपुलांबरे ।
अ च—†विपुलोंबरे ।
ल१, ल२ म श—विपुलेम्बरे ।
२. क१ च—हनुमान् ।
३. भ—वा ।
४. अ भ च—दुष्प्रापं ।
५. कै रा अ ल१, ल२ ब म थ—
†दुद्रुवे ।
६. ल१, ल२ ब म श—†चाचलोत्तमः ।
भ—च महार्णवः ।
७. कै—†ननादुः ।
८. कै—†वर्णं ।
९. म—†पूयमानो । अ च—†भूयमानो ।
१०. कै रा ल१, ल२ ब म—†हतोरगं ।

बाहू संस्तम्भयामास महापरिघसन्निभौ ॥४२॥
N] समादधे[1] कपिः कट्यां चरणौ संचुकोचे[2] च ॥४३॥ [३९
स संहृत्य[3] भुजौ श्रीमांस्तथैव च शिरोधराम् ।
N] ओजस्सत्त्वं तथा वीर्यमाविवेशातिवीर्यवान् ॥४४॥ [४०
N] वैनतेयस्य सदृशो बभौ चाप्यनिलात्मजः ॥४५ ॥ [N
मार्गमालोकयद्दूरादूर्ध्वं[4] प्रणिहितेक्षणः ।
N] रुरोध हृदये प्राणानाकाशमभिपेदिवान् ॥४६॥ [४१
पद्भ्यां दृढमवस्थानं कृत्वा स कपिकुञ्जरः ।
१८] विकुञ्च्य कर्णौ मतिमानुत्पतिष्यन् महाबलः ॥४७[5]॥ [४२पू
तमुत्पतन्तं वेगा[6]त्तु नगास्ते नगरोहिणः ।
N] सस्कन्धविटपास्सर्वे समुत्पेतुस्समन्ततः ॥४८॥ [४८
कपीन्द्रः पथि[7]जातांस्तान् पादपान् पुष्पशालिनः ।
N] उद्वहन्नूरुवेगेन[8] जगाम विमलेऽम्बरे ॥४९॥ [४९

---

१. रा—† ददे: । अ च—दधौ ।
२. कै अ च—† संचुकोप च ।
भ—शंकुवत्तरन् ।
३. अ च—समाहृत्य ।
भ—संहृत्य ।
४. कै अ च—०वूर्ध्वप्रणिहि ० ।
५. इत ऊर्ध्वं सर्वत्र कोशेषु ६०तमसर्गस्था 'वानरान्' इत्यारभ्य 'आनयिष्यामि' इत्यन्ता सार्द्धपञ्चश्लोकी पुनःपठिता । तत ऊर्ध्वं चाधोङ्कितःसार्द्धश्लोकः पुनरुक्तपाठसङ्क्रमनाय स्यात्—
एवमुक्त्वा तु[1] हनु[2]मान् वानरान् वानरोत्तमः ।
उत्पपात च वेगेन वेगं[3] वेगेन धार[3]यन् ॥
सुप[4]र्णमिव चात्मानं मेने स कपिकुञ्जरः ।
६. रा—वेगेन ।
७. अ—समं काष्टिकांस्तान् ।
च—† सकन्धां काष्ठिकांस्तान् ।
भ—† स काययष्टिकांस्तान् ।
८. रा—उद्वहनुरुवेगेन ।

---

१. रा—च । २. म—हनूमान् । ३. कै रा $ल_1$, $ल_2$ ब म श अ च—वेगवानभिधारयन् । ४. भ—सुपर्णं इव ।

ऊरुवेगोद्धता वृक्षा मुहूर्तं कपिमन्वयुः ।
N] प्रस्थितं दीर्घमध्वानं सबन्धुमिव बान्धवाः ॥५०॥ [५०
तमूरुवेगोन्मथिताः सालचन्दनचम्पकाः ।
N] अनुजग्मु र्हनूमन्तं पौरा इव महीपतिम् ॥५१॥ [५१
सुपुष्पिताग्रैः शिखरैः पादपैरन्वितो हरिः ।
N] हनूमांस्तोयदाकारो बभूवाद्भुतदर्शनः ॥ ५२ ॥ [५२
सारवन्तश्च वृक्षा ये निपेतु र्लवणाम्भसि ।
N] भयादिव महेन्द्रस्य दानवा वरुणालये ॥५३॥ [५३
स नानाकुसुमैः कीर्णः कपिः कुड्मलकोमलैः ।
N] शुशुभे मेरुसंकाशः खद्योतैरिव पर्वतः ॥५४॥ [५४
विमुक्तास्तस्य वेगेन मुक्तपुष्पाश्च ते द्रुमाः ।
N] अवतीर्यंत सलिले निवृत्तास्सुहृदो यथा ॥५५॥ [५५
लाघवेनोपपन्नं च प्लवमानं महार्णवे ।
N] द्रुमाणां विविधैः पुष्पैः कपिं वायुरवाकिरत् ॥५६॥ [५६
पुष्पौघेणानुबन्धेन नानावर्णेन वानरः ।

---

१. भ—कपिसत्तमम् ।
२. ल₂ म श—| बान्धवः ।
व—बन्धवः ।
३. श—०तमुरुवेगो० ।
रा—वेगोन्मिषिताः ।
४. अ—| ०चन्दनचंचुषु ।
कै रा ल₁ ल₂ ब म श भ च—
सालचन्दनचण्यकाः ।
५. कै रा श—महापतिं ।
६. अ च—हनुमांस्तोय० ।
७. कै ल₁ म—वर्षणालये ।
८. अ च—नानाकुसुमितैः कीर्णः ।
कै रा ल₁ ल₂ ब म श—
नानाकुसुमसंकीर्णः ।
९. कै रा—कपिः कोमलको० ।
अ च—कपिकुञ्जरको० ।
भ—| कपिः कुन्तलको० ।
ल₁ ल₂ म—| कपिकुड्मलको० ।
१०. रा—| खद्योत इव ।
११. ल₁—अवतीर्य तु ।
१२. कै रा ल₁ ल₂ ब म श—पुष्पौघेन ।

N] बभौ मेघ इवोच्चत्वे सेन्द्रचापतडिद्गुणः ॥५७॥ [५८
प्रचकर्ष महामेघं सपुरोवातविद्युतम् ।
N] प्रबलः कपिराजस्य वायुर्मार्गमवाश्रितः ॥ ५८ ॥ [N
समुत्पतित-मेघस्य समुद्धूत-जलस्य च ।
N] सममासीत्तदा रूपं सागरस्याम्बरस्य च ॥५९॥ [N
तस्य वायूद्धतैः पुष्पैः शरीरं शुशुभे हृतम् ।
२१] ताराभिरभिरामाभी रुचिराभि रिवाम्बरम् ॥६०॥ [N
तस्याम्बरगतौ बाहू शुशुभाते प्रसारितौ ।
२२] पर्वतादभिनिष्क्रान्तौ पञ्चास्याविव पन्नगौ ॥६१॥ [६०
पिबन्निव बभौ चायं सोर्मिजालं महार्णवम् ।
N] विभिन्दन्निव चाकाशं ददृशे स महाकपिः ॥६२॥ [६१
तस्य विद्युत्प्रभाकारे वायुवेगानुसारिणः ।
N] नयने विप्रकाशेते पर्वतस्थाविवानलौ ॥६३॥ [६२
पिङ्गे पिङ्गाक्षमुख्यस्य चक्षुषी परिमण्डले ।
२३] बृहती संप्रकाशेते शनैश्चरबुधाविव ॥ ६४ ॥ [६३
मुखं नासिकया तस्य नम्रया ताम्रया बभौ ।
N] यथा नभसि सन्ध्यायास्ताम्रं सूर्यस्य मण्डलम् ॥६५॥ [६४

---

१. भ—इवोद्यन्वै ।
२. ल१ ल२ म श—महावेगं ।
ब—‡ महामेगं ।
३. कै रा ल१ ल२ ब म श—सपुरोयात० ।
४. कै ल१ ब म श अ च—०गंमिवाश्रितः ।
५. ब—०तितवेगस्य ।
६. कै—०तबलस्य ।
म—०तं जलस्य ।
७. कै—† ०रयासुरस्य ।
८. अ—वायूद्धृतैः ।
९. कै—नतं ।
१०. अ भ च—वापि ।
११. ल१—† चक्षुषः ।
श—‘चक्षुषी’ त्यारभ्य ७०॥स्थ-‘तस्ये’ त्यन्तः पाठो नास्ति ।
१२. अ भ च—ताम्रया ।

लाङ्गूलं सहसा विद्धं प्लवमानस्य शोभते ।
२५] अम्बरे वायुपुत्रस्य शक्रध्वज इवोच्छ्रितः ॥६६॥ [६५
लाङ्गूलचक्रेण महान्[1] शुक्लदंष्ट्रो हि वानरः ।
N] व्यरोचत महाप्राज्ञः परिवेषीवे[2] भास्करः ॥६७॥ [६६
स्फिग्देशेनातिताम्रेण रराज स महाकपिः ।
२६] महता दारितेनेव गिरिर्गैरिकधातुना[3] ॥६८॥ [६७
तस्य वानरसिंहस्य प्लवमानस्य सागरम् ।
२४] कक्षान्तरगतो[4] वायु र्जीमूत इव गर्जति ॥६९॥ [६८
खे यथैव[5] पतन्त्युल्का उत्तरार्धाद्विनिर्स्सृताः[6] ।
N] सानुमन्तश्च दृश्यन्ते तथा स कपिकुञ्जरः ॥७०॥ [६९
पतत्पतङ्ग[7]संघातै र्व्यायर्तः[8] शुशुभे कपिः ।
२७] प्रवृद्ध[9] इव मातङ्गः कक्षया[10] लम्बमानया ॥७१॥ [७०
उपरिष्टा[11]च्छरीरस्य छायया चावगाढया ।
N] सागरेन्तः[12] समाविष्टा स कपिनौरिवा[13]भवत् ॥७२॥ [७१

---

१. कै रा ल$_1$ ल$_2$ ब म श—महानुरु० ।
२. कै रा ल$_1$, ल$_2$ ब म—परिवेशीव ।
३. कै—०धातुभिः ।
४ कै—†कक्षयाते सतो ।
रा ल$_1$, ल$_2$ ब म श—कक्षयान्तर्गतो ।
अ च—कक्षायान्तर्गतो ।
५. कै—पतन्ति यथैवोल्का ।
६. ल$_2$—विनिःसृताः ।
अ—† विनिःश्रिताः ।
७. ल$_2$ म—पतङ्गिर्नागसंघा० ।
कै रा ल$_1$, ब श—पतङ्गिर्नगसंघा० ।
अ च—पतत्पतंगसंघा० ।
८. कै रा ल$_1$, ल$_2$ ब म श—वीर्यतः ।
९. म—प्रवृत्त ।
१०. ब—कक्ष्यया ।
११. कै रा ल$_1$, ल$_2$ ब म श—† उपविष्टः शरीर० ।
अ च—उपविष्टाच्छरीर० ।
१२. कै श अ च—सागरे च समा० ।
श—०न्तः समाविष्टः ।
रा भ—च समाविष्टः ।
१३. कै—† नौविवाभवत् ।

यं यं देशं समुद्रस्य जगाम स महाकपिः ।
२८| स स तस्याङ्गवातेन सोन्माद इव लक्ष्यते ॥७३॥ [९२
प्लवमानं समालक्ष्य भुजगाः सागरालयाः ।
२९] व्योम्नि तं हरिशार्दूलं सुपर्णमिव मेनिरे ॥७४॥ [७९
सागरस्योर्मिजालानां महतां शैलवर्ष्मणाम् ।
N] प्रतिघ्नंश्च महावेगं पुप्लुवे स महाकपिः ॥७५॥ [७३
कपिवातश्च बलवान्मेघवातश्च निस्सृतः ।
N] सागरं मेघनिर्घोषं कम्पयामासतु भृशम् ॥७६॥ [७४
विकर्षन्नूर्मिजालानि बृहन्ति लवणाम्भसि ।
N] पुप्लुवे कपिशार्दूलो विकर्षन्निव रोदसि ॥७७॥ [७५
मेरुमन्दरसङ्काशानुद्धूतान्स महार्णवे ।
N] अतिक्रामन्महावेगस्तरङ्गान् गणयन्निव ॥७८॥ [७६
तस्य वेगसमुत्कृष्टं जलं स जलदो (?दं) यथा ।
अम्बरस्थे(?स्थं) विबभ्राज शारदाभ्रमिवाततम् ॥७९॥ [७७
तिमिनक्रझषाः क्रुद्धा दृश्यन्ते विविधास्तथा ।
N] छाया वानरसिंहस्य जले चारुतराभवत् ॥८०॥ [७८
श्वेताभ्रघनराजीव वायुपुत्रानुगामिनी ।
N] तस्य सा शुशुभे छाया वितता लवणाम्भसि ॥८१॥ [८१

---

१. ब म—सहसा कपिः ।
२. कै ल१ ल२ ब म च—†०गवातेन ।
३. अ च—‡ रोदसीं ।
४. कै रा ल१ ल२ ब म—
० काशानुद्धूतान् ।
५. कै रा ल१ ल२ ब म—
मेघसमुत्कृष्ट० । अ—वेगे समुत्कृ० ।
६. भ—अंतर० ।
७. कै रा ल१ ल२ ल२ ब म श—
० मिवाततं ।
८. अ भ च—चारुतयाभ० ।
९. कै ल१ ल२ ब म श—
श्वेताभ्रा घनराजी० ।
१०. कै ल१ ल२ ब म श—
छाया च शुशुभे तस्य ।

शुशुभे स महातेजा महाकायो महाकपिः ।
N] वायुमार्गे[1] निरालम्बे पक्षवानिव पर्वतः ॥[2]८२॥ [८२
यतः[3] स[3] याति बलवान्वेगेन कपिकुञ्जरः[4] ।
N] तेन मार्गेण सहसा द्रोणीकृत इवार्णवः ॥ ८३ ॥ [८३
६१ ङ] आपाते पक्षिसंघानां[5] पक्षिराज इवाव्रजत् ।
N] हनुमान्मेघजालानि प्राकर्षन्मारुतो यथा ॥८४॥ [८४
पाण्डुरारुणवर्णानि नीलमाञ्जिष्ठकानि च ।
६२] कपिना कृष्यमाणानि महाभ्राणि[6] चकाशिरे ॥८५॥ [८५
प्रविशन्नभ्रजालानि[7] निपतंश्च पुनः पुनः ।
५६] प्रच्छन्नश्च प्रकाशश्च चन्द्रमा इव लक्ष्यते ॥८६॥ [८६
प्लवमानं तु तं दृष्ट्वा समुद्रे प्लवगर्षभम् ।
N] मुमुचुः पुष्पवर्षाणि देवतास्तस्य मूर्धनि ॥८७॥ [८७
न तताप तदा सूर्यः प्रयातं वानरर्षभम् ।
N] सिषेवे[8] च सुखो वातो रामकार्यार्थसिद्धये ॥८८॥ [८८
ऋषयस्तुष्टुवुश्चैनं प्लवमानं विहायसि ।
N] जगुश्च[9] देवगन्धर्वाः प्रशशंसुः प्लवङ्गमम् ॥ ८९ ॥ [८९
नागा यक्षाः सुपर्णाश्च रक्षांसि विबुधाः[10] खगाः ।
N] प्रेक्षकास्ते कपिवरं सहसा चोपचक्रमुः[11] ॥ ९० ॥ [९०
तस्मिन्प्लवगशार्दूले प्लवमाने विहायसि ।

---

१. म—वायुसर्गे ।
२. ल१—नास्ति ।
३. कै रा ल१ल२ब म श—येन स्म ।
४. ल१—नास्ति ।
५. ब—पक्षिराजातां ।
६. रा अ म च—† महामात्राणि का० ।
७. कै रा अ ल१, ल२ ब म श— प्राविशच्च० ।
८. भ—† सिषेव ।
९. कै रा ल१, ल२ ब म श— † जग्मुश्च ।
१०. रा श—विविधाः ।
११. अ म च—व्युपचक्रमुः ।





स०७,१] इक्ष्वाकुकुलमानार्थी चिन्तयामास सागरः ॥९१॥ [९१
साहाय्यं वानरेन्द्रस्य यद्यहं वै हनूमतः ।
२] करिष्यामि भविष्यामि न च वाच्यो विवक्षताम्॥९२॥ [९२
अहमिक्ष्वाकुनाथेन सगरेण विवर्धितः ।
३] [1]ऐक्ष्वाकुसचिवश्चायं नावसीदितुमर्हति ॥ ९३ ॥ [९३
तथा मया विधातव्यं विश्राम्येत यथा कपिः ।
४] शेषं च मयि विश्रान्तः सुखेनाधिगमिष्यति ॥९४॥ [९४
इति कृत्वा मतिं साध्वीं समुद्र[2]श्छन्नमम्भसा ।
५] हिरण्यनाभं मैनाकमुवाच गिरिसत्तमम् ॥ ९५ ॥ [९५
त्वमिहासुरसङ्घानां पातालतलवासिनाम् ।
६] देवै[3]राज्ञा(?जा)गिरिश्रे[4]ष्ठ [5]प्रतिघाः(?घः)सन्निवेशितः९६[९६
त्वं ह्येषां [6]ज्ञातवीर्याणां [7]सँमहीतलचारिणाम् ।
७] पातालस्याप्रमेयस्य द्वारमावृत्य तिष्ठसि ॥९७॥ [९७
तिर्यगूर्ध्वमधश्चैव शक्तिस्ते शैल वर्धितुम् ।
८] तस्मात्सन्देशयामि [8]त्वामुत्तिष्ठ नगसत्तम ॥ ९८ ॥ [९८
य एष कपिशार्दूलो मामुपेष्यति [9]वेगवान् ।
९] [10]हनुमान्नाम कार्यार्थी भीमकर्मा खमाप्लुतः ॥ ९९ ॥ [९९
अस्य साह्यं मया देयमिक्ष्वाकुकुलवर्तिनः ।

---

१. अ भ च—इक्ष्वाकु० ।
२. कै रा ल१ ल२ ब म—
 † समुद्रच्छन्न० ।
३. श—देवराजः ।
४. कै रा ल१ ल२ ब म श अ—
 गिरिश्रेष्ठः ।
५. कै रा ल२ ब—† प्रतिष्ठा ।
 ल१ म —प्रतिज्ञा । श—†प्रतिज्ञः ।
 अ—परिघः । च—† प्रतीपः ।
६. श—† ज्ञातिवीर्या० ।
 भ—† ज्ञानवीर्या० ।
७. ल१—पातालतलचा० ।
८. कै ल१ ल२ ब म श—स्वसु० ।
९. ल२—वीर्यवान् ।
१०. ल२—हनूमान् ।

१०] मम हीक्ष्वाकवः पूज्याः परं पूज्यतमस्ततः ॥१००॥ [ १००
कुरु साचिव्यमस्माकं न वा कालात्ययो भवेत् ।
११] कर्तव्यं ह्यकृतं कार्यं सतां मैन्युमुदीरयेत् ॥१०१॥ [ १०१
सलिलादूर्ध्वमुत्तिष्ठ विश्रमेत यथा कपिः ।
१२] अस्माकमतिथिश्चैर्ष पूज्यश्च प्लवतां वरः ॥१०२॥ [ १०२
चामीकर इवाभाति देवगन्धर्वपूजितः ।
१३] हनुमांस्त्वयि विश्रान्तः पुनः शेषं प्रयास्यति॥१०३॥ [१०३पू
काकुत्स्थस्यानृशंसस्य मैथिल्याश्च विवासनम् ।
१४] श्रमं च प्लवगेन्द्रस्य समीक्ष्योत्थिँतुमर्हसि ॥१०४॥ [ १०४
हिरण्यनाभो मैनाको निशम्य लवणाम्भसः ।
१५] उत्पपात जलात्तूर्णं नानाद्रुमलतावृतः ॥ १०५ ॥ [१०५
स सागरजलं भित्त्वा बभूवाभ्युत्थितस्तदा ।
१७] यथा जलधरं भित्त्वा दीप्तरश्मिर् दिवाकरः ॥१०६॥ [ १०६
स महात्मा मुहूर्तेन उत्थितः सलिलाश्रितः ।
N] दर्शयामास शृङ्गाणि सागरेण नियोजितः ॥१०७॥ [ १०७
शातकौम्भमयैः शृङ्गैः शुशुभे स महागिरिः ।

---

१. कै ल$_{2}$ ब श—वः ।
रा ल$_{1}$ भ च—नः ।
२. श—हि कृतं ।
३. श—मर्त्यमुदी० ।
४. कै रा ल$_{1}$, ल$_{2}$ ब म श—
०कमपि चैवैष ।
५. कै रा ल$_{1}$, ल$_{2}$ ब म श अ च—
हनुमांस्तव ।
६. रा अ भ च—गमिष्यति ।
७. श—०क्ष्योद्वर्तुम० ।
८. अ भ च—० तावृतः ।
९. कै—
"यथा" इत्यारभ्य "सलिलाश्रितः"
इत्यन्तः पाठः प्रान्तेऽपरहस्तेन ।
ल$_{1}$ म श—नास्ति ।
१०. ल$_{2}$ ब—सलिलादुत्थितस्तदा ।
भ—०तः सलिलावृतः ।
११. कै—शातकुम्भमयैः ।
१२. कै ल$_{1}$, ल$_{2}$ ब म श अ—
भ्राजमानैः स्वयंप्रभैः ।

१८] आदित्योदयसंकाशैरुल्लिखद्भिरिवाम्बरम् ॥१०८॥ [१०८
तस्य जाम्बूनदैः शृङ्गैः पर्वतस्य समुत्थितैः ।
१९] आकाशं शस्त्रसंकाशमभवत् काञ्चनप्रभम् ॥[2]१०९॥ [१०९
जातरूपमयैः शृङ्गैर् भ्राजमानैः स्वयंप्रभैः ।[2]
२०] आदित्यशतसंकाशः सोऽभवद्गिरिसत्तमः ॥११०॥ [११०
समुत्थितमसङ्गेन हनुमानग्रतः स्थितम् ।
२१] मध्ये लवणतोयस्य विघ्नोयमित्यमन्यत ॥१११॥ [१११
स तमुत्थितमत्यर्थं महावेगो महाकपिः ।
२२] तरसा छादयामास जीमूत इव मारुतिः ॥११२॥ [११२
स तदा छादितस्तेन कपिना पर्वतोत्तमः ।
२३] दृष्ट्वा तस्योरुवेगं च जहर्ष च ननन्द च ॥११३॥ [११३
स तमाकाशगम्भीरमाकाशे च समुत्थितम् ।
२४] स्थितो हृष्टमना वाक्यमब्रवीत् पर्वतः कपिम्॥११४॥ [११४पू
४७उ] हिरण्यनाभो नाम्नाहं काञ्चनः पर्वतः कपे ।
४८पू] मयि विश्रम भद्रं ते त्वदर्थमहमुत्थितः ॥ ११५ ॥ [N
N] अब्रवीच्च[2] हनूमन्तं काञ्चनः पर्वतोत्तमः । [N

---

१. रा—आदित्यशतसं० ।
ल₂ ब—आदित्यचयसं० ।
२. कै रा ल₁ल₂ब म श—नास्ति।
३. ल₁ब म श अ च—हनूमान० ।
४. अ भ च—० मिति मन्यते ।
५. अ भ च—तमुच्छ्रित० ।
६. कै रा ल₁ल₂अ भ च—उरसा ।
७. अ भ च—जहर्ष ।
८. रा—ननर्द ।
९. कै रा ल₁ल₂ ब म श अ च—पर्वतोत्तमः ।
१०. रा ल₂ ब—
“ मयि ” इत्यारभ्य “ पर्वतोत्तमः ” इत्यन्तः पाठो नास्ति ।
११. कै रा ल₁ल₂ब म श अ च—० हनुमतः ।
१२. भ—अब्रवीत्तं ।

२८पू ] धारयन्मानुषं रूपं स्वे एवं शिखरे स्थितः ॥११६॥ [११४उ

२९उ ] दुष्करं कृतवान्कर्म त्वमिदं वानरोत्तम ।

३०पू ] निपत्य मम शृङ्गेषु विश्राम्य त्वं यथासुखम् ॥११७॥ [११५

२५ उ] राघवस्य कुले तात उदधिः परिवर्धितः ।

स त्वां रामहिते युक्तं प्रत्यर्चयति सागरः ॥११८॥ [११६

२६] कृते च प्रतिकर्तव्यमेषा तात सतां गतिः ।

योऽयं प्रत्युपकारार्थी त्वं नः सम्मानमर्हसि॥११९॥[११७

२७] त्वन्निमित्तमनेनाहं बहुमानात्प्रचोदितः ।

उत्तिष्ठ गिरिशार्दूल त्वयि विश्राम्यतु क्षणम् ॥१२०॥ [११८

२८] योजनानां शतं दूरं कपिरेष खमाप्लुतः ।

२९पू ] तव सानुषु विश्रान्तस्ततः शेषं गमिष्यति ॥१२१॥ [११९

३०उ ] तदिदं गन्धवत्स्वादु कन्दमूलफलं बहु ।

आस्वाद्यैतद्धरिश्रेष्ठ विश्रान्तोऽभिगमिष्यसि ॥१२२॥[१२०

---

१. कै रा ल$_1$,ल$_2$ब म श—रमस्व। भ—स्वमेव।

२. ल$_1$ ब म श अ—विश्रम। ल$_2$—‡ विश्रम्य।

३. कै रा ल$_1$,ल$_2$ब म श अ च—जातो।

४. कै रा ल$_1$, ल$_2$ म श च—मुदा वः। ब—सागरैः।

५. कै रा ल$_1$, ल$_2$ ब म श अ—परिवर्तितः।

६. ल$_1$ श च—† त्वं।

७. कै रा ल$_1$, ल$_2$ ब म श च—प्रत्यर्थयति। च—प्रत्यर्थयति।

८. कै रा ल$_1$, ल$_2$ ब श—वृत्येव।

९. कै रा ल$_1$ ल$_2$ म श च—परिकर्तव्यमेषां। ब—०व्यमेषां। अ भ—प्ररिकर्तव्य०।

१०. भ—सोऽयं।

११. अ भ च—त्वत्तः सम्मानमर्हति।

१२. भ—‡ विश्रम्य च।

१३. ल$_2$—‘ तव ’ इत्यारभ्य ‘ ०भिगमिष्यसि’ इत्यन्तः पाठो नास्ति।

१४. ल$_1$ ब म श—शुभं।

१५. भ—“ ०भिगमिष्यसि ” इत्यारभ्य “ ०परिग्रहः” इत्यन्तः पाठः—प्रान्तेऽपरहस्तेन।

३१] अस्माकमभिसम्बन्धः कपिश्रेष्ठ महांस्त्वयि ।[1]
प्रख्यातस्त्रिषु लोकेषु महागुणपरिग्रहः ॥१२३॥ [१२१

३२] वेगवन्तः प्लवन्ते ये प्लवगा मारुतात्मज ।
तेषां मुख्यतमं[2] मन्ये त्वामहं कपिसत्तम ॥१२४॥ [१२२

३३] अतिथिः प्रतिपूजार्हः[3] प्राकृतोपि विजानता ।[4]
धर्मं जिज्ञासमानेन किम्पुनर्यादृशो भवान् ॥[5]१२५॥ [१२३

३४] त्वं हि देववरिष्ठस्य मारुतस्य महात्मनः ।
पुत्रस्तस्यैव वेगेन सदृशः कपिकुञ्जर । [१२४

३५] पूजिते[6] त्वयि सर्वात्मा पूजां प्राप्नोति मारुतः ॥१२६॥ [१२५पू

३६उ] एवमुक्तस्तु हनुमान्[7] सुनाभेन महात्मना ।
अन्तरिक्षगतः श्रीमान्मारुतस्यात्मसम्भवः ॥१२७[8]॥ [N

३७] स तं दृष्ट्वा महावीर्यं पर्वतं मेघभूषितम् ।
मणिरत्नाकरं दिव्यं सुनाभमिदमब्रवीत् ॥१२८॥ [N

३८] समुद्रस्याप्रमेयस्य महामकरसङ्कुले[9] ।
किं त्वमन्तर्जले वीर विगाहे ब्रूहि कारणम् ॥१२९॥ [N

३९] एवमुक्तः शुभं वाक्यं सुनाभः पर्वतोत्तमः । [N
प्रत्युवाच हनूमन्तं शृणु चाप्यत्र कारणम्॥१३०॥[10] [१२५उ

---

१. रा $ल_2$ ब अ च—०कमपि सं० ।
$ल_2$—पर्वतानामपि सं० ।
२. $ल_2$—मध्यतमं ।
श—० मध्यतमं ।
३. म श च—प्रतिपूज्यार्हः ।
४. भ—नास्ति ।
५. भ—नास्ति ।
६. कै—+ पूजितं ।
७. म—हनूमान् । भ—भगवान् ।
८. $ल_1$—नास्ति ।
९. कै रा $ल_1$,$ल_2$ ब म श अ च—
महामकरकुंडले ।
१०. रा $ल_1$—नास्ति ।

४०] पुरा कृतयुगे तात पर्वताः पक्षिणोऽभवन् ।
ते व्रजन्ति दिशस्सर्वा गरुडानिलरंहसः ॥१३१॥ [१२६

४१] ततस्तेषु प्रयातेषु देवसङ्घा महर्षिभिः ।
भूतानि च भयं जग्मुस्तेषां पतनशङ्कया[1] ॥१३२॥ [१२७

४२] ततः क्रुद्धः सहस्राक्षः पर्वतानां पुरन्दरः ।
पक्षांश्चिच्छेद वज्रेण तत्र तत्र सहस्रशः ॥१३३॥ [१२८

४३] स मामुपगतः क्रुद्धो वज्रमुद्यम्य देवराट् ।
ततोहं सहसाक्षिप्तः[2] श्वसनेन महात्मना ॥१३४॥ [१२९

४४] अस्मिंल्लवणतोये च प्रक्षिप्तः प्लवगोत्तम[3] ।

४५पू] गुप्तः पक्षैस्समस्तैश्च तत्र पित्रास्मि रक्षितः । [१३०

४८ उ] ततोहं मानयामि त्वां मान्यो हि मम मारुतः ॥१३५॥ [१३१पू

एवमस्मत्प्रियो बन्धुः कपिमुख्य[4] महागुण[5] ।
एष मे त्वयि संबन्धः कृतः कपिवरोत्तम[6] ॥१३६॥ [१३१उ

४९] अस्मिन्नेव च[7] संबन्धे सागरस्य ममैव च ।
प्रीतिं प्रीतमनाः कर्तुं त्वमर्हसि महाबल[8] ॥१३७॥ [१३२

५०] श्रमान्मोचय चात्मानं मान्यस्त्वं कपिकुञ्जर[9] ।
प्रीतिं च बहुमन्यस्व प्रीतोस्मि तव दर्शने ॥१३८॥ [१३३

५१] एवमुक्तः कपिश्रेष्ठस्तं नगोत्तममब्रवीत् ।

५२ उ] प्रीतोस्मि कृतमातिथ्यं त्वया मे पर्वतोत्तम । [१३४

---

१. कै—पातनशंकया ।
रा—+ पतनसंख्यया ।
२. म—तेन ।
३. कै रा—+ प्लवगोत्तमः ।
४. ल₁—कपिमुख्यो ।
५. भ—महात्मतः ।
६. कै अ भ—कपिवरोत्तमः ।
७. ल —तु संब० ।
अ भ च—गते कार्ये ।
८. कै—महाबलः ।
९. कै ल₁ ब म श—कपिकुञ्जरः ।

त्वरे च त्वरिते कार्ये कालश्चाप्यतिवर्तते ॥ १३९॥ [१३५पू

५३] क्रमिष्यतो प्रतिज्ञा मे कृता च कपिसन्निधौ ।
कर्तव्ये सागरजले नान्तरा स्थेयमित्युत ॥१४०॥ [१३५उ

५४] नाहं स्थास्यामि वै तस्मात्त्वयि पर्वतसत्तम ।
संस्पृशाम्यहमङ्गुल्या माननीयो भवानिति ॥१४१॥ [N

५५] इत्युक्त्वा पाणिना शैलमालभ्य हरिपुङ्गवः ।
N] जगामाकाशमाविश्य वीर्यवान्वानरोत्तमः ॥१४२॥ [१३६

५६ उ] स पर्वतसमुद्राभ्यां बहुमानादवेक्षितः ।
५७पू] पूजितश्चोपपन्नाभि राशीभिरनिलात्मजः । [१३७
N] द्विगुणं तु कृतोत्साहं सोम्बरं समगाहत ॥१४३॥ [N

इत्यार्षे रामायणे किष्किन्धाकाण्डे मैनाकदर्शनं नाम
एकषष्टितमः सर्गः ॥ ६१ ॥

---

१. कै—च कार्यकालो मा।
ल१ ल२ ब म श—
च कार्यकालो मा०।
रा—च कार्यकालो मा०।
च—स्वकार्यकालो मां०।

२. कै—महच्चाप्यति०।
ल१ल२ब म श-महांश्चाप्यति०।
रा च—०महश्चाप्यति०।

३. ब ल२—क्रमिष्यतः।

४. ब ल२—तत्तुले। ब—तत्तले।
ल२—उत्तले। भ—वर्तव्ये।

५. कै ल१ म श—नास्ति।

६. कै रा ल१ ल२ ब म श अ च—
मानयन् भगवानिति।

७. म—नास्ति।

८. ल२ ब म श—किश्किंदाका०।

९. भ—मैनाकवाक्यं।

[वं०-७] = [द्विषष्टितमः सर्गः] =[दा० सु० कां०-१]

अथोर्ध्वं दूरमुत्क्रम्य हित्वाचलमहार्णवौ ।

N] पितुः पन्थानमास्थाय[1] जगाम विमलेऽम्बरे[2] ॥१॥ [१३८

भूयश्चोर्ध्वगतिं प्राप्य गिरिं तमवलोकयन् । [१३९पू

N] जगामाकाशमाविश्य[3] वेगेन गरुडो यथा ॥२॥ [N

वायुपुत्रो निरालम्बे[4] जगाम विमलेऽम्बरे ॥३॥ [१३९उ

N] तद्द्वितीयं हनुमतो[5] दृष्ट्वा कर्म सुदुष्करम् ।

प्रशशंसुस्सुरास्सर्वे सिद्धाश्च परमर्षयः ॥४॥ [१४०

६६] देवताश्चाभवंस्तुष्टास्तत्रस्थास्तस्य कर्मणा ।

६७उ] काञ्चनस्य[6] सुनाभस्य सहस्राक्षश्च वासवः ॥५॥ [१४१उ

इदं[7] तु वचनं धीमान्परितोषस्य लक्षणम् ।

६८] सुनाभं पर्वतश्रेष्ठं स्वयमाह शचीपतिः ॥६॥ [१४२

हिरण्यनाभ शैलेन्द्र परितुष्टोऽस्मि ते भृशम् ।

६९] अभयं ते प्रयच्छामि तिष्ठ सौम्य यथासुखम् ॥७॥[१४३

साह्यं कृतं[8] ते सुमहद्विक्रान्तस्य हनूमतः ।

७०] क्रमतो योजनशतं निर्भयस्य भये सति ॥८॥ [१४४

रामकार्यार्थदूतस्य त्वया दाशरथेर्हरेः ।[9]

७१] सत्क्रियां कुर्वता शक्त्या तोषितोस्मि त्वया भृशम्[11] ॥९॥ [१४५

ततः[10] प्रहर्षमतुलं स लेभे पर्वतोत्तमः ।

---

१. अ च—०नमासाद्य ।
   भ—०नमादाय ।
२. रा श—० ऽम्बरे ।
३. रा—० माविश्य ।
४. ल₂—निरालम्बो ।
५. भ—हनुमता कृतं ।
६. कै—कांचनश्च सुनाभश्च ।
   भ—समुद्रश्च सुनाभश्च ।
   ल₁—कांचनस्य सुरामस्य ।
७. भ—य इदं ।
८. भ—कथं ।
९. भ—रामस्येव हि तुल्येन याति दाशरथेः हरिः ।
१०. भ—दृढं ।
११. भ श—। त्वया ।

७२] देवतानां पतिं दृष्ट्वा परितुष्टं शतक्रतुम् ॥२०॥ [१४६
७३पू] सोपि[1] दत्तवरश्शैलो बभूवावस्थितस्ततः । [७३पू
N] हनुमांश्च[2] मुहूर्तेन व्यतिक्रम्य[3] च सागरम् ॥२१॥ [१४७
सर्ग६]ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
२] अब्रुवन्सूर्यसङ्काशां सुरसां नागमातरम्[4] ॥ २२ ॥ [१४८
अयं[5] वातात्मजः श्रीमान्प्लवते सागरोपरि ।
३] हनुमान्नाम तस्य त्वं मुहूर्तं विघ्नमाचर ॥२३॥ [१४९
राक्षसं रूपमास्थाय[6] सुघोरं पर्वतोपमम्[7] ।
४] दंष्ट्रा करालं पिङ्गाक्षं वक्त्रं कृत्वा नभः स्पृशत् ॥२४॥ [१५०
बलमिच्छामहे ज्ञातुं भूयश्चास्य पराक्रमम् ।
५] किं करिष्यत्युपायं वा विषादं वा गमिष्यति ॥२५॥ [१५१
एवमुक्ता[8] तु सा देवी दैवतैरभिसंस्कृता[9] ।
६] समुद्रमध्ये सुरसा बिभ्रती राक्षसं[10] वपुः ॥२६॥ [१५२
विकृतं च विरूपं च सर्वस्य च भयावहम् ।
७] प्लवमानं हनूमन्तमावृत्त्येदमुवाच ह[11] ॥२७॥ [१५३
भक्ष्यभूतः[12] प्रदिष्टस्त्वमीश्वरैर्वानरर्षभ[13] ।
८] अहं त्वा भक्षयिष्यामि प्रविशेदं ममाननम् ॥२८॥ [१५४

---

१. भ—स हि ।
२. भ—हनूमांश्च ।
३. अ भ च—व्यतिचक्राम ।
४. कै रा अ ल१ ब भ ल२ श च—नाम मातरं ।
५. ल१—¹ अथ ।
६. कै रा ल१ ब भ ल२ श—॰यमादाय ।
७. ल१—॰तोत्तमं ।
८. श—इत्युक्ता सुरसा ।
९. कै रा ल१ अ ब भ ल२ श च—॰तैरपि सत्कृता ।
१०. भ—राक्षसी ।
११. ल१ ल२—च ।
१२. कै रा ल१ अ ल२ भ च—भक्षभूतः ।
१३. कै रा ल१ अ ब ल२ श—॰रर्षभः ।

९पू ] एवमुक्तः सुरसया प्राञ्जलिर्वाक्यमब्रवीत्[1] [2]। [१५६

रामो दाशरथिर्नाम प्रविष्टो दण्डकं वनम् ।

१०] लक्ष्मणेन सह भ्रात्रा वैदेह्या चापि भार्यया ॥१९॥ [१५७

जनस्थाननिमित्तं च बद्धवैरस्य राक्षसैः ।

११] तस्य भार्या हृता सीता रावणेन यशस्विनी ॥२०॥ [१५८

तस्याः सकाशे[3] दूतोऽहं गच्छामि नृपशासनात्[4] ॥२१॥

१२] सा त्वमर्हसि[5] रामस्य साह्यं विषयवासिनी ॥२२॥ [१५९

अथवा[6] मैथिलीं दृष्ट्वा रामं च क्लिष्टकारिणम्[7] ।

१३] आगमिष्यामि ते वक्त्रं सत्यं प्रतिशृणोमि ते[8] ॥२३॥ [१६०

एवमुक्ता हनुमता सुरसा कामरूपिणी ।

१४] अब्रवीन्नातिवर्तेत[9] कश्चिद्वा वानरोत्तमं[10] ॥२४॥ [१६१

एवमुक्तस्सुरसया क्रुद्धो वानरपुङ्गवः ।

१५] अब्रवीत्कुरु वक्त्रं[11] त्वं येन मा निगलिष्यसि॥२५[12]॥ [१६४

इत्युक्त्वा सुरसा वक्त्रं चकार[13] दशयोजनम्[13] ।

१६] दशयोजनविस्तारो बभूव हनुमान्कपिः[14] ॥२६[15]॥ [१६५

---

१. भ—०लिर्वानरर्षभः ।

२. भ—अतः परमधिकः पाठः—

विषण्णवदनः श्रीमानिदं वचनमब्रवीत् ।

३. भ—समीपं ।

४. ल२—०शासनं ।

५. अ—अर्हस्य ।

६. भ—अथ तां ।

७. कै रा ल१ अ ब म ल२ श च—

रामस्याक्लिष्टकर्मणः ।

८. च—+ ०शृणोति मे ।

९. ल२—०वीन्नाति० ।

श—०वीन्मा निव० ।

१०. कै ब म ल२—वानरोत्तमः ।

११. भ—त्वं वक्त्रं येन मां निगारिष्यसि ।

१२. भ—नास्ति ।

१३. ल१—नास्ति ।

१४. भ—स महाकपिः ।

च—हनुमानपि ।

१५. ल१ मं—नास्ति ।

१७ उ] तं दृष्ट्वा मेघसङ्काशं दश[1]योजनमायतम् ।
१८] चकार सुरसा वक्त्रं विंशतिं योजनानि तु ॥ [2]२७॥ [ १६६
हनूमांश्च ततः क्रुद्धः त्रिंशद्योजन आयतः । [ १६७
१९] चकार सुरसा वक्त्रं चत्वारिंशत्[3]स्वमायतम् ।
बभूव हनुमान् क्रुद्धः पञ्चाशद्योजनोच्छ्रितः ॥२८॥ [ १६८
२०] चकार सुरसा वक्त्रं षष्टियो[4]जनमायतम् ।
तथैव हनुमान्कुर्वन्सप्त[5]तियोजनोच्छ्रितः ॥२९॥ [ १६९
२१] चकार सुरसा वक्त्रमशीतियोजनायतम् [6]।
बभूव स गिरिप्रख्यो नवतियोजनोच्छ्रितः ॥३०॥ [ १७०
२२पू] चकार सुरसा वक्त्रं शतयोजनमायतम् ॥ [7]३१॥ [ १७१
N] तं दृष्ट्वा व्यादितं वक्त्रं शतयो[8]जनमायतम् [9]।
दीप्तजिह्वं सुरसया तं[10]द्धोरं नरकोपमम् ॥३२॥ [१७२पू
२४] स संक्षिप्यात्मनः कायं जीमू[11]त इव मारुतिः ।
तस्मिन्मुहूर्ते हनुमान्बभूवाङ्गुष्ठमात्रकः ॥३३॥ [१७२उ
२५] सोभिपत्याशु तद्वक्त्रं निष्क्रम्यास्यान्महाजवः ।
अन्तरिक्षे स्थितः श्रीमान्प्रहं[12]सन्निदमब्रवीत् ॥३४॥ [ १७३
२६] प्रविष्टोहं च ते वक्त्रं दाक्षायणि नमोस्तु ते ।

---

१. म—[1] त्रिंशद्योजन० ।
म—०जनमुच्छ्रितं ।
२. कै रा ल१ अ ब म ल२ श च—नास्ति ।
३. रा अ ब ल२ श—०जनविस्तृतं ।
४. म—नास्ति ।
५. श—०मान्वीरः सप्तति ।
६. कै रा ल१ अ ब म ल२ श च—नास्ति ।
७. म—नास्ति ।
८. ल१—०जनविस्तृतं ।
९. म—नास्ति ।
१०. कै ल१ अ ब च—तद्धोरनर० ।
भ—तं घोरं नर० ।
११. ल१—[1]० जीतेन्द्र ।
१२. रा—श्रीमानिदं वचनम० ।

गमिष्ये यत्र वैदेही सत्यं चास्तु वचस्तव[1] ॥३५॥ [ १७४

२७] तं दृष्ट्वा वदनान्मुक्तं चन्द्रं राहुमुखादिव ।

अब्रवीत्सुरसा देवी स्वेन रूपेण वानरम् ॥३६॥ [ १७५

२८] अर्थसिद्ध्यै हरिश्रेष्ठ गच्छ सौम्य यथासुखम् ।

२९पू ] समानय च वैदेहीं राघवस्य[2] महात्मनः[3] ॥३७॥ [ १७६

तत्तृतीयं हनुमतो दृष्ट्वा कर्म सुदुष्करम् ।

२९ उ] साधु साध्विति भूतानि प्रशशंसुस्तदा हरिम् ॥३८॥ [ १७७

स सागरमनाधृष्यं मध्येन[4] वरुणालयम् ।

स६,१] जगामाकाशमाविश्य वेगेन गरुडो यथा ॥३९॥ [ १७८

स७,५८उ] सेवितं[5] वारिधाराभिः पतगैश्च[6] निषेवितम् ।

चरितं कौशिकाचार्यैः मारुतैरुपवीजितम्[7] ॥४०॥ [ १७९

५९] सिंह-शार्दूल-गरुडैस्तुरगोरग-वारणैः[8] ।

६०पू ] विमानैः संपतद्भिश्च विविधैस्समलंकृतम्[9] ॥ ४१[10] ॥ [ १८०

६४ उ] वज्राशनिनिपातैश्च[10] पावकैरुपशोभितम् "।

---

१. रा—सत्यमपि ।
ल२—सत्यमस्तु ।

२. भ—वचो यथा ।

३. अ भ च—राघवेण महात्मना ।

४. कै रा ल१ ब म ल२ श च—मध्ये स ।

५. भ—अत आरभ्य ४७ तमस्य पूर्वार्धं यावत् सर्वाणि सेवितमित्ये-तत्समानसम्बन्धानि पदानि सप्तम्ये-कवचने पठितानि । तद् यथा—सेविते निषेविते । चरिते ।

६. अ—पतंगैश्च ।

७. ल१—०तैरुपशोभितं ।
ब म श—०तैरुपजीवितं ।

८. रा ल२ ब म श—०वानरैः ।
भ—०गवारणैः ।

९. ल१—नास्ति ।

१०. भ—०निपाताच्च ।

११. ल१ नास्ति ।
भ—अतः परमाधिकः पाठः—
शोभते देवसंघानां देवराज इव व्रजन् ।

कृतपुण्यैर्महाभागैः [1]स्वमार्च्छद्भिरलङ्कृतम् ॥४२॥ [१८१

६२] वहता हव्यमत्यर्थं सेवितं चित्रभानुना ।
६० उ] [2]ग्रहचन्द्रार्कनक्षत्र-तारागणविराजितम् ॥४३॥ [१८२
६१पू] महर्षिगण-गन्धर्व-[3]नाग-[4]यक्ष-समाकुलम् ।
N] विविक्तं विमलं [5]दिव्यं विश्वावसुनिषेवितम् ॥४४॥ [१८३
५८ उ] सेवितं वारिधाराभिर्भुजगैश्च निषेवितम् ॥[6]४५॥ [N
देवराजगजाक्रान्तं सूर्यचन्द्रोपशोभितम् ।
N] विततं जीवलोकस्य [7]वितानं ब्रह्मनिर्मितम् ॥४६॥ [१८४
बहुभिस्सेवितं वीरैः विद्याधरगणैर्वरैः ।
N] हनुमान्मेघजालानि प्राकर्षन्मारुतो यथा ॥४७॥ [१८६
[8][9]गुरूणि सर्ववर्णानि रक्तपीतासितानि च ।
६३] [10]कपिनाकृष्यमाणानि महाभ्राणि चकाशिरे ॥४८॥ [१८७
प्रविशन्नभ्रजालानि निष्पतंश्च पुनः पुनः ।
६५] प्रच्छन्नश्च प्रकाशश्च चन्द्रमा इव लक्ष्यते ॥४९॥ [१८८
सर्ग ८] प्लवमानं ततस्तं तु सिंहिका प्रेक्ष्य वानरम् ।
१] मनसा चिन्तयामास प्रवृद्धा कामरूपिणी ॥५०॥ [१९०
सुदीर्घस्याथ कालस्य भविष्याम्य[11]हमाशिता ।

---

१. कै म श रा—स्वमार्च्छद्भि० ।
रा अ भ च—स्वर्गजिद्भि० ।
अ—स्वर्गजिद्भिरलंकृते ।
२. भ—ग्रहनक्षत्रचन्द्रार्कतारा० ।
३. कै रा ल१ अ ब म ल२ श च—नागपक्षि० ।
४. भ—यैते ।
५. नास्ति ।
६. कै रा ल१ अ ब म ल२ श च—०परिस्थितम् ।
७. कै श अ ब म ल२—विततं ब्र० ।
भ—विताने ब्र० ।
ल१ श—विततब्र० ।
८. ल१—०न्वाक्यजा० ।
९. भ—कालागुरुसव० ।
१०. कै श—†कपिराकृ० ।
११. रा ल२—†० माश्रिता ।
भ—०स्यातितर्पिता ।

८] इदं हि मे महद्भूतं चिरस्य वशमागतम् ॥५१॥ [१९१
इति सञ्चिन्त्य[1] सा तस्य छायामाशु[2] समाक्षिपत् ।
९] छायायां संगृहीतायां चिन्तयामास वानरः ॥५२॥ [१९२
समाक्षिप्तोऽस्मि[3] सहसा निरुद्ध इव पर्वतः ।
४] प्रतिलोमेन वातेन महापोत इवार्णवे ॥५३॥ [१९३
तिर्यगूर्ध्वमधश्चापि वीक्ष्य(क्ष)माणस्ततस्ततः[4] ।
५] ददर्श स[5] महत्सत्त्वमद्भुतं लवणाम्भसि ॥५४॥ [१९४
कपिराज्ञा (ज्ञा) समाख्यातं यत्सत्त्वं[6] सुमहोदधौ ।
६] याद्धाग्राहि महावीर्यं तदिदं नात्र संशयः ॥५५॥ [१९५
स तां बुध्वार्थं[7] तत्त्वेन सिंहिकां कपिकुञ्जरः[8] ।
७] प्रावर्धत[9] महाकायः प्रावृषीव बलाहकः ॥५६॥ [१९६
तस्याथ कायमुद्वीक्ष्य वर्धमानं महाकपेः[10] ।
८] वक्त्रं विवर्धयामास[11] पातालाम्बरसंस्थितम् ॥५७॥ [१९७
स ददर्श ततस्तस्या विवृतं सुमहन्मुखम् ।
९] कपिर्गात्राणि[12] संक्षिप्य मर्माणि च महाकपिः ॥५८॥ [१९९

---

१. ल१—संचिंतमानस्य ।
श—संचिंत्यमानस्य ।
भ—संचिंत्य मनसा ।
२. कै—†०यामाक्षिपक्षिपती ।
ल१ म—†०यामासुमाक्षिपन् ।
ल२—†०यामसुमाक्षिपत् ।
श—†०यामसुमा० ।
भ—†०यां वक्षमाक्षिप० ।
३. ल१—समारुद्धोस्मि ।
४. भ—०स्ततः कपिः ।
५. रा—च । ल१ म ल२ भ—सु ।
६. कै रा ल१ ब म ल२ श—तत्सत्त्वं ।
७. कै रा ल१ ब म ल२ श भ—बुद्ध्यार्थं० ।
८. भ—अतः परमधिकः पाठः—
इति निश्चित्य तत्त्वेन सिंहिकां मतिमान् कपिः ।
९. भ च—व्यवर्धत ।
१०. म—†०हाकपिः ।
११. भ—व्यवर्धतात्यर्थं ।
च—†व्यवर्धयामास ।
१२. कै रा ल१ अ ब म ल२ भ च—काययन्त्राणि ।

सितदंष्ट्रे मुखे तस्मिन्स पपात महाजवः । [२००

१०] आस्ये तस्या निमज्जन्तं ददृशुस्ते जलाशयाः ।

N] ग्रस्यमानं यथा चन्द्रं पूर्णपर्वणि राहुणा ॥५९॥ [२०१

११पू] ततस्तस्या नखैस्तीक्ष्णैः मर्माण्युत्कृत्य वानरः ।

N] अन्त्राण्यादाय सर्वाणि वेगेन निःसृतो मुखात् ॥६०॥ [२०२पू

११ उ] उत्पपाताथ वेगेन शूरो मारुतवत्कपिः ॥६१॥ [२०२उ

N] सापतन्निहता तेन भिन्ने हृदयबन्धने । [२०४पू

N] अव्यक्तं पदमन्वर्थमेतद्वाक्यमुवाच ह ॥६२॥ [N

यस्य ह्येतानि चत्वारि वानरेन्द्र यथा तव ।

१९] धृतिर्धाष्टर्यं बलं दाक्ष्यं स कर्मसु न सीदति ॥६३॥ [२०७

१३ उ] निहता सा हनुमता न्यपतल्लवणाम्भसि । [N

N] स्वयंभुवैव हनुमान्दृष्टस्तस्या निषूदकः ॥६४॥ [२०४उ

निहतां वानरेन्द्रेण पतितां वीक्ष्य सिंहिकाम् ।

१५] भूतान्याकाशचारीणि तमूचुः प्लवगर्षभम् ॥६५॥ [१०५

१६पू] महदद्य कृतं कर्म महत्सत्त्वं त्वया हतम् ।

१८ उ] साधयार्थमभिप्रेतमरिष्टं[13] प्लवतां वर ॥६६॥ [२०६

चतुर्थं कर्म तद्दृष्ट्वा दुष्करं कृतमोजसा ।

---

१. अ भ च—महाबलः ।
२. कै रा ल१ ब ल२ श—ग्रस्यमाणं॰ ।
३. ल१—पूर्वं पर्वणि ।
भ—पूर्णे पर्वणि ।
४. रा—राहुना ।
५. कै ल१ ल२—मर्माण्याकृत्य ।
६. भ—॰गेनापसृतो ।
७. रा—अभ्यर्थपद॰ ।
भ—॰पदमत्यर्थं सा च वाक्यमु॰ ।
८. भ—श्वेतानि ।
९. भ—पतात लव॰ ।
१०. भ—नियामकः ।
११. भ—सेवितां ।
१२. भ च—भीममद्य ।
१३. भ—॰प्रेतं मृगयाशु च जानकीं ।
ब म श—॰रिष्ट प्लवगर्षभ ।

N] सेन्द्राः सर्षिगणाश्चैव देवतां स्समपूजयन् ॥६७॥ [N
स तैस्सभाजितः प्राज्ञः प्रपन्नैः शतयोजनम् ।
२०] जगाम पुनराकाशं पन्नगाशनवत्कपिः ॥६८॥ [२०८
प्राप्तभूयिष्ठपारेस्स सर्वतः प्रविलोकयन् ।
२२] योजनानां शतस्यान्ते वनराजीन्ददर्श सः ॥६९॥ [२०९
सालान्प्रियकतालांश्च चम्पकांन्सहरिद्र (? द्रु) कान् ।
N] चूतान्नीपान्नागपुष्पान्धवाश्वत्थांश्च किंशुकान् ॥७०॥ [N
तिन्दुकांश्चन्दनाञ्जम्बून् पनसान्बिल्वपाटलान् ।
N] कदम्बान्सप्तपर्णांश्च खर्जूरककुभान्वटान् ॥ ७१ ॥ [N
बन्धूकांस्तिलकान्फुल्लानशोकानर्जुनानपि । [N
N] स ददर्शापतन्नेवं विविधवद्द्रुमशोभितम् ॥७२॥
द्वीपं शाखामृगश्रेष्ठस्त्रिकूटोपवनानि च । [२१०
सागरं सागरानूपे सागरानूपजान्द्रुमान् ।
N] सागरस्य च पत्नीनां मुखान्यभिविलोकयन् ॥७३॥ [२११
समुद्रतीरेषु तथा सूक्ष्मकाञ्चनवालुकाः [15] ।

---

१. रा ल$_1$ अ ब म ल$_2$ श च—सुरगणा० ।
२. श—|देवतां स० ।
३. भ—| प्रपन्नैः ।
४. म—|०सारस्य। भ—०ष्ठपार:सन्।
५. श भ—ह ।
६. अ च— शालान् ।
७. कै रा ल$_1$ व श—|चण्यकान् ।
८. कै रा ल$_1$ ल$_2$ श भ—हरिद्रवान्।
९. कै रा ल$_1$ ब श च-धवांश्चण्यकर्कि० । अ म ल$_2$ च—धवांश्चम्पकर्कि० ।
१०. श—| ०न्वान् ।
११. कै ल$_1$ अ ब—|बभूकांस्ति० ।
१२. कै रा ल$_1$ ब म ल$_2$ श—०शापरत्रैव ।
१३. भ च —०रानूपं ।
१४. भ—०न्यथवि०।
१५. भ—नास्ति ।

N] दृष्टिरम्याणि पश्यन्स चिन्तयामास वानरः ॥७४॥ [N

२३ उ] स महामेघसंकाशं समीक्ष्यात्मानमात्मना ।
विनिरुद्धमिवाकाशं चकार मतिमान्मतिम् ॥७५॥ [२१२

२४] कायवृद्धिं प्रवेशं च मम दृष्ट्वैवं[2] राक्षसाः ।
२५पू] अतिकौतूहलं कुर्युरिति मेने स वानरः ॥७६॥ [२१३

ततः शरीरं संक्षिप्य स महीधरसन्निभम् ।
N] पुनः प्रकृतिमापेदे वीतमोहं इवात्मवान् ॥७७॥ [२१४

ततः शरीरमत्यर्थं संक्षिप्य च सुसंवृतम्[4] ।
२५ उ] हरिः प्रकृतिमापेदे हरिर्विक्रान्तवानिव ॥७८॥ [२१५

स चारुनानाविधरूपधारां(?रं)
पारं समासाद्य समुद्रतीरम् ।
परैरशक्यप्रतिपन्नरूपः
N] समीक्षितात्मा समवी(?वे)क्षितार्थः॥७९॥[२१६

ततः सुवेलस्य[11] गिरेः प्रवीरैः[12]
प्रवृद्धकूटस्य पपात कूटे[13] ।
स केतकीचम्पकनालिकेरे[15]

---

१. कै रा ल$_1$ अ ब म ल$_2$ श च—निरुध्यंतमि० ।

२. रा—दृष्ट्वेव ।

३. भ—प्रविशामि समावृतं ।

४. ब—देव···। त्रुटितः पाठः ।

५. भ—नास्ति ।

६. रा अ ब म च—कपिः ।
भ—पुनः ।

७. भ—विष्णुर्वि० ।

८. च—०धरूपधारी पा० ।

९. रा ल$_1$ अ ब—०पन्नरूप० ।

१०. अ भ—०तात्मानमवेक्षि० ।

११. अ—सुवेरस्य ।

१२. भ—समीपे ।

१३. भ—कूले ।

१४. कै रा ल$_1$ ब ल$_2$ श—केतकीचण्यक० ।
भ च—केतकोद्दामक० ।

१५. कै ल$_1$ म—नारिकेले ।
रा अ ब ल$_2$ श—नारिकेरे ।

३८] महाभ्रकूटप्रतिमो महात्मा ॥८०॥ [२१

ततः शरीरं वडवामुखाभं
संक्षिप्य वीरो गिरिसन्निकाशम् ।
कपिस्तु तस्मिन्निपपात पर्वते
N] विधूय रूपं व्यथयन्मृगद्विजान् ॥८१॥[२९८उ

ततस्तु सम्प्राप्य समुद्रतीरं
समीक्ष्य लङ्कागिरिमम्बुदाभम् । [२१८पू
कपिस्तु तस्मिन्विचचार शैले
N] रामस्य पादौ मनसा प्रणम्य ॥८२॥ [N

स सागरं दानवपन्नगायुतं
बलेन विक्रम्य महोर्मिमालिनम् ।
निपत्य पारं स महोदधेस्तदा
N] ददर्श लङ्काममरावतीं यथा ॥८३॥ [२१९

इत्यार्षे रामायणे किष्किन्धाकाण्डे महर्षिवाल्मीकिकृतौ सागरलङ्घनं नाम
द्विषष्टितमः सर्गः ॥ ६२ ॥

---

समाप्तश्चेदं किष्किन्धाकाण्डम् ।

---

१. ल₁—०कूटप्रतिमे ।
भ—रेमे महाभ्रप्रतिमो ।
२. भ—ततस्तु संप्राप्य समुद्रतीरं
समीक्ष्य लंकां गिरिणाभिरामं (मां)
३. ब ल₂ श—०न्दाकांडे ।
भ—चतुर्विंशतिसाहस्र्यां संहितायां
किष्किन्धाकांडं समाप्तं ।
४. च—०(किविरचिते ।
भ—नास्ति ।
५. कै रा ल₂ अ श च—०रोक्तं-
घनं नाम सर्गः ।
भ—नास्ति ।

# १—व्यक्तिविशेषनाम-संग्रहः ।

## २-देशविशेषनाम-संग्रहः।

## ३–पुरनाम-संग्रहः ।



## ४–पर्वतनाम-संग्रहः ।

## ५—वनोपवननाम-संग्रहः ।



## ६—नदनद्यादिनाम-संग्रहः ।

# ७—लतावृक्षादिनाम-संग्रहः ।

## ८—पशुपक्ष्यादिप्राणिनाम-संग्रहः ।

## ९–युद्धोपकरणनाम-संग्रहः।



## १०–शब्दविशेषनाम संग्रहः।

## अलङ्कृतपद्यांशसंग्रहः ।

शक्रचापनिभे चापे गृह्य देवाविवा-
गतौ ( रामलक्ष्मणौ )–२,१२.

सिंहस्कन्धौ महासत्त्वौ समदौ
वृषभाविव ( रामलक्ष्मणौ )—
२ १२.

केनचित् कार्ययोगेन एकदेहौ
द्विधा कृतौ। लक्ष्मणाकारसंपन्नाव-
श्विनाविव रूपिणौ। २, १६.

जीवितान्तकरैर्घोरैर्ज्वलद्भिरिव
पन्नगैः ( बाणैः ) २, १९.

खड्गावेतौ प्रकाशेते निर्मुक्तौ भुज-
गाविव। २, २०.

निशाक्षये महातेजाः प्रभयेव
दिवाकरः। ( रामः सीतयानुगतः)
३, ९.

लोकनाथो मृदुर्दान्तः सुग्रीवं
नाथमृच्छति। सर्वलोकशरण्यो-
ऽसौ शरणं चाभिकाङ्क्षति॥
३, १७.

( सुग्रीवः ) भयं वालिसमुद्भूतं
भुक्तं माल्यमिवात्यजत्। ४, ७.

उवाच वचनं प्रीतः प्रीतिपूर्वं
कृताञ्जलिः। ४, ८.

संप्रहृष्टमनाः पाणिं पीडयामास
पाणिना। ४, १२.

स्फुरन्ती रावणस्याङ्के पन्नगेन्द्र-
वधूरिव (सीता)। ४, २६.

अभवद्बाष्पसंरुद्धो नीहारेणेव
चन्द्रमाः (रामः)। ५, ३१.

विनिश्वसन् महासर्पो बिलस्थ
इव कोपितः (रामः) ५, ३३.

स मज्जत्यवशः शोके वाताक्रान्तेव
नौर्जले। ५, ५.

निश्चला भवति प्रीतिर्धैर्यमात्म-
वतामिव(त्वद्विधानां कृतात्मनाम्)
६, ३.

लक्ष्मणस्याग्रजो लक्ष्म्या निवा-
सस्य च धीमतः। ६, ८.

धर्मज्ञो धर्मवत्सलः (रामः) ६,१७.

सरोषा इव पन्नगाः(शराः) ६,२०.

रणे विनिहतं भूमौ विकीर्णमिव
पर्वतम् (वालिनम्)। ६, २१.

त्वं दहेः कुपितो लोकान् युगान्ते
रश्मिवानिव (रामः) ६, २३.

वर्धते हृदयोत्कम्पी प्रावृण्मेघ
इवाम्बरे (अमर्षः) ७, १६.

पूर्णचन्द्रसमप्रभम्(छत्रम्) ७,४७.

हिमवन्तमथागच्छच्छरश्चापा-
दिव च्युतः ( असुरः) ८, ९.

गजेन्द्रविपुलाः शिलाः ८, १०.

स दास्यति महावीर्यः ( वाली
दुन्दुभेः ) । द्वन्द्वयुद्धं महाघोरं
नमुचेरिव वासवः। ८, १७.

धारयन् माहिषं रूपं तीक्ष्णशृङ्गो

भयावहः। प्रावृषेण्यो यथा मेघस्तोय-पूर्णो नभस्तले (दुन्दुभिः)। ८,२०.

दुन्दुभिर्दुन्दुभिस्वनः ८, २१.

विषाणैरुल्लिखन् दर्पात् तद्द्वारं जलदो यथा ( दुन्दुभिः ) । ८, २३.

निष्पपात वृतः स्त्रीभिः ताराभिरिव चन्द्रमाः ( वाली ) । ८, २३.

इमे ते विपुला स्सालाः सप्तशाखा-विलम्बिताः । पत्त्रिणा यतते वाली निष्पत्त्रयितुमोजसा ॥ ८, ४३

सुग्रीवः प्रणतग्रीवः । ८, ६०.

सुग्रीवो हेमपिङ्गलः । ८, ७६.

विनिर्भिन्दन्निवाम्बरम् (सुग्रीवः व्यनदत् )। ८, ७७

निष्पपात गृहाद् वाली भास्करो ऽभ्रगणादिव । ८, ७७.

तयोः सुतुमुलं युद्धं वालिसुग्रीवयोरभूत्। गगने ग्रहयोर्घोरं बुधाङ्गारकयोरिव ॥ ८, ७.

अन्योन्यसदृशौ वीरौ सक्तौ वीराविवाश्विनौ (वालिसुग्रीवौ ) ८, ८०.

लक्ष्मणो ( सुरराडिव ) गज-पुष्पां तां तस्यकण्ठे ससञ्ज ह । ८, ९७.

( सुग्रीवः ) शुशुभे वीरो मालया कण्ठसक्तया । मालयेव बलाकानां ससन्ध्यस्तोयदो यथा । ८, ९८.

अयं घन इवाकाशे वृक्षखण्डः प्रकाशते ९, १२.

द्रुम-प्राकारसंवृतः(आश्रमः)९,१८.

चेष्टन्तीव च वृक्षाग्राः कपोताङ्गारुणध्वजाः ९, २१.

नादैर्भिन्नमिवाम्बरम् (सुग्रीवो व्यनदत् ) ९, २८.

( प्रतिज्ञां ) सफलां कुरु लतां काल इवागतः । ९, ३१.

कृताभिज्ञानचिह्नस्त्वमनया गज-मालया । विपरीत इवाकाशे सूर्यो नक्षत्रमालया ॥ ९, ३३.

सफलां च करिष्यामि प्रतिज्ञां जहि संभ्रमम् । प्रभूतं कलमक्षेत्रं वर्षेणेव शतक्रतुः ॥ ९, ३९.

वालिनो हेममालिनः । ९, ४०.

नादैर्भिन्दन्निवाम्बरम् । ( सुग्रीवो ननाद ) ९, ४३.

(वानर्यः) कुलस्त्रिय इवाकुलाः । ९, ४४.

भग्ना इव रणे हयाः । (मृगाः) ९,४५.

क्षीणपुण्या इव ग्रहाः । ( खगाः ) ९, ४५.

सूर्यात्मजः सौर्यविवृद्धतेजाः सरित्पतिः पर्वणि चञ्चलोर्मिः । ९, ४६.

मदश्चैकपदे नष्टः क्रोधेनाधिष्ठितोऽभवत् ( वाली ) । १०, २.

स हि रोषपरीताङ्गो वाली सन्ध्यातपप्रभः । १०, ३.

उपरक्त इवादित्यः । (वाली) १०, ३.

वाली दंष्ट्राकरालस्तु क्रोधदीप्ताग्निसप्रभः । भातिस्म पतितैः पत्रैः समृणाल इवाम्बुजः । १०, ४.

वेगेन चरणन्यासैः कम्पयन्निव मेदिनीम् । ( वाली निष्पपात ) १०, ५.

नदीवेगमिवागतम् । ( क्रोधम् ) १०, ७.

शयनादुत्थितः क्रोधं त्यज भुक्तामिव स्रजम् । १०, ८.

युगान्ताग्निरिवोत्थितः । ( रामः ) १०, १५.

धातूनामिव कैलासो गुणानामाकरो महान् ( रामः ) । १०, १७.

अत्रस्थः स वनस्थो वा सर्वथा बन्धुरेव सः । (सुग्रीवः) १०, २२.

युगान्तादित्यवर्चसा । ( रामेण ) ११, ३.

अग्निसमस्पर्शैः । ( सायकैः ) ११, १३.

न विव्यथेऽहं तस्माच्च सुग्रीवप्रतिसंहतात् । शयिष्ये तद्धतो वाऽहं शाययिष्यामि वाथ तम् । ११, १४.

तारासदृशदर्शनाम् । (तारां) १२, १.

चकार रुदती मन्दं दक्षिणा सा प्रदक्षिणम् । १२, १०.

महासर्प इव श्वसन् ( वाली ) ११, ११.

दीप्यमानमिवानलम् ( सुग्रीवम् ) । १२, १३.

सोऽभवच्छोणितोद्गारी सधातुरिव पर्वतः (वाली ) । १२, २०.

उरुभारसमाक्रान्तो नौ सार्थ इव सागरे ( वाली ) । १२, २२२.

युगान्ताग्निरिव ज्वलन् । ( वाली) १२, २३.

सुपर्णसमवेगिनौ ( वालिसुग्रीवौ ) १२, २४.

प्रयुद्धौ घोररूपौ तौ बुधशुक्राविवाम्बरे(वालिसुग्रीवौ) । १२,२४.

तडाग इव पीताम्बुरुपशोषं गमिष्यति । ( अङ्गदः ) १२, ३२.

महेन्द्रमिव दुर्द्धर्षं महेन्द्रमिव दुस्सहम् । महेन्द्रसूनुं निहतं वालिनं रणदुर्मदम् ॥ १३, १.

ययातिमिव पुण्यान्ते देवलोकात् परिच्युतम् । आदित्यमिव कालेन युगान्ते विनिपातितम् ( वालिनम् ) १३, ३.

सतां वेषधरं पापं प्रच्छन्नमिव पावकम् ( रामम् ) १३, १२.

त्वया नाथेन काकुत्स्थ न सनाथा वसुन्धरा । प्रमदा शीलसम्पन्ना क्लीबेन पतिना यथा । १३, १९.

छिन्नचारित्र-कक्ष्येण सदा दुर्मार्गवर्त्तिना । त्यक्तधर्माङ्कुशेनाहं हिंसितो रामहस्तिना। १३,२१.

त्वयाऽदृश्येन तु रणे हिंसितोऽहं दुरात्मना । प्रसुप्त उरगेणेव नरः पानवशं गतः । १३, २३.

गत्वा बद्ध्वा प्रदद्यां ते तमहं रावणं रणे । १३, २४.

आनयेयमहं दर्शे श्वेतामश्वतरीमिव ( सीताम् ) १३, २५.

धर्मार्थसहितं हितम् । (वाक्यम्) १४, १

तं निष्प्रभमिवादित्यं
मुक्ततोयमिवाम्बुदम् ।
उक्तवाक्यं हरिश्रेष्ठ-
मुपशान्तमिवानलम् १४, २.

विगर्हितुमर्हसि । १४, ४.

चपलश्चपलैः सार्धं
वानरैरकृतात्मभिः ।
जात्यन्ध इव जात्यन्धैः मन्त्रयन्
वक्ष्यसे नु किम् १४, ८.

गर्हयितुमर्हसि १४, ९.

तेन तेषां कृतं पापं
नैति सौम्येन कर्मणा ।
नाभ्यारोहति जातोर्मिः
समुद्रः स्वनवानपि ॥ १४, १७.

विमलाः स्वर्गमायान्तिः ।
सन्तः सुकृतिनो यथा ॥ १४, १९.

यूथादिव परिभ्रष्टान् मृगान्
निहतयूथपान् ( हरीन् ) । १५ ५.

अनुविद्धानिवेषुभिः(वानरान्)१५,७.

अन्तको रामरूपेण हत्वा
नयति वालिनम् । १५, ११.

क्षेप्तारं गिरिशृङ्गाणां वज्राणामिव वासवम् । (वालिनम्) १५, २१.

वज्राशनिमुचं घोरं यथैवोपहतं घनम् ( वालिनम् ) १५, २२.

नदन्तं नदतां संख्ये शूरं शूरेण संगतम् । शार्दूलेनामिषस्यार्थे हस्तिराजं यथा हतम् । (वालिनम्) १५, २२.

नागहेतोः सुपर्णेन चैत्यमुन्मथितं यथा । ( वालिनम् ) १५, २३.

प्रसुप्तमिव सोपेत्य विललाप । ( वालिनम् ) १५, २६.

क्रन्दन्तीं कुररीं यथा । ( ताराम् ) १५, २७.

तारा ताराधिपप्रभा । १५, २९

कुरर्य इव दुःखिताः । ( वानर्यः ) १५, ३२.

हताः स्मैकेषुणा सर्वाः शाखामृगपतौ हते। १५, ३५.

तारेव गगनाच्च्युता (तारा) । १५, ३७.

कृताहमेवमुन्मूला तव मूलविनाशने। १५, ३७.

शोकपावकः। १५, ३९.

निमग्ना शोकसागरे। १५, ४०.

कृपणं कृपणा सती (कथं वर्तयिष्यामि)। १५, ४५.

सकामो भव सुग्रीव रामं त्वं प्रतिपद्य च। भुंक्ष्व राज्यमनुद्विग्नः शान्तो भ्राता रिपुस्तव॥ १५, ५२.

न शोच्यः शोचते शोच्यं कं वाशोच्योऽनुशोचति। कश्च कस्येह शोच्योऽस्ति देहेस्मिन् बुद्बुदोपमे। १५, ५७.

वालिना युद्धशालिना। १६, ३.

अङ्गदं कनकाङ्गदम्। १६, ५.

चन्द्रहीनेव शर्वरी (तारा) १६,१४.

सोपरागेव रोहिणी (तारा) १६, १३.

निपपाताथ सा भूमौ खादिवोल्का सनिस्वना (तारा) १६, १४.

वडवेव महीतले चेष्टते (तारा) १६, १५.

उवाच वाक्यं वाक्यज्ञा १६, १७.

वानर्यो विविधैर्वाक्यैर्हेतुभिश्च न्यदर्शयन्। १६, २२.

भूयः शोकसमाक्रान्ता विलापमुपचक्रमे। (तारा) १६, २३.

शोकाकुलाकुला। (तारा) १६, २४.

वालिना बाहुशालिना। १६, ३२.

शोकपावकदुःखिता। (तारा) १६, ४४.

तस्मिन्निपतिते भूमौ ऋक्षवानरराजनि। भ्रष्टचन्द्रमिव व्योम न प्राकाशत मेदिनी॥ १६, ४८.

स तथा मालया वीरो हैम्या वानरयूथपः। सन्ध्यानुरक्तपर्यन्तः पयोधर इवाबभौ॥ १६, ५१.

इन्द्रियैः कृष्यसे हि त्वं सूत्रबद्ध इव द्विजः। १६, ६०.

बालमेनमबालिशम्। १६, ९४.

न द्रक्ष्याम्यङ्गदं पुत्रं पापकर्मा दिवं यथा। १६, १०७.

विवेश भूमौ परिरभ्य वालिनं महाद्रुमं छिन्नमिवाश्रिता लता। (तारा) १६, १२४.

व्यसनार्णवप्लुता। (तारा) १६, १२४.

अगाधे च निमग्नाहं विपुले शोकसागरे। १७, १४.

अश्मसारमहं मन्ये इद मे हृदयं दृढम्। भर्तारं निहतं दृष्ट्वा

शतधा यत्र दीर्यते । १७, १५.

क्रुद्धमाशीविषं यथा । ( शरम् ) १७, २२.

तस्य निष्क्रम्यमाणस्य सायकस्याभवद्वपुः । मरीचेरिव दीप्तस्य व्रजत्यस्तं दिवाकरे ॥ १७, २३.

तस्य निष्क्रम्यमाणस्य सायकस्याभवद् वपुः । वर्षामेघनिरूढायाः स्फूर्जन्त्या इव विद्युतः ॥ १७, २३.

सगैरिका जलाधाराः प्रावृषीव धराधराः (रुधिरधाराः) १७, २४.

अवकीर्णं रणरेणुभिः । (भर्तारम्) १७, २५.

पुत्रमङ्गदमङ्गना । १७, २६.

आर्यपुत्र सपुत्रा त्वामुपासे गतचेतनम् । ईश्वरेण हतं यज्ञे गौः सवत्सेव गोपतिम् । १७, ३१.

इष्ट्वा संग्रामयज्ञेन रामबाणमहाम्भसा । अस्मिन्नवभृथे स्नातः पत्न्या किं त्वं मया विना । १७, ३२.

राजश्रीर्न जहाति त्वां गतासुमपि मानद । गच्छत्यस्तं दिनकरे शैलराजं प्रभा यथा । १७, ३४.

तासां रुदितशब्देन वनानि गिरयश्चैव रुदन्तीव समन्ततः । १८, १७.

एष त्वां रामरूपेण कालः कर्षति वानर । येन स्म विधवाः सर्वाः कृता लोकेषुणा रणे ॥ १८, २२.

भार्याश्चन्द्रनिभाननाः । १८, २४.

तेऽभिगम्य महात्मानं राममक्लिष्टकारिणम् । तस्थुः प्राञ्जलयः सर्वे पितामहमिवर्षयः ॥ १९, ३.

ततः काञ्चनशैलाभस्तरुणार्कनिभाननः । ( हनुमान् ) १९, ४.

किष्किन्धां वालिपालिताम् । १९, १८.

प्रविश्य त्वभिनिष्क्रान्तं सुग्रीवं प्लवगेश्वराः । अभ्यषिञ्चन् सुबलिनं सहस्राक्षमिवामराः । १९, २२.

अभ्यषिञ्चन्त सुग्रीवं वसवो वासवं यथा । १९; ३७.

वालिपालिता । ( किष्किन्धा ) १९, ४३.

शशास राज्यं त्रिदशाधिपो यथा । ( सुग्रीवः ) १९, ४४.

मेघवृन्दनिभं शैलम् । २०, ३.

महतो महतीं गुहाम् । २०, ४.

बहुरम्ये बहुद्रव्ये रतिरल्पापि नाभवत् । वसतस्तत्र रामस्य लक्ष्मणस्य च धीमतः । २०, ८.

नाविवेश च तं निद्रा शयानं शयने शुभे । २०, ११.

रामः कमलपत्राक्षः । २०, १२.

अर्हं हि खलु वीर्यं ते संसुप्तं प्रतिबोधये । दीप्तमाहुतिभिः काले भस्मच्छन्नमिवानलम् । २०, २१.

विहाय रोषं भुजगो यथा विषम् । २०, २७.

सर्वमासगतं गर्भं भास्करस्य गभस्तिभिः । रसं सर्वमुपादाय द्यौः प्रसूते रसायनम् ॥ २१, ३.

एषा तापपरिक्लिष्टा नववारिपरिप्लुता । सीतासन्तापतप्तेव मही बाष्पं विमुञ्चति ॥ २१, ६.

नीलमेघाश्रिता विद्युद् भ्रमन्ती प्रतिभाति मे । स्फुरन्ती रावणस्याङ्के सीतेव विवशा पुरा ॥ २१, ६.

अनुलिप्ता इव घनैर्नष्टग्रहनिशाकराः । ( निशाः ) २१, ९

नूनमापूर्यमाणायाः सरय्वाः श्रूयते स्वनः । मामप्रेक्ष्य वनायातमयोध्यायामिव स्वनः ॥ २१, ११

आपाण्डुजलदं भाति कामातुरमिवाम्बरम् । २१. १३.

काशाभिरिव हैमीभिर्विद्युद्भिरिव ताडितम् । ( अम्बरम् ) २१, १४.

मेघकृष्णाजिनधरा धारायज्ञोपवीतिनः मारुतापूरितगुहाः प्राधीता इव पर्वताः ॥ २१, १६.

सहामन्दरमारुह्य मेघसोपानपङ्क्तिभिः । कुटजार्जुनमालाभिरलङ्कर्तुं दिवाकरम् ॥ १७, १७.

मेघाम्बरविनिर्मुक्ताः । ( वाताः ) २१, १७.

क्वचित् प्रकाशं क्वचिदप्रकाशं नभः प्रकीर्णाम्बुधरं विभाति । क्वचित् क्वचित् पर्वतसन्निरुद्धं रूपं यथा शान्तमहार्णवस्य ॥ २१, २५.

नीलेषु नीला नववारिपूर्णा मेघेषु मेघाः प्रतिभान्ति सक्ताः । दावाग्निदग्धेषु दवाग्निदग्धाः शैलेषु शैला इव बद्धमूलाः । २१, २६.

निद्रा शनैः केशवमभ्युपैति द्रुतं नदी सागरमभ्युपैति । हृष्टा बलाका घनमभ्युपैति मेघा निकामं परिसंपतन्ति ॥ २१, २७.

समेधिता भाति बलाकपङ्क्तिर् वातावधूता वरपुण्डरीकाः । लम्बालकाभा जलदाश्चरन्ति वहन्ति वर्षन्ति नदन्ति भान्ति ॥ २१, २८.

ध्यायन्ति नृत्यन्ति समाश्वसन्ति सुघोषणाः सान्तरजा वनान्तात् । प्रियाविहीनाः शिखिनः प्लवन्ते व्यामिश्रिताः सर्जकदम्बपुष्पैः ॥ २१, २९.

अङ्गारपूर्णोत्करसन्निकाशम् ।

( पक्कं फालम् ) २१, ३१.
नीलायमाना इव षट्पदौघैः।
( शाखाः ) २१, ३२.
विभान्ति रूपाणि बलाहकानाम्
रणोद्यतानामिव वारणानाम्।
२१, ३५.
गर्जन्ति मेघाः समुदीर्णनादाः
मत्ता गजेन्द्रा इव संयुगस्थाः।
२१, ३५.
मुक्तासकाशं सलिलं। २१, ३७.
नदीकूलमिव क्लिन्नमवसीदामि
लक्ष्मण। २१, २९.
सुग्रीवस्य नदीनां च प्रसादं
प्रतिपालयन्। २१, ४७.
विमदा इव मातङ्गा नष्टरूपा
घना घनाः। २३, १२.
अवलिप्ता इवाभान्ति। ( गिरयः )
२३, १३
वाप्यः समुपशोभन्ते सामान्याः
प्रमदा इव। २३, १४.
काञ्चनैरिव निर्मितान्। (पुष्पितान्
वृक्षान्)। २३, १६.
दर्शयन्ति शरन्नद्यः पुलिनानि
शनैः शनैः। नवसङ्गमसव्रीडा
जघनानीव योषितः। २३, १८.
शरत्काले तु काशानां मञ्जर्यो
मारुतेरिताः। वरासवमदक्षीवा
विलोला इव योषितः। २३, १९.
निष्पेषमिव वज्रस्य(ज्याघातघोषं)
२३, ३२.
शक्रचापनिभं घोरं धनुः कालान्त-
कोपमम्। प्रगृह्य गिरिशृङ्गाभं
मन्दरः सानुमानिव॥ (लक्ष्मणः)
२४, ६.
शिलाश्च शकलीकुर्वन् पद्भ्यां
वज्र इवाशुगः। (लक्ष्मणः ययौ)
२४, १०
बह्विन्धन इवानलः। ( लक्ष्मणः )
२४, १५.
बाणखड्गस्फुरज्जिह्वः सायकासन-
भोगवान्। स्वतेजोविषसंघातः
पञ्चास्य इव पन्नगः॥ (लक्ष्मणः)
२४, ३१.
तं दीप्तमिव कालाग्निं नागेन्द्रमिव
कोपितम्। (लक्ष्मणम्) २४, ३२.
प्रतिपूर्णमिवाकाशं संच्छन्नमिव
तद्वनम्। तेन वानरसैन्येन सुग्री-
वस्य महाकपेः॥ २४, ३७.
ततो द्वाराणि सर्वाणि ह्यङ्गदः
परिवारयन्। पर्याक्रमत दुर्धर्षो
नक्षत्राणीव चन्द्रमाः॥ २३, ३८.
(सुग्रीवः वानरैः) समासीनः शक्रः
सुरगणैरिव। २४, ४४.
व्यवसायरथं प्राप्तः। २४, ५१.

राजंस्तिष्ठाद्य समये पत्यौ भार्येव शाश्वते । २५, २२.

क्रुद्धं विनिश्वसन्तं तं ज्वलन्तमिव तेजसा । (लक्ष्मणम्) २६, ३

अवारितः स सौमित्रिर्महाभ्रैरिव भास्करः । (वानरैः) २६, २१.

महेन्द्रमिव दुर्जयम् । ( सुग्रीवम् ) २६, २७.

दिव्याभरणमालाभिः प्रमदाभिः समन्ततः । सहोपविष्टं हृष्टाभिः कुमारमिव नन्दने ॥ ( सुग्रीवम् ) २६, २८.

स्त्रीभिः परमहृष्टाभिर् वृतं शतसहस्रशः । अप्सरोभिः परिवृतं कुमारमिव नन्दने ॥ ( सुग्रीवम् ) २६, २९.

तारा तारानिभानना । २६, ३०.

बिलरुद्धमिवोरगम् ।( लक्ष्मणम् ) २६, ३४.

पत्न्योर्मध्यगतस्तत्र स सुग्रीवो व्यरोचत । विशाखयोर्मध्यगतः सम्पूर्ण इव चन्द्रमाः ॥ २६, ३७

शुशुभे स तया राजा सतार इव चन्द्रमाः । २६, ४१.

पद्मपत्रप्रतिरूपनेत्रम् ।( सुग्रीवम् ) २६, ४३.

प्रदीप्तमिव तेजसा । ( लक्ष्मणम् ) २७, २.

उत्पतन्तं समुत्पेतुस्ताराप्रभृतयः स्त्रियः । सुग्रीवं गगने पूर्णं चन्द्रं तारागणो यथा ॥ २७, ४.

ताराद्वितीयं सुग्रीवं सतारं शशिनं यथा । २७, ६.

अद्य संख्ये शितैर्बाणैर्हतो द्रक्ष्यसि वालिनम् । २७, १८.

सर्वथा वञ्चितो भ्राता मम दुष्टात्मना त्वया । ऋजुबुद्धिरनार्येण बुद्धिमान् जिह्मबुद्धिना ॥ २७, २४.

उदयः सागरस्येव पर्वकाले महात्मनः । २७, २५.

प्रदीप्तमिव तेजसा । ( लक्ष्मणम् ) २८, १.

तारा तारापतिनिभानना । २८, १.

सदुःखः शयितो नित्यं प्राप्येदं सुखमुत्तमम् । प्राप्तं कालं न जानीते विश्वामित्रो यथा मुनिः ॥ २८, ६.

न च रोषवशं वीर गन्तुमर्हसि लक्ष्मण । निश्चयार्थमविज्ञाय सहसा प्राकृतो यथा ॥ २८, १०.

समन्वेष्यति सुग्रीवः सीतया सह राघवम् । शशाङ्कमिव रोहिण्या तं हत्वा रावणं रणे ॥ २८, १९.

त्रासं क्लिष्टं माल्यमिवात्यजत् । २९, २.

कुञ्जरप्रतिमौजसः । ( हरयः ) ३०, ५.

सन्ध्याभ्रसमवर्चसः । ( वानराः ) ३०, ७.

छादयन्त इवाम्बरम् । ( वानराः ) ३०, १५.

ते गतिज्ञा गतिं ज्ञात्वा । ३०, १६.

ते पदं विष्णुना क्रान्तम् । ३०, १८.

वानरो वानरान् सर्वान् । ३०, १९.

तप्तहेमसमाभासः । ( वानराः ) ३०, २१.

सिंहकेसरवर्चसाम् । (वानराणाम्) ३०, २३.

अङ्गारशिखराभाणां भीष्माणां भीमकर्मणाम् । ( वानराणम् ) ३०, २५.

रुन्धन्तीव दिवाकरम् (वानराः) ३०, २७.

दिवक्षुमिव पावकम् । (काकुत्स्थम्) ३१, ९.

धर्मात्मा धर्मवत्सलः । ३१, १३.

लक्ष्मणं शुभलक्षणम् । ३१, १८

महेन्द्रसमविक्रमाः । ( हरयः ) ३१, ३६.

मणिनिभोदकम् । (नदम्) ३२, १४.

मुक्तामणिनिभोदकम् । (सागरम्) ३२, ३५.

सालैस्तालैस्तमालैश्च । ३२, ४७.

( महानदीम् ) कान्तं तं कृतसङ्केतां समुद्रमभिगच्छतीम् । ३३, २४.

पौष्पीं मालामिव कृतां वेलां द्रक्ष्यथ वानराः । ३३, २५.

निर्मलादर्शनिर्मलः । ( समुद्रः ) ३३, ३०.

उत्थितः सागरं भित्त्वा वयस्यश्चन्द्र-सूर्ययोः । ( गिरिः ) ३३, ३६.

भ्राजते विपुलैः शृङ्गैरम्बरं विलिखन्निव । ( गिरिः ) ३३, ३७.

तस्यैकं काञ्चनं शृङ्गं सेवते यद् दिवाकरः । श्वेतं राजतरूपं च सेवते यन्निशाकरः ॥ (द्वीपस्य गिरेः) ३३, ३८.

रक्तचन्दनसंरक्ता मणिविद्रुम-शर्करा । देवर्षिचरिता पुण्या पवित्रेव सरस्वती ॥ (अञ्जना सरित्) ३३, ४८.

शिलातलविनिष्पिष्टाः क्रीडन्तीव महोर्मयः । ३३, ५९.

अमितबलपराक्रमा भवन्तो गुणविपुलेषु कुलेषु च प्रसूताः । मनुजपतिसुतां यथा लभध्वं तदधिगुणं पुरुषार्थमारभध्वम् ॥ ३३, ७४.

अतिबल बलमाश्रितस्तवाहं तव

कारणम् । ३६, ९.

तां वयं नाधिगच्छामो रात्रौ सूर्यप्रभामिव । ( सीताम् ) । ४६, १०.

सूर्यप्रभेव शैलाग्रे । (सीता) ५०, १८.

असिते राक्षसे भाति महामेघे यथा तडित् । ( सीता ) ५०, १८.

नीलाम्बुदचयप्रभः । ( कश्चिद् राक्षसः ) ५१, १६.

तमृक्षाः सृमरा व्याघ्राः सिंहा नागाः सरीसृपाः । परिवार्याभिगच्छन्ति मातरं प्राणिनो यथा ॥ ५२, १६.

नदीवेग इवागतः । ( बाष्पवेगः ) ५३, ३. ॥

आपगाः संप्रकाशन्ते तन्तुवत् संस्थिताः क्षितौ । ५३, १३.

महानद्योपि दृश्यन्ते लाङ्गूलस्य गतिर्यथा । ५३, १४.

प्राकारा इव ते बभुः । ( पर्वताः ) ५३, १५.

उपलैरिव संछन्नां सुप्रख्यातैश्च पर्वतैः । ५३, १८.

भास्करो भाति दह्यमान इवाम्बरे । ५३, २२.

अग्निराशिरिवाभाति भास्करः । ५३, २२.

पुण्यानि नापि मे सन्ति यत्र मग्नोऽस्मि सागरे । आकाशे वा मृतो नैव विषमे च शिलोच्चये ॥ ५३, २७.

को हि मे जीवितेनार्थो विपक्षस्याद्य पक्षिणः । ५३, २९.

गिरिप्रस्रवणं यथा ( नेत्रजं वारि विसृजन् प्रारुदम् ) । ५४, १.

मां निर्दहति शोकाग्निः शुष्कं वनमिवानलः । ५४, २२.

श्रुतैस्तैस्तैःप्रशमयन्नग्निं वारिघटैरिव । ५४, २३.

धृत्या निहन्मि तद्दुःखं तमो दीप इव ज्वलन् । ५४, २४.

सपुष्पाङ्कुरशाखाग्राः पतन्तीव महीरुहाः । ५५, २९.

जगामाकाशमाविश्य सुपर्ण इव वेगितः । ( सम्पातिः ) ५५, ४२.

विनेदुः सिंहसङ्घवत् । ( वानराः ) ५६, १.

प्रसुप्तमिव चान्यत्र क्रीडन्तमिव चान्यतः । ( पर्वतम् ) ५६, ५.

आकाशमिव दुष्पारम् । (सागरम्) ५६, ७.

मरुद्गणैःपरिवृतो वृत्रशत्रुरिवाम्बरे । ( अङ्गदः ) ५६, १०.

वासवं परिवार्येव वाहिनी मरुतां यथा । सा वानराणां तु चमूः परि-

वार्याङ्गदं बभौ ॥ ५६, ११.

बालं क्रुद्ध इवोरगः। ( विषादः खादयतिः ) ५६, १३.

वालवस्य सवज्ञस्य ब्रह्मणो वा स्वयम्भुवः। विक्रम्य सहसा हस्ता-दमृतं स इहानयेत् ॥ ५६, ३०.

चन्द्रादपि हरेल्लक्ष्मीं तेजो वा रविमण्डलात्। विक्रमी य इतो लङ्कां गत्वा तु पुनराव्रजेत् ॥ ५६, ३१.

क्रुद्धं मृत्युमिवापरम्। (बलिपुत्रम्) ५६, ६१.

पक्षिराज इवोत्तमः ( हनुमान् ) ५७, ३३.

पर्जन्यमिव भूतानि लोकस्तमनु-जीवति। ५७, ३६.

विक्रमस्व महाभाग विष्णुस्त्रीन् विक्रमानिव। ५७, ४४.

कपिभिः स्तूयमानस्य तदा बलवतो बलम्। प्रवृद्धं हृष्टमनसः पर्वणीव महोदधेः। ( हनुमतः ) ५८, ३.

आत्मस्थेन तु तोयेन वर्धते सागरो यथा। तथात्मस्थेन वीर्येण प्रवृद्धः कपिकुञ्जरः ॥ ५८, ४.

यथा चन्द्रमसो वृद्धया वर्धते सागरोम्भसा। ववृधे स्तूयमानस्य तथा वीर्यं हनूमतः ॥ ५८, ५.

यथा विजृम्भते सिंहो विवृद्धो गिरिगह्वरे। मारुतस्यौरसः पुत्रस्तथा समुपजृम्भितः ॥ ५८, ६.

अशोभत मुखं तस्य विधूम इव पावकः। ५८, ७.

उल्लिखन्तामिवाम्बरम्।(मेरुं गिरिम्) ५८, ३९.

सागरं क्षोभयिष्यामि दारयिष्यामि मेदिनीम्। पर्वतान् पातयिष्यामि प्लवमानः प्लवङ्गमाः ॥ ५८, ४६.

भविष्यति हि मे पन्था वायोः पन्था इवाम्बरे। ५८, ४८.

नभ आवृत्य बाहुभ्यां ग्रसमान-मिवाम्बरम्। ( माम् ) ५८, ५०.

विधमिष्यामि जीमूतान् कम्प-यिष्यामि पर्वतान्। सागरं क्षोभ-यिष्यामि प्लवमानः समाहितः ॥ ५८, ५१.

आनयिष्यामि वैदेहीं रामस्य महिषीं प्रियाम्। प्रसह्य भुजगं भीमं गरुत्मान् सागराद् यथा ॥ ५८, ५३.

विहरिष्यामि वेगेन नानानक्रसमा-कुलम्। वितत्य गरुडः पक्षौ हरन्निव महोरगम् ॥ ५८, ५४.

सहसा निष्पतिष्यामि घनाद् विद्युदिवाम्बरे। ५८, ५८.

अभ्यनन्दत मानार्हो मरुद्भिर्वासवो यथा । ( हनुमान् ) ५९, ११.

चक्रुः प्रणामं मुदिताः शक्रस्येव मरुद्गणाः । ( हनुमतः ) ६०, ४.

महाद्भिरुच्छ्रितैः शृङ्गैरुल्लिखन्तमिवाम्बरम् । ( पर्वतम् ) ६०, ९.

व्यराजत कपिश्रेष्ठो द्वितीयः पर्वतो यथा । ६०, १०.

स तिष्ठन् पर्वतस्याग्रे बभौ वानरपुंगवः । लोकानिव तदा विष्णुः क्रमिष्यन् विक्रमैस्त्रिभिः॥ ६०,१२.

मृगान् वित्रासयंश्चैव प्रवृद्ध इव केसरी । ( हनुमान् ) ६०, १४.

तिष्ठन् कपिवरः श्रीमान् ह्रदे नाग इवाबभौ । ६०, १७.

ततोऽभ्याववृधे दक्षो दक्षिणो दक्षिणां दिशम् । ६१, १.

प्लवगः प्लवगैर्दृष्टः प्लवने कृतनिश्चयः। ६१, २.

ववृधे रामवृद्धयर्थं समुद्र इव पर्वणि । ६१, २.

स चचालाचलश्चानु मुहूर्तं कपिपीडितः । वने सिंहपरामृष्टो मदोन्मत्त इव द्विपः ॥ ६१, ५.

निश्वसद्भिस्ततः सर्पैः सपताक इवाबभौ । ( पर्वतः ) ६१, १०.

जलधाराः प्रसुस्राव मदराजीरिव द्विपः । ( पर्वतः ) ६१, १५.

मुक्ताजालैरिव बभौ । ( गिरिः ) ६१, १७.

प्रवृत्त इव पर्वतः । ( हनुमान् ) ६१, १८.

कुसुमेन सुगन्धिना सर्वतः संवृतः शैलो बभौ पुष्पमयो यथा । ६१, २०.

च्युतः सार्थादिवाध्वगः । ( पर्वतः ) ६१, २२.

भिद्यतेऽयं गिरिर्भूतैरिति मत्वा मनस्विनः । त्रस्ता विद्याधराश्चैवमुत्पेतुः पतगैः सह ॥ ६१, २८.

समुद्रस्य परं पारं दुष्प्रापं प्राप्तुमिच्छति । ६१, ३६.

ननाद सुमहानादं सुमहानिव तोयदः । ( हनुमान् ) ६१, ३८.

अनुरूपं च वृत्तं च लाङ्गूलं लोमभिश्चितम् । उत्पतिष्यन् स चिक्षेप पक्षिराज इवोरगम् ॥ ( हनुमान् ) ६१, ४०.

तस्य लाङ्गूलमाविद्धमतिवीर्यस्य पृष्ठतः । ददृशे गरुडेनेव ध्रियमाणो महोरगः ॥ ६१, ४१.

ऊरुवेगोद्धता वृक्षा मुहूर्तं कपिमन्वयुः । प्रस्थितं दीर्घमध्वानं सबन्धुमिव बान्धवाः ॥ ६१, ५०.

अनुजग्मुर्हनूमन्तं पौरा इव महीपतिम् । ( वृक्षाः ) ६१, ५१.

स नानाकुसुमैः कीर्णः कपिः कुड्मलकोमलैः । शुशुभे मेरुसंकाशः खद्योतैरिव पर्वतः ॥ ६१, ५४.

विमुक्तास्तस्य वेगेन मुक्तपुष्पाश्च ते द्रुमाः । अवतीर्यन्त सलिले निवृत्ताः सुहृदो यथा । ६१, ५५.

पुष्पौघेणानुबन्धेन नानावर्णेन वानरः । बभौ मेघ इवोद्यत्वे सेन्द्रचापतडिद्गुणः । (हनुमान्) ६१,५७.

ताराभिरभिरामाभी रुचिराभिरिवाम्बरम् । तस्य वायूद्धतैः पुष्पैः शरीरं शुशुभे वृतम् ॥ ६१, ६०.

तस्याम्बरगतौ बाहू शुशुभाते प्रसारितौ । पर्वतादभिनिष्क्रान्तौ पञ्चास्याविव पन्नगौ ॥ ६१, ६१.

विभिन्दन्निव चाकाशं ददृशे स महाकपिः । पिबन्निव बभौ चायं सोर्मिजालं महार्णवम् ॥ ६१, ६२.

तस्य विद्युत्प्रभाकारे वायुवेगानुसारिणः । नयने विप्रकाशेते पर्वतस्थाविवानलौ ॥ ६१, ६३.

पिङ्गे पिङ्गाक्षमुख्यस्य चक्षुषी परिमण्डले । बृहती संप्रकाशेते शनैश्चरबुधाविव ॥ ६१, ६४.

यथा नभसि सन्ध्यायाः(?सन्ध्यया) ताम्रं सूर्यस्य मण्डलम् । मुखं नासिकया तस्य नम्रया ताम्रया बभौ ॥ ६१, ६५.

लाङ्गूलं सहसाऽऽविद्धं प्लवमानस्य शोभते । अम्बरे वायुपुत्रस्य शक्रध्वज इवोच्छ्रितः । ६१, ६६.

लाङ्गूलचक्रेण महान् शुक्लदंष्ट्रो हि वानरः । व्यरोचत महाप्राज्ञः परिवेषीव भास्करः ॥ ६१, ६७.

स्फिग्देशेनातिताम्रेण रराज स महाकपिः । महता दारितेनेव गिरिर्गैरिकधातुना ॥ ६१, ६८.

कक्षान्तरगतो वायुर्जीमूत इव गर्जति । ६१, ६९.

पततपतङ्गसंघातै र्व्यायतः शुशुभे कपिः । प्रवृद्ध इव मातङ्गः कक्षया लम्बमानया ॥ ६१, ७१.

उपरिष्टाच्छरीरस्य च्छायया लम्बमानया । सागरेऽन्तः समाविष्टः स कपिर्नौरिवाभवत् ॥ ६१, ७२.

देशस्तस्याङ्गवातेन सोन्माद इव लक्ष्यते । ६१, ७३.

प्लवमानं समालक्ष्य भुजगाः सागरालयाः । व्योम्नि तं हरिशार्दूलं सुपर्णमिव मेनिरे ॥ ६१, ७४.

तरङ्गान् गणयन्निव । ( हनुमान् ) ६१, ७८.

शारदाभ्रमिवाततम् । ( जलम् )
६१, ७९.
छाया वानरसिंहस्य जले चारुतराभवत् । श्वेताभ्रघनराजीव वायुपुत्रानुगामिनी ॥ ६१, ८१.
शुशुभे स महातेजा महाकायो महाकपिः । वायुमार्गे निरालम्बे पक्षवानिव पर्वतः ॥ ६१, ८२.
तेन मार्गेण सहसा द्रोणीकृत इवार्णवः । ६१ ८३.
आपाते पक्षिसङ्घानां पक्षिराज इवाव्रजत् । हनुमान् मेघजालानि प्राकर्षन् मारुतो यथा ॥ ६१, ८४.
प्रविशन्नभ्रजालानि निपतंश्च पुनः पुनः । प्रच्छन्नश्च प्रकाशश्च चन्द्रमा इव लक्ष्यते । ( हनुमान् ) ६१, ८६.
चामीकर इवाभाति । ( हनुमान् )
६१, १०३.
स सागरजलं भित्त्वा बभूवाभ्युत्थितस्तदा । यथा जलधरं भित्त्वा दीप्तरश्मिर् दिवाकरः ॥ ६१, १०६.
तस्य जाम्बूनदैः श्रृङ्गैः पर्वतस्य समुत्थितैः । आकाशं शस्त्रसंकाशमभवत्काञ्चनप्रभम् ॥
६१, १०९.
जातरूपमयैः श्रृङ्गैर्भ्राजमानैः स्वयम्प्रभैः । आदित्यशतसंकाशैः सोऽभवद्गिरिसत्तमः ॥ ६१, ११०.
तरसा छादयामास जीमूत इव मारुतिः । ( पर्वतम् ) ६१, ११२.
दृष्ट्वा तस्योरुवेगं च जहृषे च ननन्द च । ६१, ११३.
मान्यो हि मम मारुतः । ६१, १३५.
त्वरे च त्वरिते कार्ये । ६१, १३९.
जगामाकाशमाविश्य वेगेन गरुडो यथा । ( हनुमान् ) ६२, २.
भक्ष्यभूतः प्रदिष्टस्त्वमीश्वरैर्वानरर्षभ । ६२, १८.
स संक्षिप्यात्मनः कायं जीमूत इव मारुतिः । तस्मिन् मुहूर्ते हनुमान् बभूवाङ्गुष्ठमात्रकः ॥
६२, ३३.
तं दृष्ट्वा वदनान्मुक्तं चन्द्रं राहुमुखादिव । ६२, ३६.
जगामाकाशमाविश्य वेगेन गरुडो यथा । ( हनुमान् ) ६२, ३९.
प्रविशन्नभ्रजालानि निष्पतंश्च पुनः पुनः । प्रच्छन्नश्च प्रकाशश्च चन्द्रमा इव लक्ष्यते ॥ ( हनुमान् )
६२, ४९.
समाक्षिप्तोऽस्मि सहसा निरुद्ध इव पर्वतः । प्रतिलोमेन वातेन महापोत इवार्णवे ॥ ६२, ५३.
प्रावर्धत महाकायः प्रावृषीव

बलाहकः । ( हनुमान् ) ६२, ५६.
कपिर्गात्राणि संक्षिप्य मर्माणि च महाकपिः। (मुखे तस्याःनिपपात) ६२, ५८.
ग्रस्यमानं यथा चन्द्रं पूर्णपर्वणि राहुणा । ( हनुमन्तं ) ६२, ५९.
सागरं सागरानूपे सागरानूपजान्द्रुमान् । सागरस्य च पत्नीनां मुखान्यभिविलोकयन् ॥ ६२, ७३.
स महामेघसङ्काशं समीक्ष्यात्मानमात्मना । विनिरुद्धमिवाकाशं चकार मतिमान् मतिम् ॥६२,७५.
पुनः प्रकृतिमापेदे वीतमोह इवात्मवान् । ( हनुमान् ) ६२, ७७.
हरिः प्रकृतिमापेदे हरिर्विक्रान्तवानिव । ( हनुमान् ) ६२, ७८.
स चारुनानाविधरूपधारं
पारं समासाद्य समुद्रतीरम् ।
परैरशक्यप्रतिपन्नरूपः
समीक्षितात्मा समवेक्षितार्थः ॥ ६२, ७९.
ददर्श लङ्काममरावतीं यथा । ६२, ८३.

## आर्षप्रयोगसंग्रहः ।

| | | | |
|---|---|---|---|
| लिप्सथः | १, २३. | गृह्य | ४, ३१. |
| गृह्य | २, १२. | ह्रियन्ती | ४,३७. |
| अभिभाष्यन्तौ | २, २१. | यमसादनम् | ४, ४०. |
| अभिभाषथः | २, २१. | आह्वयन् (युधि) | ७, २५. |
| भाषथः | २, २१. | अभ्यवादयम् | ७, ४४. |
| संगमिष्यति | २, २४. | अहं प्रसादयांचक्रे | ७, ४६. |
| विद्धि ( युवाम् ) | २, २४. | मार्गमानस्य मे | ७, ६०. |
| चिन्तयानस्य | ३, १२. | व्यवतिष्ठत | ८, ३३. |
| कृतकृत्यवान् | ३, २८. | व्यपोथयामास | ८, ३४. |
| प्रतिनन्दस्व | ४, ६. | इच्छते | ८, ४०. |
| अभिवीक्षन्तौ | ४, १७. | त्यज्य | ८, ४१. |
| रोदमाना | ४, २२. | सर्वास्त्रविदुषम् | ८, ६१. |
| आनयिष्यामि | ४, २३. | आह्वय (संयुगे) | ८, ६८. |

## १३—छन्दोवैषम्ययुक्तपद्यांश-संग्रहः ।

तथेति कृत्वा वचनं तु तस्य
कपेः सुग्रीवस्य दुरासदस्य ।
महानुभावो हनुमान् ययौ तदा
महाबलौ यत्र तु रामलक्ष्मणौ ॥
१, २६.

वचो विज्ञाय हनुमान् २, १.

यदृच्छया भूमितलम् २, ११.

निश्वसन्तौ वरभुजौ २, ११.

एवमुक्त्वा तु हनुमान् २, २६.

कार्येणावामिह येन प्रयातौ
द्रष्टुं राजानं सुव्रतं वानरेन्द्रम् ।
तस्याप्येतल्लक्ष्मणो वेत्ति तत्त्वं
न त्वाश्चर्यं पश्य कालस्य मार्गम् ।
२, ३०.

ततः प्रहृष्टो हनुमान् ३, १.

इत्येवमुक्त्वा हनुमान् ३, २१.

इदं तथ्यं मम वचस्तदेव हि
रघुप्रिय । ४, २४.

हृदि कृत्वा सुबहुशः ४, ३३.

मम दयिततमा हृता वनान्ताद्
रजनिचरेण विमथ्य येन सा ।
कथय मम रिपुं त्वमद्य शीघ्रं
प्लवग नयामि यमस्य सादनम् ॥
४, ४०.

तस्यैकां पर्णबहुलाम् २, ११.

असंशयं प्रज्वलितैः ६, २२.

स युद्धतृष्णातृषितः ६, ३४.

यथोद्दिष्टं हिमवता जगाम तच्च-
कार च । ६, ३५.

उद्धर्त्तुमेतद् वाली वा ६, ३७.

ततः प्रहृष्टवदनः । ७, १९.

रोषगाढेन तु मया ७, ५७.

यथा हि लोकस्य चराचरस्य
दिवाकरो भाति हि रश्मिमाली ।
यथा च सर्वेषु मृगेषु केसरी
तथा नृपेषु त्वमुदारविक्रमः ॥
७, ७७.

स्वरं त्यक्ताक्षरपदम् ८, २४.

शक्ष्यसि तं हि वालिनम् ८, ४४.

इमं मुहूर्त्तं तु मया ८, ९४.

स भ्राजमानो वपुषा ८, ९९.

रम्यैरन्विष्यन्तो यान्ति ९, ७.

मेघसंघातसदृशः ९, १३.

शुश्रावान्तःपुरगतो १०, १.

धैर्यमालम्ब्य धृतिमान् १०, ७.

ततः क्षमो न विरोधः १०, १८.

स चन्द्रतारागहनं ११, १३.

त्वयाऽदृश्येन तु रणे १३, २३.

ये त्वङ्गदस्यानुचराः १५, ६.

शिरश्चोरश्च बाहू च दुःखेन समा-

परिक्षिप्तः शिखिनिभः ६१, २५.
वैनतेयस्य सदृशो ६१, ४५.
विकुञ्च्य कर्णौ मतिमान् ६१, ४७.
सुपुष्पिताग्रैः शिखरैः ६१, ५२.
लाङ्गूलचक्रेण महान् ६१, ६७.
कपिवातश्च बलवान् ६१, ७६.
यतः स याति बलवान् ६१, ८३.
तेन मार्गेण सहसा ६१, ८३.
प्रेक्षकास्ते कपिवरं ६१, ९०.
हिरण्यनाभो मैनाकः ६१, १०५.
राघवस्य कुले तात उदधिः परिवर्धितः। ६१, ११८.
एवमुक्तस्तु हनुमान् ६१, १२७.
कर्तव्ये सागरजले ६१, १४०.
तद्द्वितीयं हनुमतः ६२, ४.
साह्यं कृतं ते सुमहत् ६२, ८.
क्रमतो योजनशतं ६२, ९.
ततः प्रहर्षमतुलं ६२, १०.
समुद्रमध्ये सुरसा ६२, १६.
एवमुक्ता हनुमता ६२, २४.
एवमुक्तः सुरसया ६२, २५.
तस्मिन् मुहूर्त्ते हनुमान् ६२, ३३.
तत्तृतीयं हनुमतः ६२, ३८.
समाक्षिप्तोऽस्मि सहसा ६२, ५३.
निहता सा हनुमता ६२, ६४.
चूतान्नीपान् नागपुष्पान् ६२, ७०.
समुद्रतीरेषु तथा ६२, ७४.
ततः शरीरं वडवामुखाभं विधूय रूपं व्यथयन् मृगद्विजान् ६२,८१.

## १४-सूक्तिसंग्रहः।

न ह्यबुद्धीङ्गितो राजा सर्वभूतानि शास्ति हि। १, १३.

राजानो बहुमित्राश्च विश्वासो नैव च क्षमः। अरयश्च मनुष्येण विज्ञेयाश्छन्नचारिणः॥ १,१७.

विश्वस्तानामविश्वस्ताश्छिद्रेषु प्रहरन्ति हि १, १८.

राजानो बहुदर्शिनः १,१८

भवन्ति परहन्तारो ज्ञेयाः प्राज्ञैः सुसम्मतैः (राजानः)। १, १९.

रोचते यदि वा सख्यं बाहुरेष प्रसारितः। पाणिना गृह्यतां पाणिर्मर्यादा बध्यतां ध्रुवम्॥ ४,११.

ततो रामस्य सुग्रीवः पाणिं जग्राह पाणिना। दृढं सौहृदमालम्ब्य पीडितं चापि सस्वजे॥ ४, १३.

ज्वलयित्वा ततो वह्निं पुष्पैः संपूज्य यत्नतः। तत्रोपन्यस्य सम्प्रीतः सख्यदं सत्यसाक्षिकम्॥ ४,१५.

ततोऽग्निं दीप्यमानं च चक्रतुस्तौ प्रदक्षिणम् । ४, १६.

संगमेनेह ते शपे ४, २४.

धृतिमान् नावसीदति ५, ४.

बालिशस्तु नरो यो वै वैकलव्यमनुवर्तते । स मज्जत्यवशः शोके वाताक्रान्तेव नौर्जले ॥ ५, ५.

एषोऽञ्जलिर्मया बद्धः प्रणयात्त्वां प्रसादये । पौरुषं श्रय शोकस्य नान्तरं दातुमर्हसि ॥ ५, ६.

दुर्लभो हीदृशो बन्धुरस्मिन् काले विशेषतः । ५, १०.

सर्वथाहमनुग्राह्यो देवतानां न संशयः । उपपन्नो गुणोपेतः सखा यस्य भवान्मम ॥ ६, २.

नतु वक्तुं समर्थोऽहं स्वयमेवात्मनो गुणान् । ६, ५.

महात्मनां हि भूयिष्ठं त्वद्विधानां कृतात्मनाम् । निश्चला भवति प्रीतिर्धैर्यमात्मवतामिव ॥ ६, ६.

निर्दोषश्च क्षमश्चैव वयस्यः परमा गतिः । ६, ७.

धनत्यागः सुखत्यागो देशत्यागोऽथवा पुनः । वयस्यार्थे प्रवर्तन्ते स्नेहं दृष्ट्वा तथाविधम् ॥ ६, ७.

उपकारफलं मित्रम् ६, १८.

किमुक्त्वा विस्तरं बहु ७, १०.

सुखितो दुःखितो वापि सख्युर्नित्यं सखा गतिः । ७, १३.

यो मत्तं वा प्रमत्तं वा सुप्तं वा रहितं नरम् । हन्यात् स निरयं गच्छेत् त्वाद्विधं मदविक्रमम् ॥ ८, २९.

स्वरेण वचसा चैव प्रेक्षितेन च वानर । विक्रमेण च वाक्येन व्यक्तिर्नैवोपलभ्यते ॥ ८, ९२.

रिपूणां धर्षणां वीरा मर्षयन्ति न संयुगे । जानीमस्तु स्वकं वीर्यं स्त्रीसमक्षं विशेषतः ॥ ९, ४२.

निवासः स च साधूनां प्रपन्नानां परा गतिः । आर्त्तानां संश्रयश्चैव भाजनं गुणसम्पदाम् ॥ १०, १६.

न ते युक्तमसूयितुम् १०, १९.

अत्रस्थः स वनस्थो वा सर्वथा बन्धुरेव सः । १०, २२.

न शक्यं संयुगे स्थातुमबलेन बलीयसा । ११, ६.

न विव्यथेऽहं तस्मात्तु सुग्रीवप्रतिसंहतात् । शयिष्ये तद्धतो वाऽहं शाययिष्यामि वाऽथ तम् ॥ ११, १४.

अमर्षितानां शूराणां संग्रामेष्वनिवर्तिनाम् । धर्षणामर्षणं कान्ते मरणात्तु विशिष्यते ॥ १२, ३.

धर्मज्ञश्च कृतज्ञश्च न स पापं करिष्यति । १२, ५.

पराङ्मुखवधं कृत्वा को नु प्राप्तस्त्वया गुणः । १२,२९.

न त्वां प्रतिहतात्मानं धर्मबाधमधार्मिकम् । जाने राम दुरात्मानं तृणैः कूपमिवावृतम् ॥ १३, १०.

सतां वेषधरं पापं प्रच्छन्नमिव पावकम् । नाहं त्वां प्रतिजानामि धर्मतत्त्वसमावृतम् ॥ १३, १२.

किं वक्ष्यसि सतां मध्ये कृत्वा कर्म जुगुप्सितम् । १३, १४.

राजहा ब्रह्महा गोघ्नश्चौरः प्राणिवधे रतः । नास्तिकः परिवेत्ता च सर्वे निरयगामिनः ॥ १३, १५.

अभक्ष्याणि च मांसानि त्वादृशैर्धर्मचारिभिः । १३, १६.

पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रेषु राघव । शशकः शल्यको गोधा खड्गः कूर्मश्च पञ्चमः ॥ १३, १७.

चर्म चास्थि च रोमाणि न सेवन्ति मनीषिणः । १३, १८.

दृश्यो वै यदि युध्येथा न प्रच्छन्नो नृपात्मज । अद्य वैवस्वतं देवं पश्येथा निहतो मया ॥ १३, २२.

सूक्ष्मोऽपराधो विज्ञेयः सतां धर्ममनुस्मरन् । हृदिस्थः सर्वभूतानामात्मा वेद शुभाशुभम् ॥ १४, ७.

वागुराभिश्च कूटैश्च पाशैश्च विविधैर्नराः । प्रतिच्छन्नाश्च दृश्याश्च गृह्णन्ति बहवो मृगान् ॥ १४, १०.

विध्यन्त्यभिमुखांश्चापि न च दोषोऽत्र दृश्यते । यान्ति राजर्षयश्चैव मृगयां धर्मकोविदाः ॥ १४, ११.

तस्मात् त्वं निहतो वध्यो मया छन्नेन वानर । अयुध्यमानो युद्धे वा सौम्य शाखामृगो ह्यसि ॥ १४, १२.

अपरं कारणं पश्य यदर्थं त्वं मया हतः । भार्यायां वर्तसे भ्रातुस्त्यक्त्वा धर्मं सनातनम् ॥ १४, १३.

ग्रहणाय कृतः पाशो यद् वै पापं कृतं त्वया । १४, १५.

अन्यैरपि कृतं पापं प्रमत्तैर्वसुधाधिपैः । प्रायश्चित्तं न कुर्वन्ति तेन तत् प्राप्यतेऽशुभम् ॥ १४, १६.

तेन तेषां कृतं पापं नैति सौम्येन कर्मणा । १४, १७.

गमिष्यसि सतां लोकान् शस्त्रपूतान् मनोरमान् । १४, १८.

राजभिः कृतदण्डाश्च कृत्वा पापानि मानवाः । विमलाः स्वर्ग-

मायान्ति सन्तः सुकृतिनो यथा ॥ १४, १९.

दुर्लभस्य हि धर्मस्य जीवितस्य सुखस्य च । राजानो वानरश्रेष्ठ प्रदातारो न संशयः ॥ १४, २०.

तान् न हिंस्यान्न चाक्रोशेन्नाक्षिपेन्नाप्रियं वदेत् । देवा मानुषरूपेण चरन्त्येते महीतले ॥ १४, २१.

पुत्र पश्याद्य पितरं सुहृष्टं च कुरु प्रियम् । दुर्लभं दर्शनं चैव तवैतस्य भविष्यति ॥ १५, ४७.

मूर्ध्नि चैनं समाजिघ्र प्रवासं प्रस्थितो ह्यसि । १५, ५१.

गुणदोषाश्रयं ज्ञात्वा स्वकर्मफलमात्मनः । प्राप्नोति फलमव्यग्रः प्रेत्य सर्वं शुभाशुभम् ॥ १५, ५६.

न शोच्यः शोचते शोच्यं कं वा शोच्योऽनुशोचति । कश्च कस्येह शोच्योऽस्ति देहेऽस्मिन् बुद्बुदोपमे ॥ १५, ५७.

जातस्यानित्यतामेत्य भूतानां च गतागतम् । मानुषेणेह कर्त्तव्यं पण्डितेनेहलौकिकम् ॥ १५, ५९.

न हि दैवमनुत्क्रम्य मानुषेणेह सिध्यति । १५, ६०.

न तु तस्मिन् पदे पुत्रो लोके यत्र स्त्रियः पतिः । न चैतदवगच्छन्ति प्रायशः प्राकृताः स्त्रियः ॥ १६, ६.

न ह्याज्ञापयितुं शक्यः पुत्रो वै पतिवत् स्त्रिया । प्रियो वाप्यप्रियो वापि यथा भर्त्ता सदैव हि ॥ १६, ७.

हितार्थं विप्रियं ह्युक्तो जनन्या कुप्यते सुतः । कुद्धया विप्रियं ह्युक्तो भर्त्ता तु परितुष्यति ॥ १६, ८.

न निवर्त्तितुमिच्छन्ति मातरः सततं सुतम् । पुत्रहस्तात् तु का नारी सत्त्वयुक्ता मनस्विनी । भोक्तुमुत्सहते पिण्डं वैधव्याक्षररूषिता ॥ १६, ९.

लोके हि पतिहीनायाः कृपणं जीवितं स्त्रियाः । १६, १८.

विना शस्त्रं हि नारीणां लोके पतिवधे वधः । १६, १९.

एकश्चैव भवेद् भर्त्ता न तु भर्तृसमः सुतः । १६, २५.

प्रहरन्ति महात्मानो न नारीषु न वानरे । १६, २८.

नात्यर्थं परितप्येऽहं यद्यव्याजहतो भवेत् । इमं व्याजहतं दृष्ट्वा मनो मे परितप्यते ॥ १६, २९.

अस्थाने वालिनं हत्वा युध्यमानं परेण च । न संतप्यति काकुत्स्थः

कृत्वा कर्म जुगुप्सितम्॥ १६,३०.
पलाशसेविना भग्नं त्वया चूतवनं महत्। फलकाले निराशः स्यात् तथा राम कृतं त्वया॥ १६, ३१.
मृतस्यापि हि मे भर्तुः स्पर्श एव विशिष्यते। १६, ३३.
मितं ददाति हि पिता मितं भ्राता मितं सुतः। अमितस्य हि दातारं भर्त्तारं का न पूजयेत्॥ १६, ३४.
मित्राद् वैरं हि रक्षेन दुःखं मित्रं हि रक्षितुम्। मित्रादुत्पतितं वैरं मूलमेव निकृन्तति १६, ४२.
कः क्षत्रियकुले जातः श्रुतवाञ्छिन्नसंशयः। धर्मलिङ्गप्रतिच्छन्नः क्रूरं धर्मं समाचरेत्॥ १६, ५६.
शमो दानं दया धर्मः सत्यं शीलं पराक्रमः। पार्थिवानां गुणा राम दण्डश्चाप्यपकारिषु। १६, ५८.
वयं वनचरा राम मृगा मूलफलाशिनः। नैषा प्रकृतिरस्मासु या मनुष्येषु दृश्यते॥ १६, ५९.
न तेऽस्त्युपचितो धर्मो नार्थबुद्धिरवस्थिता। इन्द्रियैः कृष्यसे हि त्वं सूत्रबद्ध इव द्विजः॥ १६,६०.
भूमिर्हिरण्यं कुप्यं च पशवो विग्रहास्पदम्। १६, ६२.
नयश्च विनयश्चोभौ यस्मिन् सत्यं च सुस्थितम्। विक्रमश्च नयोपेतो देशः कालश्च राजते॥ १६,६५.
ज्येष्ठो भ्राता पिता चैव यश्च विद्यां प्रयच्छति। त्रयस्ते पितरो ज्ञेया धर्मे चेदनुबुध्यसे॥ १६,७१.
यवीयान् सोदरः पुत्रः शिष्यश्च गुणवानपि। एते पुत्रसमा ज्ञेया धर्मेषु हरिपुंगव॥ १६, ७२.
स्वैरवृत्तश्चरेत् कामं तस्य दण्डो वधः स्मृतः। १६, ७५.
विधिं पश्य विधानवत् १६, ७८.
प्रतिज्ञा च कथं शक्या मद्विधेन ह्युपेक्षितुम्। १६, ८.
न वयं स्वे वशे स्थिताः १६, ८३.
सोदर्यं भ्रातृयुक्तं हि तदिदं गतमन्यथा। १६, ८९.
आदितः कृशवृत्तिर्यः कृपणो न स राघव। महात्मा व्यसनं प्राप्तो दीनः कृपण उच्यते॥ १६, १०५.
मास्य द्विषद्भिरेको भूरिष्ठानन्यांश्च संश्रये (? येः)। भर्तुरर्थकरश्चैव चित्तज्ञो भव पुत्रक॥ १६, १२०.
न चातिप्रणयः कार्यः कर्तव्यः प्रणयश्च ते। एकान्ते हि समो दोषस्तस्मादुभयवान् भव॥
१६, १२१.
वीर नैवंविधा भूमौ स्वपन्ति कृत-

लक्ष्मणाः। १७, १०.

शूराय न प्रदातव्या कन्या किल विपश्चिता । शूरभार्या हि मां पश्य सद्यो वैधव्यमागताम् ॥ १७, १३.

पतिहीना तु या नारी कामं भवतु पुत्रिणी । धनधान्यौघपूर्णापि विधवेत्युच्यते जनैः ॥ १७, १७.

स्वकर्मफलभोक्ता हि देहमुत्सृज्य गच्छति १७, ३७.

शोचतः खलु सीदन्ति सर्वार्थाः सर्वदेहिनः । २०, १६.

भव क्रियापरो नित्यं तथा हर्षपरायणः । आस्तिको धर्मशीलश्च व्यवसायी च राघव ॥ २०, १७.

न चाव्यवसितः शत्रून् रक्षांसि च विशेषतः । समर्थस्त्वं रणे जेतुं विक्रमैर्जिह्मचारिणः ॥ २०, १८.

समुद्धर्षय तेजस्त्वं व्यवसायं स्थिरं कुरु । ततः सपरिवारं तं निःशेषं कुरु राक्षसम् ॥ २०, १९.

सर्वमासगतं गर्भं भास्करस्य गभस्तिभिः । रसं सर्वमुपादाय द्यौः प्रसूते रसायनम् ॥ २१, ३.

अकाले तादृशं मित्रं नाहं दुःखे वियोजये । २१, ४३.

उपकारेण वीरो हि प्रतिकारेण युज्यते। कृतं ह्युपकृतं हन्ति लोकेष्वेवासतां मनः ॥ २१, ४६.

यस्य दण्डश्च कोषश्च मित्राण्यात्मा पुरं जनः । पूर्णान्येतानि सर्वाणि स राज्यफलमश्नुते ॥ २२, ११.

यो हि कालाद्यतीतेषु मित्रकार्येषु वर्तते । स कृत्वा महतोऽप्यर्थान् न मित्रार्थेषु युज्यते ॥ २१, १३.

मनसापि हि कार्यार्थं यः काले प्रतिपद्यते। स राजा बुद्धिसम्पन्नः परेषां मूर्ध्नि वर्तते ॥ २३, १४.

अर्थिनां याचमानानां पूर्वं चाप्युपकारिणाम् । आशां संश्रुत्य यो हन्ति स लोके पुरुषाधमः ॥ २३, २८.

शुभं वा यदि वा पापं वाक्यं यः समुदीरितम् । सत्यवाङ् नाभिजानाति स लोके पुरुषाधमः ॥ २३, २९.

कृतार्था ह्यकृतार्थानां मित्राणां न भवन्ति ये। तान् मृतानपि क्रव्यादा कृतघ्नान् नोपभुञ्जते ॥ २३, ३०

समये तिष्ठ सुग्रीव २३. ३३

न चैव राज्यं त्रिगुणाय देयम् २३, ३८.

मित्रं त्वस्थानकुपितं जनयत्येव

संभ्रमम् । २५,६.
दुष्करं सर्वथा मित्रं कृतं दुरनुपालनम् । अनित्यत्वात्तु चित्तस्य प्रीतिरल्पेन भिद्यते ॥ २५, ७.
न स क्षमः कोपयितुं यः प्रसाद्यः पुनर्भवेत् । कृतोपकारं स्मरता कृतज्ञेन विशेषतः॥ २५, २१.
सत्त्वाभिजनसम्पन्नः सानुक्रोशो जितेन्द्रियः । कृतज्ञः सत्यवादी च राजा लोके महीयते ॥ २७, ७.
यस्तु राजा स्थितो धर्मे मित्राणामुपकारिणाम् । मिथ्याप्रतिज्ञां कुरुते को नृशंसतरस्ततः २७,८.
पञ्च पश्वनृते हन्ति दश हन्ति गवानृते । शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥ २७, ९.
हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन् । सर्वं भूम्यनृते हन्ति मास्म भूम्यनृतं वदेत् ॥ २७,१०.
आत्मानं स्वजनं हन्ति पुरुषः पुरुषानृते । गवानृतेन तुल्यं हि पुरुषानृतमुच्यते २७, ११.
पूर्वं कृतार्थो मित्राणां न तत् प्रति करोति यः । कृतघ्नः सर्वभूतानां स वध्यः प्लवगेश्वर ॥ २७, १२.
ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते तथा । निष्कृतिर् विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥ २७, १४.
प्रमत्तश्चातिरक्तश्च यथा स्यात् प्राकृतस्तथा । २७, १६.
को हि विज्ञानसम्पन्नो ह्यहलोकपरावरः । प्रसज्जेत् कामभोगेषु यथा त्वमिह वानर ॥ २७, २१.
न कश्चिन्नापराध्यति । २८, ११.
तमोवशगतानां हि क्षन्तव्यं स्वच्छचेतसा । २८, २१.
नरदेवस्य भर्तुश्च मित्रस्य जयतांवर । कृते न प्रतिकुर्याद्यः पुरुषाणां स दूषकः ॥ ३१, ३०.
अवश्यं क्रियमाणस्य कर्मणो दृश्यते फलम् । विक्लवत्वं न गन्तव्यं न हि नो धर्षणं क्षमम् ॥ ४०, ८.
अर्थिनां सम्प्रपन्नानां कुरु धर्ममनुत्तमम् । म्रियमाणान् निराहारान् संजीवय तपोधने ॥ ४२,२२.
चरन्त्याश्च इमं धर्मं न कार्यं मम केनचित् । एतेनैव कृतं मह्यं यद् विश्रान्तं श्रमातुरैः ॥ ४३, १९.
त्वं हि नः परमा गतिः ४४, ५.
न क्षमन्त्यपराधानां प्रधानानां नराधिपाः ॥ ४५, २०.
न विग्रहं समं प्राहुर्दुर्बलस्य बलीयसा । आत्मरक्षाकरीं तस्माद् बुद्धिं गृह्णाति दुर्बलः ॥ ४६, १३.

सखा पाणिगृहीतश्च कृतकर्मा महायशाः । न स्मृतो राघवो येन स कस्य सुकृतं स्मरेत् ॥ ४७, ५.

विधिः किल परो लोके विधिनैवोपपद्यते । ४८, ४.

उपकारं हि कुर्वन्ति साधवः स्वजने सदा । ४८, २१.

अस्मदीयैः शरीरैस्त्वं कुरु कार्यं यथासुखम् । ४६, २२.

जरया तु हतं तेजः प्राणास्तु शिथिला मम । ५०, १५.

न च याच्ञाभिपन्नानां प्रहर्ता भुवि विद्यते । नीचेष्वपि जनः कश्चित् किं पुनर्मद्विधा द्विजाः ॥ ५१, १८.

अपक्षो हि कथं पक्षी कर्म किञ्चिदुपक्रमेत् । ५१, २३.

भवतां तु समग्राणां कर्तुं किञ्चिन्न दुष्करम् । ५१, ३४.

तदलं कालसङ्गेन क्रियतां बुद्धिनिश्चयः । ५१, ३५.

नहि कर्मसु सज्जन्ते बुद्धिमन्तो जितेन्द्रियाः । ५१, ३५.

कृते पुरुषकारे हि मरणं नाभिजायते । ५१, ३७.

स्वस्ति वोऽस्तु गमिष्यामि कृतार्थाः सन्तु वानराः । ५४, २८.

न विषादे मनः कार्यं विषादो विषमुत्तमम् । खादयत्यपि तज्ज्ञं तु बालं क्रुद्ध इवोरगः ॥ ५६, १३.

यो विषादं प्रसहते विषमे प्रत्युपस्थिते । तेजसा तस्य हीनस्य पुरुषार्थो न सिध्यति । ५६, १४.

सर्वस्य वृद्धस्य बलं पौराणं यौवने गते । आचक्षाणस्य बहुधा हास्यं भवति वानराः ॥ ५६, ५१.

नहि प्रेषयिता तात प्रेष्यैः प्रेष्यः कथं भवेत् । ५६, ७३.

स्वामी किलात्र सैन्यस्य गतिरेका प्लवङ्गम । ५६, ७४.

मूलमर्थस्य संरक्ष्यमेष कार्यविनिश्चयः । मूले हि सति सिद्ध्यन्ति गुणाः पुष्पफलादयः ॥ ५६, ७६.

वयं भवन्तमाश्रित्य समर्था अर्थनिश्चये । ५६, ७९.

येन ते वीर वर्योऽहं न किञ्चित् परिहास्यति । ५७, ८५.

यस्तु विक्रमतेऽशक्तो विक्रमे समुपस्थिते । पर्जन्यमिव भूतानि लोकस्तमनुजीवति ॥ ५६, ३६.

यो युक्तो योगशास्त्राभ्यां प्रयुक्तः पौरुषेण च । कर्मणा चाप्युपायज्ञः सोऽस्यां धुरि नियुज्यते । तस्य पौरुषमश्नन्ति मित्रस्वजनबान्धवाः ॥ ५७, ३८.

कथ्यतां त्रिषु लोकेषु त्वद्यशः पुण्यकर्मभिः। ५७, ४२.

यशसा योजयात्मानं हर ज्ञातिसुदुष्कृतम्। ५७, ४३.

कृते च प्रतिकर्तव्यमेषा तात सतां गतिः। ६१, ११९.

अतिथिः प्रतिपूजार्हः प्राकृतोऽपि विजानता। धर्मं जिज्ञासमानेन किं पुनर्यादृशो भवान्॥ ६१,१२५.

प्रीतिं च बहुमन्यस्व प्रीतोऽस्मि तव दर्शने। ६१, १३८.

यस्य ह्येतानि चत्वारि वानरेन्द्र यथा तव। धृतिर्धार्ष्ट्यं बलं दाक्ष्यं स कर्मसु न सीदति॥ ६२, ६३.



# १५-संशोधन-पत्रिका ।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७ | ६ | विज्ञेया दुष्टता | विज्ञेयाऽदुष्टता |
| १६ | ३ | निर्यास्तिः | निर्या (? पि) तः |
| १७ | ४ | २९ | २८ |
| १९ | ८ | संप्रहृष्टमना | संप्रहृष्टमनाः |
| २९ | १२ | ०ब्रीवत् | ०ब्रवीत् |
| ,, | १५ | ४८ | ४१ |
| ३१ | ५ | व्रवीमि | ब्रवीमि |
| ३२ | १२ | किं निमित्त० | किं-निमित्त० |
| ३३ | १५ | पर्वजो | पूर्वजो |
| ,, | १८ | यधि | युधि |
| ,, | १६ | त | तं |
| ३५ | ६ | मे | मां (टी० पाठः) |
| ,, | १० | श्रुतं | श्रुतं (?त्वा) |
| ३७ | १ | स्निग्धमेव | स्निग्धमेवं |
| ,, | १५ | शर्क्तिः | शक्तिः |
| ३८ | ३ | शत्र० | शत्रु० |
| ,, | ५ | रुधिरौघेन | टि० पाठः |
| ४२ | १७ | युद्धे | युद्धे |
| ४३ | ६ | भर्मि | भूमिं |
| ४४ | १४ | मद् दोरय | मद्दोरयं |
| ४५ | १० | प्रतिवालि० | प्रति वालि० |
| ,, | ,, | ३९ | ३८ |
| ४६ | ४ | पत्रिणो | पत्रिणा |
| ,, | १३ | काय | कायं |
| ,, | १४ | ४९ | ४८ |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| ४८ | १४ | ५६ | ६६ |
| ,, | १७ | सुग्रीवं | सुग्रीव |
| ,, | १८ | ५८ | ६८ |
| ५३ | १५ | वजुलै० | वञ्जुलै० |
| ६४ | ७ | क्लीवो | क्लीबो |
| ,, | ६ | बिंध्य० | विन्ध्य० |
| ६५ | ५ | तारावोक्यं | तारावाक्यं |
| ६६ | ७ | यो कामस्य | योद्धुकामस्य |
| ७० | १ | एवं विधेन | एवंविधेन |
| ७१ | ३ | ०पर्वणातं | ०पर्वणा |
| ८६ | १३ | व | वै |
| ९० | १७ | तंतो | ततो |
| ९१ | ५ | सन्यस्त० | न्यस्त० |
| ११२ | १६ | ० षिच्य स्वराज्ये | ०षिच्यस्व राज्ये |
| १२० | १४ | संचारिर्धारा० | संचारिधारा० |
| १२५ | ८ | ० रसावगाढं | ० रसावगाढम् |
| १२७ | ११ | ह्यपकृतं | (?ह्यु)पकृतं |
| १३१ | ६ | सृजतो० | (? सजते०) |
| १४० | १ | सालास् | सालांस् |
| १४१ | ७ | ०दण्ष्ट्रा | ०दंष्ट्रा |
| १४२ | १६ | ०दोब्रऽवीत् | ०दोऽब्रवीत् |
| १४४ | ५ | मन्त्रिणा | मन्त्रिणां |
| १५० | १७ | ० कामैः फलैः | ०कामफलैः |
| १५६ | १० | मूर्खानाम् | मूर्खाणाम् |
| १६० | १८ | व | वै |
| १६७ | ४ | ०द्भिरं | ०द्भिर् |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १६८ | १५ | चोद्यतम | चोद्यतम् |
| १६९ | १२ | सदक्कुश्नाति | सकृदश्नाति |
| १७९ | २५ | ०मैनाश्चक० | ०मनाश्चैक० |
| १८३ | ४ | स वेदिका | सवेदिका |
| १८८ | १९ | हे न् | हेमान् |
| „ | २० | कं ान् | कंधरान् |
| „ | २१ | अभ | अ भ च |
| १९१ | १५ | पार | पारं |
| २०० | ६ | गताम्बुदः | गताम्बुदे |
| २०४ | २ | ततरतक्ष० | ततस्तक्ष० |
| २०७ | १० | ओवध्य० | ओषध्य० |
| २१३ | १४ | हिमशैलवातं० | हिमशैलावतं० |
| २२२ | ४ | धृतमण्डोदः | घृतमण्डोदः |
| २२६ | १५ | परस्पर | परस्परम् |
| „ | १६ | १ | १४ |
| २३३ | १० | संच्छद्या | संछाद्य |
| २३४ | १६ | ( ? द्वां ) | ( ? द्वां ) |
| २५७ | १ | हंरिपुङ्ग० | हरिपुङ्ग० |
| २५८ | १० | विर्निगन्तुं | विनिर्गन्तुं |
| २५६ | ७ | १२ | ११ |
| २६१ | १ | बानरास्तु | वानरास्तु |
| २६४ | ३ | ४५ | ८५ |
| २६५ | ११ | पुरन्दम् | पुरन्दरम् |
| २६७ | १८ | , भ च-।वस्वौक० | भ च-वस्वौक० |
| २७२ | ६ | ० द्विजः | ०द्विजः |
| „ | १५ | सीतां प्रवादेन | सीताप्रवादेन |
| २७६ | ३ | विचिन्वताम | विचिन्वताम् |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २८० | ५ | ० त्वाच्छुत्वा | ० त्वाच्छ्रुत्वा |
| २८३ | ६ | गृद्धराज्ञां | गृद्धराजां |
| २८७ | ६ | वामपर्श्वे | वामपार्श्वे |
| २९२ | ८ | अभ्यासाच्० | अभ्याशाच्० |
| ३०९ | १३ | दृश्यते | ददृशुः |
| ३११ | ४ | गमिष्यामि | गमिष्यामो |
| ३११ | ६ | विषसाद | निषसाद |
| ३१३ | ३ | मैन्दश्च च | मैन्दश्च |
| ३१४ | ६ | नैवंगतं | नैवंगते |
| ३१४ | १४ | नवत्येव | नवतिं च |
| ३२१ | १० | विशालक्ष्याः | विशालाक्ष्याः |
| ३३० | १८ | उरुवा० | ऊरुवा ० |
| ३३५ | १४ | हनुमत् | हनुमन् |
| ३३८ | १ | ददर्शे | ददर्श |
| ३४० | ९ | ० श्चानु मु० | ०श्चानुमु० |
| ३४१ | ८ | चौषधजलानि | चौषधजालानि |
| ३४२ | १२ | ० स कान्तार० | ० सकान्तार० |
| ३४३ | १ | ०व्याघृर्णमानस्य | ०व्याघूर्णमानस्य |
| ३४६ | ६ | ० मांस्तोदयदा० | ० मांस्तोयदा० |
| ३४७ | ३ | ० र्मार्गमवा० | ० र्मार्गमिवा० |
| ३४८ | १ | सहसा विद्धं | सहसाऽऽविद्धं |
| ३४९ | १० | रोदसि | रोदसी |
| ३४९ | १३ | ०स जलदं० | ०सजलदं० |
| ३५१ | ५ | ऐक्ष्वाकु० | ऐक्ष्वाक० |
| ३५३ | १० | छादिस्तेन | छादितस्तेन |
| ३५८ | १७ | ०हरेः | ० हरे ! |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३५९ | ५ | ०र्यसङ्कुशां | ०र्यसङ्कुशशां |
| ३५९ | ९ | दंष्ट्रा करालं० | दंष्ट्राकरालं० |
| ३६० | ८ | रामं च क्लिष्टकारिणं | रामस्याक्लिष्टकर्मणः |
| ३६१ | ११ | तं दृष्ट्वा | तद्दृष्ट्वा |
| ३६४ | ६ | याछाग्राहि | छायाग्राहि |
| ३६४ | ११ | ५३ | ५६ |
| ३६५ | १७ | तद्दृष्ट्वा | तद् दृष्ट्वा |
| ३६६ | ५ | ० ददर्श सः | ददर्श ह |
| ३६६ | ११ | ददर्शापतन्नेव | ददर्शापरन्नैव । |

## सूची-संशोधन-पत्रिका

| पृष्ठे | स्तम्भे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| २ | १ | ८ | जाम्बवान्- | जाम्बवत्- |
| ७ | २ | ११ | मरुधन्वा- | मरुधन्वन्- |
| „ | „ | १७ | रत्नवान्- | रत्नवत्- |
| १२ | २ | २३ | ऋक्ष- | ऋक्ष- |
| १५ | १ | १२ | धनु - | धनुस्- |
| १६ | २ | २० | अधः- | अधस्, |
| १७ | २ | ३ | अनु√मान् | अनु√मानि |
| १६ | २ | २२ | अविदूः- | अविदूरतस् (:) |
| २० | १ | २५ | आ√ऋच्छ् | आर्छत्- |
| २२ | १ | ५ | आहारयत्- | आ√हारि |
| २२ | १ | ७ | इक्ष्वाकव- | इक्ष्वाकु- |
| २४ | १ | १ | कन्दरोदरकूटवान्- | कन्दरोदरकूटवत्- |
| „ | २ | २ | कर्मविशेषवित्- | कर्मविशेषविद्- |
| ७५ | १ | २२ | काशाभि ... | कशाभि... |
| ७७ | १ | १ | फालम् | फलम् |
| ८१ | १ | ३ | खादयतिः | खादयति |
| „ | १ | ११ | कुब्रं | कुब्रं |

# Price list of the Publications OF THE RESEARCH DEPARTMENT D.A-V. COLLEGE, LAHORE.

1. *Atharvavedeeya-Panca-Patalikaa*, edited by Bhagawad-datta. It is an invaluable work for the textual criticism of the Atharva-Veda. (out of stock) Rs. 1-8.

2. *Lectures on the Rig-Veda* (in Hindi), by Bhagawad-datta. Rs. 1-4.

3. *Jaimineeya—Talavakaara-Upanishad Braahmana:*—A Devanaagaree reprint of Dr.Oertel's edition by Ramadeva. Rs.2-8.

4 *Dantyoshthavidhi*, edited by R. G. Shastri. It is helpful in the critical study of the Atharva-Veda. As. 8.

5. *Maandukee-Shikshaa*, edited by Bhagawad-datta. It is a treatise on the phonetics of the Atharva-Veda. Re. 1.

6. *Brihat-sarvaanukramanikaa*, edited by R.G. Shastri. It is an indispensable work for a critical understanding of the Atharva-Veda. Rs. 4.

7. *Vaalmeeki-Raamaayana* (North-Western Recension), critically edited for the first time from original Mss. with a series of appendices giving useful historical and geographical data.

Vol. I. Ayodhyaa-Kaanda, edited by Rama-labhaya. Rs.7-8

Vol. II. Baala-Kaanda, edited by Bhagawad-datta. Rs. 5.

Vol, III. Aaranya-Kaanda, edited by Bhagawad-datta and Vishva-Bandhu Shastri. Rs. 7-8

Vol. IV. Kishkindhaa-Kaanda, edited by Vishva-Bandhu Shastri. Rs. 7-8

'...the N.-W. Recension (of the Raamaayana) appeared as the oldest one......indices at the end are a new and happy departure. No work comes nearer to my heart than the Ramaayaana. Here is lying collected the very best of India, mind and heart." *S. Levi.*

"The text of the Raamaayana in your edition is a great improvement"—*Jolly.*

8. *Vedic Kosha*, by Hans Raj Rs. 12.

It is a Concordance of the etymological, lexicographical,

mythological, scientific and ethical passages and other useful material contained in the Braahmana literature. It renders conveniently available highly helpful store-house of information.

"The Vedic Kosha is another treasure...my own researches would have been so much easier with such a Kosha...no line of importance has escaped notice...is a capital work." *S. Levi.*

"Especially the Vedic Kosha is a very valuable repository of Vedic tradition"—*Bloomfield.*

"A most useful piece of work is also the Vedic Kosha, what a help it will be to all students of the Veda and of the Vedic religion"—***Winternitz.***

9. *Kaathakagrihya-Sootra,* edited by the late Dr. W. Caland. Rs. 7.

10. ***A History of Vedic Literature*** (in Hindi), by Bhagawad-datta, in two parts. Rs. 5. each.

11. *Caaraayaneeya-Mantraarshaadhyaaya:*—an ancient anukramani of the seers of the Caarayaneeya recension of the Yajur-Veda. Re. 1.

12. ***Rig-Veda–bhaashya,*** of the Pre-Saayana, Udgithaachaarya, Book, X, hymns, V—XXXIV pp 112. Rs. 3.

13. *Shryanka-Kaavya,* by Mishra Krishna Kaura. It is an old, interesting narration in Sanskrit poetry of the life activities of the Founder teachers of the Sikh religion. It was composed in the year 1801. Re. 1.

14. A ***History af Sanskrit Literature:*** ( in Hindi ), by Veda Vyasa. Rs. 3.

15. ***Vishaala–bhaarata*** ( in Hindi ), by Veda Vyasa. It gives a vivid description of the Hindu civilisation in Cambodia in Indo-China. Rs. 3.

16. ***Avesta: HAOM-YASNA IX.*** Text in Devanaagree with Skt. Chaayaa and Hindi translation by Raja *Ram.* Re. 1.

Kindly address your order to

THE MANAGER BOOK DEPOT,
RESEARCH DEPTT, D. A.-V. COLLEGE,
**Lahore (India)**